प्रार्थयित्वाथ सेनान्यं नमस्कृत्वा पुनः पुनः ।
साधुवासाधु वा कर्म यद्यदाचरितं मया ॥ ११२ ॥

तत्सर्वं देवदेवेश गृहाणाराधनं परम् ।
पूजाफलं तु तत्सर्वमात्मना सह बुद्धिमान् ॥ ११३ ॥

निवेदयेत्तु सेनान्यै करे पुष्पान्वितैर्जलैः ।
एककालं द्विकालं वा त्रिकालं वा समर्चयेत् ॥ ११४ ॥

उत्तमोत्तममेवं स्यान्नवकालार्चनं मुने ।
वित्तशाठ्यं न कुर्यात्तु यथाविभवविस्तरम् ॥ ११५ ॥

अर्धयामे महासेनं पूजां कुर्याद्विशेषतः ।
तत्पश्चात् क्षेत्रपालं च सुमित्रं पूजयेद्गुरुः ॥ ११६ ॥
सौख्यं कुर्यात्तदन्तेषु शास्त्रदृष्टेन वर्त्मना ।
एवं क्रमेण विधिवदुत्तमाराधनं स्मृतम् ॥ ११७ ॥
समृद्धिदं ताण्डवान्तं बल्यन्तं शान्तिकं[1] भवेत् ।
हविष्यन्तमशक्तश्चेत् दीपान्तं वापि पूजयेत् ॥ ११८ ॥
एवं यः कुरुते मर्त्यः सपुण्यां गतिमाप्नुयात् ।
भवेद् विप्रः सुवेदाढ्यो राजा विजयमाप्नुयात् ।
धनं वैश्यस्तथाप्नोति शूद्रः सुखमवाप्नुयात् ॥ ११९ ॥

इति कुमारतन्त्रे नित्यपूजा विधिर्नाम पञ्चमः पटलः

---

1 शान्तकं

## षष्ठः पटलः

### अथ नैवेद्यविधिः

अतः परं प्रवक्ष्यामि नैवेद्यविधिमुत्तमम् ।
ग्रामवृद्धिकरं पुण्यं राजराष्ट्रविवर्धनम् ॥ १ ॥

व्रीहिवेणुप्रियङ्गूश्च नीवारं यवमेव च ।
गोधूमं षड्विधं प्रोक्तं नैवेद्यं षण्मुखप्रियम् ॥ २ ॥

आत्मनो हितमन्विच्छेत् प्राग्द्रव्यं यत् सुपक्वकम् ।
यो ददाति गुहायैव तां तां वृद्धिमवाप्नुयात्[1] ॥ ३ ॥

अदत्वा येन भुक्तं चेत् तद्द्रव्यं क्षीयते भृशम् ।
नित्यं नैमित्तिकं काम्यं नैवेद्यं त्रिविधं स्मृतम् ॥ ५ ॥

नित्यं नवविधं प्रोक्तं तथा नैमित्तिकं तु वा[2] ।
यथेष्टं काम्यमित्युक्तं तेषां भेदमिहोच्यते ॥ ५ ॥

नैवेद्यमाढकं पक्वं मध्यमं चाधमं[3] स्मृतम् ।
द्विगुणं त्रिगुणं तस्मिन् नैवेद्यं मध्यमोत्तमम् ॥ ६ ॥

अर्धभारेण नैवेद्यं मध्यमाधममुच्यते ।
भारं भारार्धकं प्रोक्तं मध्यमे मध्यमोत्तमम् ॥ ७ ॥

त्रिभारं तण्डुलैः पक्वमुत्तमाधममुच्यते ।
षड्भारद्वितयं चान्नमुत्तमे मध्यमोत्तमम् ॥ ८ ॥

---

1 समाप्नुयात् 2 तथा 3. अधमादधमम्

एककालस्य नैवेद्यमेवमेव महामुने ।
नित्यमेव समाख्यातं नैमित्तिकमथ श्रृणु ॥ ९ ॥

खारिषट्कं समारभ्य तेन वृद्धिं नवोदितम् ।
नवद्विगुणभारान्तं मध्यमादित्रयं त्रयम् ॥ १० ॥

एवं नैमित्तिकं प्रोक्तं श्रृणु काम्यं महामुने ।
प्रार्थितं येन यन्मात्रं तावन्मात्रं हि काम्यकम् ॥ ११ ॥

कुडुवं तु चतुः प्रस्थं पैशाचान्नं प्रकीर्तितम्[1] ।
द्विःप्रस्थं चरुसंज्ञं स्यात् आढकं हविरुच्यते ॥ १२ ॥

चातुर्वर्ण्योद्भवा नारी पतिपुत्रवती तथा[2] ।
यदा सुमङ्गली कन्या व्रीहिप्रहरकर्मणि ॥ १३ ॥

आदित्यरश्मिभिस्तप्तं धान्यं शोधितलूखले[3] ।
निक्षिप्य मुसलं ग्राह्य कुट्टयेत्प्रागुदङ्मुखः ॥ १४ ॥

तुषानपोह्य शूर्पेण तुषकम्बुविवर्जितम् ।
विशदं तण्डुलं ग्राह्य शुद्धात्मा परिचारकः ॥ १५ ॥

नवभाण्डानि संक्षाल्य तेषु निक्षिप्य तण्डुलान् ।
वस्त्रपूतेन तोयेन हृदा क्षाल्य पुनः पुनः ॥ १६ ॥

तण्डुलाद्द्विगुणं तोयं कल्पयेत् बीजमुख्यतः ।
तण्डुलैरर्चयेच्चुल्लीं सद्येन परिचारकः ॥ १७ ॥

1 प्रकल्पितम्   2 मता   3 शुद्धमुलूखले



चुल्ल्या काष्ठं समानीय वह्निं प्रज्वाल्य चास्त्रतः ।
केशकीटोपविद्धं च शर्करा तुषसंयुतम् ॥ १८ ॥

अतिपक्वमपक्वं च नैवेद्यं न प्रकल्पयेत् ।
शुद्धान्नं पायसं मुद्गं गुळान्नं कृसरान्नकम् ॥ १९ ॥

उपदंशं ततो वक्ष्ये श्रृणु कौशिक सुव्रत ।
मुद्गमाषकुलुत्थं च निष्पावं शिम्बमाढकम् ॥ २० ॥

तथा वै राजमाषं च सूपमेवं प्रकल्पयेत् ।
पनसालाबुकदली बृहती द्वयमेव च ॥ २१ ॥

आम्रोर्वारुककूश्माण्डं कारवल्ली पटोलिका ।
मुद्गनिष्पावकफलं वल्लीमूलं सुपक्वकम्॥ २२ ॥

कन्दं प्रियङ्गुपिष्टं च यथालाभं प्रगृह्य च ।
सर्वोपदंशकानुक्तान् मरीचिलवणाज्यकान् ॥ २३ ॥

जीरकाम्लरसोपेतान् यथायोगं पचेत् पुनः ।
एतान् संयोज्य विविधान् सूपान् पक्वफलादिकान् ॥ २४ ॥

द्वात्रिंशांशं घृतं चैव सूपं वै षोडशांशकम् ।
अष्टांशांशं दधिक्षीरं तदर्धं शर्करा मधु ॥ २५ ॥

पक्वान्नसमये चैव मार्जन्या शोध्य भूतलम् ।
संप्रोक्ष्य चास्त्रमन्त्रेण [1]चित्रशाकादिना युतम् ॥ २६ ॥

1 चित्र

आस्यं वस्त्रेण संच्छाद्य चोत्थाप्य परिचारकः ।
नैवेद्योत्थापने काले यो नरश्च न लङ्घयेत् ॥ २७ ॥

प्रमादात् पतितं चेत्तु सस्यानां नाशनं भवेत् ।
तद्द्रव्यं वर्जयित्वा च मूलमन्त्रैः शतं जपेत् ॥ २८ ॥

पुनः पच्याथ नैवेद्यं तद्द्रव्यं प्रतिरूपकम् ।
मण्डपे दक्षिणे भागे मण्डले विन्यसेत् क्रमात् ॥ २९ ॥

दारुहस्तेन दर्व्या वा पात्रमन्नेन पूरयेत् ।
सौवर्णं राजतं कांस्यमथवा कदळीदळम् ॥ ३० ॥

सर्वव्यंजनसंयुक्तं त्रिपाद्यूर्ध्वे निधापयेत् ।
तुर्यांशं भाण्डतोनीत्वा शेषं त्र्यंशं निवेदयेत् ॥ ३१ ॥

नित्यमेवं समाख्यातं काम्यं नैमित्तिकं शृणु ।
स्थलशुद्धिं ततः कृत्वा प्रोक्षयेदस्त्रमन्त्रतः ॥ ३२ ॥

महीं सम्यक् परिस्तीर्य घृतेनैवाभिघारयेत् ।
पात्रशेषं त्रिभागैकं नीत्वा शेषं नयेत्ततः ॥ ३३ ॥

सर्वोपदंशसंयुक्तं प्रभूतं हविरुत्तमम् ।
अस्त्रं दशासु विन्यस्य चास्त्रमुद्रां प्रदर्शयेत् ॥ ३४ ॥

भक्ष्यं भोज्यं च लेह्यं च पेयं चैव चतुर्विधम् ।
दापयेत् कार्तिकेयाय हृदयेन तु देशिकः ॥ ३५ ॥



नैवेद्यविधिराख्यातो वक्ष्ये पानीय लक्षणम् ।
निवेद्यायामृतं शुद्धे मृद्भाण्डे पूरयेज्जलम् ॥ ३६ ॥

वस्त्रपूतं सुशीतं च सर्वद्रव्यसमायुतम् ।
नैवेद्यान्ते तु सेनान्ये पानीयं दापयेद्धृदा ॥ ३७ ॥

निवेदितानि सर्वाणि सुमित्राय प्रदापयेत् ।
अक्षद्वयप्रमाणान्तं बलिदानं प्रकीर्तितम् ॥ ३८ ॥

द्वारस्य दक्षिणे पार्श्वे सुदेहाय प्रदापयेत् ।
द्वारस्य वामपार्श्वे तु सुमुखाय प्रदापयेत ॥ ३९ ॥

गजेन्द्राय ददेदग्रे महाशास्त्रेऽग्निगोचरे ।
याम्ये पितामहायै मातृभ्यां निरृते ददेत् ॥ ४० ॥

पश्चिमे स्यादगस्त्याय ज्येष्ठायै वायुगोचरे ।
सौम्ये नारदायैव भास्करायैशगोचरे ॥ ४१ ॥

ततः पुरःस्थिते पीठे बलिं दद्याद् विशेषतः
यक्षराक्षसपैशाचाः भूतगन्धर्वकिंनराः ॥ ४२ ॥

पितृदानवनागाश्च तेन प्रीतिं प्रयान्तु ते ।
ब्रह्मादीशानपर्यन्तं तत्तन्नाम्ना बलिं क्षिपेत् ॥ ४३ ॥

पुनराचमनं कृत्वा मुखवासं गुहप्रियम् ।
लवङ्गचूर्णकर्पूरलघुखण्डस्य चूर्णकम् ॥ ४४ ॥

फलत्रयाणां चूर्णं च संग्राह्य सुविचक्षणः ।
भोजनानन्तरे दद्यात् मुखवासं हृदाणुना ॥ ४५ ॥

ताम्बूलं दापयेत् तस्मै क्रमुकं प्रस्थपूरितम् ।
पत्रं चतुर्गुणं दद्यात् तज्जिह्वाघ्राणवर्जितम् ।
कर्पूरादिसमायुक्तं दापयेत्तु विशेषतः ॥ ४६ ॥

इति श्रीकुमारतन्त्रे नैवेद्यविधिर्नाम षष्ठः पटलः

---

## सप्तमः पटलः

### अथ अग्निकार्यविधिः

अग्निकार्यविधिं वक्ष्ये शृणु कौशिक सुव्रत ।
कुण्डे वा स्थण्डिले वापि होमं कुर्याद्विचक्षणः ॥ १ ॥

गोमयालिप्य वस्त्राद्यैरलंकृत्य मनोहरैः ।
होमद्रव्याणि पात्राणि संपाद्य विविधानि च ॥ २ ॥

लब्धानुज्ञो विशेत् कुण्डं पश्चिमेवाथ दक्षिणे ।
पुण्याहवाचनं कुर्यात् मूर्तिपैः सह देशिकः ॥ ३ ॥

निरीक्षणं प्रोक्षणं च ताडनं चास्त्रमन्त्रतः ।
वर्मणाभ्युक्ष्य चास्त्रेण खननं चावकीरणम् ॥ ४ ॥



हृदापूर्य समाकृष्य वर्मणा सेचयेद् गुरुः ।
अस्त्रेण कुट्टनं चर्म मार्जनालेपने तथा ॥ ५ ॥

मध्यादिपश्चिमान्तेषु शान्त्यातीतादयः कलाः ।
विन्यस्य वर्मणा कुण्डे सूत्रत्रयेण वेष्ट्य च ॥ ६ ॥

कलामयाय कुण्डाय नम इत्यर्चयेद्बुधः ।
रेखात्रयमुदीच्यन्तं प्राच्यन्तं त्वेकरेखया ॥ ७ ॥

अस्त्रेणैव समुल्लिख्य तेन वज्रीकृतं नयेत् ।
पूर्वोदगग्रदर्भाभ्यां हृदा कृत्वा चतुष्पदम् ॥ ८ ॥

इत्यष्टादशसंस्कारं कृत्वा कुण्डाक्षिपाटनम् ।
कवचेन चतुर्दर्भान् तत्कुण्डे विन्यसेद्गुरुः ॥ ९ ॥

कुण्डमध्ये हृदा विद्वान् विष्टरं विन्यसेद्बुधः ।
नाभिमध्ये तु वागीशीं नीलोत्पलदळप्रभाम् ॥ १० ॥

ऋतुस्नातां सकूर्चस्थां ध्यायेत् तन्मूलमन्त्रतः ।
वागीश्वरौ समभ्यर्च्य कुण्डस्याग्रेऽग्निपात्रकम् ॥ ११ ॥

निधाय चास्त्रमन्त्रेण क्रव्यादांशं परित्यजेत् ।
भौतिकं बैन्दवं जाठराग्निमेकाकृतिं नयेत् ॥ १२ ॥

त्रिवारं भ्राम्य तत्कुण्डं त्वग्निपात्रं च बुद्धिमान् ।
वागीशीगर्भनाड्यायां वागीशेन निषिञ्चितम् ॥ १३ ॥

---

1 वर्म

हृदा बध्वा त्रुटीकृत्य तयोराचमनं ददेत् ।
वर्मणेन्धनमाच्छाद्य प्रज्वाल्यास्त्रेण पूजयेत् ॥ १४ ॥

दर्भकङ्कणमस्त्रेण दक्षिणे मेखलोपरि ।
तस्य वामकरं ध्यात्वा रक्षार्थं च निधाय वै ॥ १५ ॥

सद्योजातेन संपूज्य गर्भाधानं हृदा चरेत् ।
तिलाहुतित्रयेणैव पश्चात् पुंसवनक्रियाम् ॥ १६ ॥

वामदेवेन शिरसा समभ्यर्च्य हुनेत्तिलाम् ।
सीमन्तं बहुरूपेण शिखया चैव कारयेत् ॥ १७ ॥

जातकर्मशिरोमन्त्रैः कवचेन च कारयेत् ।
अस्त्रेण प्रोक्ष्य तत्कुण्डं दर्भकङ्कणकं त्यजेत् ॥ १८ ॥

दर्भान् पूर्वोदगग्रांश्च तन्मध्ये मेखलासु च ।
विष्टरान् तत्र परिधीन् विन्यसेदनुपूर्वशः ॥ १९ ॥

मेखलोर्ध्वे चतुर्दिक्षु चतुर्वेदान् प्रपूजयेत् ।
इन्द्रादिलोकपालांश्च विष्टरे स्वस्वदिक्षु च ॥ २० ॥

स्रुक्स्रुवौ च घृतस्थालीं प्रणीतां प्रोक्षणीं तथा ।
समित्कूर्चं चरुं दर्वीं दर्भांश्चैव कमण्डलुम् ॥ २१ ॥

द्रव्यपात्राणि सर्वाणि न्यसेद् वामे कुशोपरि ।
अधोमुखानि पात्राणि द्वन्द्वरूपाणि साधयेत् ॥ २२ ॥



प्रोक्षणीपात्रमादाय जलेनैव प्रपूरयेत् ।
वितस्तिमात्रदर्भाग्रं मध्यग्रन्थिपवित्रकम् ॥ २३ ॥

अङ्गुष्ठानामिकाभ्यां च उदकोत्प्लवनं चरेत् ।
पात्रप्रोक्षणकं कृत्वा पात्रसाधनमाचरेत् ॥ २४ ॥

स्रुक्स्रुवौ च हृदाचार्यःघृतसंस्कारमाचरेत् ।
नाडीसंधानकं कृत्वा चाज्यभागाहुतिं हुनेत् ॥ २५ ॥

परिषिच्य ततो वह्निं मूलेनेध्मान् सकृद्धुनेत् ।
सद्यात्मकैकमन्त्रेण होमयेत् वक्त्रदीपनम् ॥ २६ ॥

वक्त्रसंधानकं कृत्वा वक्त्रैकीकरणं हुनेत् ।
नामकर्म ततोऽस्त्रेण घृतं पश्चाहुतिं हुनेत् ॥ २७ ॥

शिवाग्ने त्वं हुताशेति नाम दद्याद् विचक्षणः ।
उपनिष्क्रामणं पश्चाच्छिरसा कारयेद्बुधः ॥ २८ ॥

प्राशनं हृदयेनैव चौलकर्म शिवाणुना ।
हृदोपनयनं कृत्वा पश्चाद्देशिकसत्तमः ॥ २९ ॥

प्राधान्यं होमकर्माणि मूलमन्त्रेण होमयेत् ।
तत् कुण्डाग्निं विभज्याथ सर्वकुण्डेषु निक्षिपेत् ॥ ३० ॥

शिवाभयेति जुहुयात् प्रत्येकं शतसंख्यया ।
आसनावरणैर्धीमान् सेनान्यं पूजयेत्ततः ॥ ३१ ॥

यद्रूपं तु प्रतिष्ठाप्य तत्तु ध्यानेन बुद्धिमान् ।
कार्तिकेयो विशाखश्च गुहश्चैव सुरान्तकः ॥ ३२ ॥

सेनानीः षण्मुखश्चैव मयूरवाहनस्तथा ।
शक्तिपाणिरिति ख्याता एते वै चाष्टमूर्तयः[1] ॥ ३३ ॥

समिदाज्यचरून् लाजान् सक्तुं चैव तिलं तथा ।
माषमुद्गगुळांश्चैव सर्षपं यवमेव च ॥ ३४ ॥

द्रव्यमेकादशं प्रोक्तं सर्वेष्वेवं विशेषतः ।
समिधं त्वीशमन्त्रेण घृतं वै पुरुषेण तु ॥ ३५ ॥

अघोरेण चरुं हुत्वा लाजं वामेन होमयेत् ।
सक्तुं सद्येन जुहुयात् तिलं हृदयमन्त्रतः ॥ ३६ ॥

माषं च शिरसा हुत्वा मुद्गं च शिखया हुनेत् ।
गुळं कवचमन्त्रेण सर्षपं नेत्रमन्त्रतः ॥ ३७ ॥

यवमस्त्रेण जुहुयात् आचार्यो मूर्तिपैः सह ।
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ॥ ३८ ॥

द्रव्यान्ते व्याहृतिं हुत्वा स्विष्टमग्नौ तु होमयेत् ।
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत् क्रमात् ॥ ३९ ॥

पूर्णाहुतिं ततो हुत्वा वह्निं संप्रार्थयेद्गुरुः ।
ब्रह्मोद्वासनकं कुर्यात् प्रणीतामोक्षणं तथा ॥ ४० ॥

---

1 मूर्तिपाः



नैमित्तिकमिदं प्रोक्तं नित्यकर्म ततः शृणु ।
अग्नौ वा दक्षिणे वापि तथैशान्येऽपि मण्डपे ॥ ४१ ॥

कुण्डे वा स्थण्डिले वापि नित्यहोमं समाचरेत् ।
अश्रं वाथ षडश्रं वा मेखलात्रयसंयुतम् ॥ ४२ ॥

नाभियोनिसमायुक्तं कुण्डं कृत्वा महामुने ।
गर्भाधानादिकं सर्वं पूर्वोक्तविधिना हुनेत् ॥ ४३ ॥

अविच्छिन्नं सदारक्ष्यं नित्याग्निं षण्मुखाय वै ।
प्रणीताघारसमिधं ब्रह्मकूर्चं विनाचरेत् ॥ ४४ ॥

आज्येन चरुणा मन्त्री नित्यहोमं तु कारयेत् ।
आज्यं हृदयमन्त्रेण मूलेनैव चरुं हुनेत् ॥ ४५ ॥

प्रत्येकं षोडशं हुत्वा ब्रह्माङ्गानि ततो हुनेत् ।
महावल्लीं देवसेनां पृथक् पश्चाहुतिं हुनेत् ॥ ४६ ॥

परिवारान् ततो हुत्वा स्विष्टमग्नेति होमयेत् ।
धूपदीपादिभिः स्तोत्रैर्नित्याग्नौ पूजयेद्गुहम् ॥ ४७ ॥

इति श्रीकुमारतन्त्रे अग्निकार्यविधिर्नाम सप्तमः पटलः

———

## अष्टमः पटलः

### अथ नित्योत्सवविधिः

अतः परं प्रवक्ष्यामि नित्योत्सवविधिक्रमम् ।
सर्वलोकहितार्थाय भूपतेर्विजयाय च ॥ १ ॥

स्वर्णेन रजतेनैव कारयेत्ताम्रकेण वा ।
उत्तमं षोडशाङ्गुल्यं मध्यमं द्वादशाङ्गुलम् ॥ २ ॥

अधमं दशाङ्गुलं ज्ञेयं बलिपात्रस्य विस्तरम् ।
ओष्ठमेकाङ्गुलं प्रोक्तं निम्नोन्नतविवर्जितम् ॥ ३ ॥

विस्तारं हि त्रिभागैकं पद्ममष्टदळं भवेत्[1] ।
कर्णिकान्तं त्रिभागैकं कारयेत्तु मनोहरम् ॥ ४ ॥

एवं पात्रं तु संग्राह्य विन्यसेन्मण्डपोत्तरे ।
प्रोक्षयेद्धृदयेनैव बलिपात्रं सलक्षणम् ॥ ५ ॥

प्रातर्मध्याह्नसायाह्ने पुष्पार्घ्यं तु कनीयसम् ।
प्रातर्मध्याह्नयोरन्नं सायेत्वर्घ्यं तु मध्यमम् ॥ ६ ॥

त्रिकालेष्वन्नलिङ्गं चेत् उत्तमञ्चेति कीर्तितम् ।
उत्सेधं द्वादशाङ्गुल्यं नाहं द्व्यङ्गुलमुच्यते ॥ ७ ॥

अग्रं पक्षाङ्गुलं द्वारं गन्धमाल्यैरलंकृतम् ।
तस्मिन् संपूजयेच्छक्तिं गुहास्त्रममितौजसम् ॥ ८ ॥

1 लिखेत्



इन्द्रादीशानपर्यन्तं शकुन्याद्याः प्रपूजयेत् ।
मूलबेरं त्रिभागैकमुत्तमं बलिबेरकम् ॥ ९ ॥

द्वित्र्याङ्गुलविहीनेन मध्यमाधममुच्यते ।
सुब्रह्मण्यस्वरूपं वा स्कन्दरूपमथापि वा ॥ १० ॥

एकवक्त्रं चतुर्बाहुं कमण्डल्वक्षधारिणम् ।
कटिबन्धाभययुतं त्वथवा वरदाभयम् ॥ ११ ॥

सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ।
शक्त्येकया युतं वापि शक्तिद्वययुतं तु वा ॥ १२ ॥

इत्थं रूपं मुनिश्रेष्ठ कारयेद्बलिबेरकम् ।
वस्त्राभरणगन्धाद्यैरलंकृत्य च पुष्पकैः ॥ १३ ॥

नागाश्वरथरङ्गे वा शिबिकायां प्ररोपयेत् ।
सोष्णीषैः सोत्तरीयैश्च सोपवीतैः सुवस्त्रकैः ॥ १४ ॥

मौनव्रतधरैर्विप्रैर्धारयेद्बलिबेरकम् ।
पादुकां लक्षणोपेतां वस्त्राद्यैरुपशोभिताम् ॥ १५ ॥

अस्त्रेण प्रोक्ष्य तस्यां तु मयूरं संप्रपूजयेत् ।
सुस्नातया गणिकया धारयेच्च सुवाससा ॥ १६ ॥

छत्रं ध्वजसमायुक्तं पिञ्छचामरसंयुतम् ।
नानावाद्यसमायुक्तं नानागेयसमन्वितम् ॥ १७ ॥

नानादीपसमायुक्तं नानाभक्तजनैर्युतम् ।
पूर्वाह्णे द्विजवृद्धिः स्यान्मध्याह्ने राजवृद्धिदम् ॥ १८ ॥

रात्रौ विट्शूद्रवृद्धिः स्याद्बलिबेरस्य यानतः ।
भेरी [1]मुरवसंयुक्तं प्रथमं वै प्रदक्षिणम् ॥ १९ ॥

वरनृत्तं द्वितीयस्य गीतेन त्रिःप्रदक्षिणम् ।
ब्रह्मस्थाने मुनिश्रेष्ठ ब्रह्मणस्ताळसंयुतम् ॥ २० ॥

ऐन्द्रे तु समताळं स्यादग्नौ सावरणं भवेत् ।
याम्यायां भृङ्गिणीताळं नैर्ऋत्यां मल्लताळकम् ॥ २१ ॥

वारुण्यां नवताळं स्यात् वायव्यां बलिताळकम् ।
सोमे कौशिकताळं स्यादैशान्यां ढक्करी भवेत् ॥ २२ ॥

प्रदक्षिणत्रयस्यैवं भूर्भुवःस्वः क्रमादिह ।
सर्वेषां प्राणिनां सम्यक् बलदा बलिरुच्यते ॥ २३ ॥

गोपुरद्वारमागत्य शङ्खघोषसमन्वितम् ।
ततःपुरःस्थिते पद्मे त्रिःप्रदक्षिणमाचरेत् ॥ २४ ॥

शनैःप्रदक्षिणं कुर्यान्महापातकनाशनम् ।
उत्सवे बलिकाले च यः करोति प्रदक्षिणम् ॥ २५ ॥

पदे पदेऽश्वमेधस्य फलं प्राप्नोतिमानवः ।
द्वारिनीराजनं कृत्वा प्रविशेदालयं ततः ॥ २६ ॥

1. मुरजः



पादौ प्रक्षाल्य मतिमान् पादुकां शिखिदेवताम् ।
पाद्यादिभिः समभ्यर्च्य बहिर्गायत्रिमन्त्रतः ।
विन्यसेत्पूर्वदेशे तु धूपदीपं प्रदापयेत् ॥ २७ ॥

बलिबेराकृतिं देवं विन्यसेन्मूलबेरके ।
एवं यः कुरुते नित्यं कौमारं लोकमाप्नुयात् ॥ २८ ॥

इति श्रीकुमारतन्त्रे नित्योत्सवविधिर्नामाष्टमः पटलः

---

## नवमः पटलः

### अथ कुण्डलक्षणविधिः

अतः परं प्रवक्ष्यामि कुण्डानां लक्षणं शृणु ।
शतार्धं शतहोमं तु मुष्ट्यारत्नियुतं भवेत् ॥ १ ॥

सहस्रायुतहोमं तु हस्तं हस्तद्वयं क्रमात् ।
कोट्याहुतावष्टहस्तं तदूर्ध्वं नैव कारयेत् ॥ २ ॥

मात्राङ्गुलेन कर्तव्यं विस्तारस्य पदं समम् ।
कुण्डं त्रिमेखलोपेतमेकमेखलमेव च ॥ ३ ॥

वेदाद्युगाङ्गुलं प्रोक्तं मेखलानां तथोन्नतम् ।
योनिं कुर्यात्तदूर्ध्वे तु गजोष्ट्राकृतिवद्बुधः ॥ ४ ॥

वेदाङ्गुलं तु विस्तारमायामं तु षडङ्गुलम् ।
क्रमेण कृशतां याति तारत्रयांशमुन्नतम् ॥ ५ ॥

नाभिं पद्माकृतिं कुर्यात्कुण्डमध्ये विचक्षणः ।
षडङ्गुलं तु विस्तारं तृतीयांशं समुन्नतम् ॥ ६ ॥

योनौ योनिर्न कर्तव्यं पद्मे नाभिं न कारयेत् ।
कोणेषु च न कुर्यात्तु नाभिं तस्याग्निसंमुखम् ॥ ७ ॥

यदाकाराणि कुण्डानि तदाकारास्तु मेखला ।
वेदाश्रं योनिचापाश्रं त्र्यश्रं वृत्तं षडश्रकम् ॥ ८ ॥

पद्ममष्टारकं दिक्षु षडश्रं तु प्रधानकम् ।
पूर्वाग्रं गणसूत्रं च दक्षिणोत्तरमेव हि ॥ ९ ॥

चतुष्पदमिदं सम्यक् तत्कुण्डं चतुरश्रकम् ।
क्षेत्रांशं दशधा कृत्वा दिग्भागं पूर्वतो न्यसेत् ॥ १० ॥

पुनःकोणेषु वेदांशाद्भ्रामयेत्कोणकावधि ।
सूत्रद्वयं प्रयोगाच्च योन्याकारं भवेदिदम् ॥ ११ ॥

व्यासेऽष्टांशाद्द्व्यंशमग्रं पार्श्वयोर्न्यस्य मध्यमात् ।
भ्रामयेत्पार्श्वपर्यन्तं तत्कुण्डं चार्धचान्द्रकम्[1] ॥ १२ ॥

क्षेत्रषड्भागके न्यस्य भागैकं त्वथ पार्श्वयोः ।
तन्मानेन त्रिसूत्रेण त्रिकोणं कुण्डमीरितम् ॥ १३ ॥

1. चन्द्रकम्



न्यासेऽष्टादशभागांशाद्बहिर्विन्यस्य बुद्धिमान् ।
तदश्रं भ्रामयेद्धीमान् वृत्तकुण्डं भवेदिदम् ॥ १४ ॥

क्षेत्रवेदांशपादांशं द्व्यंशं विन्यस्य पार्श्वयोः ।
तस्मात्क्षेत्रार्धमानं तु पार्श्वयोस्तद्द्विमस्तकम् ॥ १५ ॥

कृत्वा तेनैव षट्सूत्रं न्यसेत् षट्कोणकुक्षिकम् ।
कर्णिकादळसंयुक्तं पद्मकुण्डं तु वृत्तवत् ॥ १६ ॥

व्यासे वेदरसांशांशं बहून्न्यस्त्वा समन्ततः ।
कोणार्धं कोणके लिख्य वस्वश्रं वसुसूनता ॥ १७ ॥

मानहीने महाव्याधिरधिके शत्रुवर्धनम् ।
भेदे महद्भयं प्रोक्तं स्फुटिते सस्यनाशनम् ॥
तस्मात्सर्वप्रयत्नेन कुण्डं कुर्यात्सलक्षणम् ॥ १८ ॥

इति श्रीकुमारतन्त्रे कुण्डलक्षणविधिर्नाम नवमः पटलः

———

## दशमः पटलः

### अथ मण्डलविधिः

अतः परं प्रवक्ष्यामि मण्डलस्य विधिं शृणु ।
दीक्षायां तु प्रतिष्ठायां पवित्रारोपणेऽपि च ॥ १ ॥

उत्सवेऽपि च तत्वज्ञः पूजयेन्मण्डले गुहम् ।
चतुरश्रं ततो मध्ये षड्दळं पद्ममालिखेत् ॥ २ ॥

कर्णिकां च त्रिभागैकं पीतवर्णेन कारयेत् ।
श्वेतं पीतं च रक्तं च स्फटिकं श्यामवर्णकम् ॥ ३ ॥

एतैर्वर्णैश्च मतिमान् षड्दळानि च पूरयेत् ।
रजोभिर्विविधैर्वर्णैर्यथाशोभं विभूषयेत् ॥ ४ ॥

मूलेनावाहयेन्मध्ये देवीभ्यां सह षण्मुखम् ।
आसनावरणाद्यैश्च मण्डले पूजयेत् ततः ॥ ५ ॥

श्रीभद्रमण्डलमिदं सुब्रह्मण्यात्मकं शुभम् ।
विप्रादीनां तु सर्वेषां वर्णानां तु प्रशस्तकम् ॥ ६ ॥

गुहदीक्षां ततः कुर्यादेतन्मण्डलसन्निधौ ।
मण्डलेन विधानेन स्कन्दकर्म करोति यः ॥ ७ ॥

नैतत्फलमवाप्नोति साधकेमन्त्रवानपि ।
तस्मात्तत्कर्मसिद्ध्यर्थं मण्डलं कारयेद्बुधः ॥ ८ ॥

इति श्रीकुमारतन्त्रे मण्डलविधिर्नाम दशमः पटलः

———

## एकादशः पटलः

### अथ दीक्षाविधिः

अतः परं प्रवक्ष्यामि गुहदीक्षाविधिं परम् ।
सर्वपापहरम्पुण्यं सर्वकामफलप्रदम् ॥ १ ॥

शिवदीक्षाविधेः पश्चात् गुहदीक्षाञ्च कारयेत् ।
सर्वालङ्कारसंयुक्तं स्नानं कौशेयकोज्ज्वलम् ॥ २ ॥

त्रिपुण्ड्रधारणं शिष्यं हृदा प्रोक्ष्यार्घ्यवारिणा ।
नेत्रं नेत्रेण मतिमान् बन्धयेच्छ्वेतवस्त्रतः ॥ ३ ॥

हृदयेन तु मन्त्रेण दश जप्त्वा सलक्षणम् ।
पूर्वद्वारन्तु विप्राणां क्षत्रियाणां तु दक्षिणम् ॥ ४ ॥

वैश्यानां पश्चिमद्वारं शूद्राणां द्वारमुत्तरम् ।
अन्येषामपि वर्णानां पश्चिमद्वारमुत्तमम् ॥ ५ ॥

शिष्यमन्तः प्रविश्याथ प्रणवेन तु मन्त्रतः ।
दर्भासनम्प्रकुर्याच्च देशिकस्य तु दक्षिणे ॥ ६ ॥

मुमुक्षोरुत्तरं वक्त्रं बुभुक्षोः पूर्वतोमुखम् ।
शिष्यं स्थित्वा च मतिमान् कुर्याद्दीक्षां गुरूत्तमः ॥ ७ ॥

स्कन्दस्य मूलमन्त्रञ्च षडक्षरमतः परम् ।
स्कन्दबीजेन संयुक्तं पञ्चब्रह्मषडङ्गकम् ॥ ८ ॥

ईशानम्मूर्ध्नि विन्यस्य मुखे तत्पुरुषं यजेत् ।
अघोरं हृदि विन्यस्य गुह्ये वामं न्यसेद् बुधः ॥ ९ ॥

सद्योजातं न्यसेत् पादे शिष्यदेहे विचक्षणः ।
हृदयं हृदि विन्यस्य शिरः शिरसि विन्यसेत् ॥ १० ॥

शिखायां तु शिखां न्यस्य कवचः स्तनमध्यतः ।
अस्त्रं हस्तप्रदेशे तु नेत्रं नेत्रद्वये न्यसेत् ॥ ११ ॥

सर्वेषामेव वर्णानामेवं कुर्याद्गुरूत्तमः ।
द्विजादीनां विशेषोऽस्ति वचद्भूरादिमन्त्रतः ॥ १२ ॥

शिरोवदनहृन्नाभिगुह्यपादेषु विन्यसेत् ।
अयं कुमारमन्त्रश्च पुनर्मूर्ध्नि च विन्यसेत् ॥ १३ ॥

मालामन्त्रश्च सर्वाङ्गे विन्यसेन्मन्त्रवित्तमः ।
माते कुमारमन्त्रश्च हृदये विन्यसेद्बुधः ॥ १४ ॥

पुनश्च तोयसंयुक्तं मण्डले तु विपास्य च ।
यस्मिन् मन्त्रे पठेत्पुष्पं नामगोत्रं तथात्मकम् ॥ १५ ॥

दक्षिणां तु गुरोर्दत्त्वा शिष्यो वित्तानुसारतः ।
गुहदीक्षां च यः कुर्यात् गुहप्रीतिकरां गुहम् ।
भुक्त्वा भोगांश्च देहान्ते कौमारं लोकमाप्नुयात् ॥ १६ ॥

इति श्री कुमारतन्त्रे दीक्षाविधिर्नाम एकादशःपटलः

———

## द्वादशः पटलः

### अथ स्नपनविधिः

अतः परं प्रवक्ष्यामि स्नपनं षण्मुखस्य तु ।
अङ्गारवारे षष्ठ्यां वा विषुवायनसङ्क्रमे ॥ १ ॥

मासर्क्षे ग्रहणे वापि कृत्तिकायां द्विपर्वणि ।
उत्सवान्ते प्रतिष्ठान्ते प्रोक्षणान्ते सुयोगके ॥ २ ॥

कर्तुश्च जन्मदिवसे तद्वियोगदिनेऽपि वा ।
नित्ये नैमित्तिके काम्ये शान्तिकर्मणि वा पुनः ॥ ३ ॥

एतेषु स्नपनं कुर्यात् तच्चानेकविधिं शृणु ।
अङ्कुरार्पणमादौ स्यान्महास्नपनकर्मणि ॥ ४ ॥

प्रासादस्याग्रतः कुर्यात् मण्डपं वेदिहीनकम् ।
अथवा पूर्वक्लृप्ते तु दारुणा शिलया तथा ॥ ५ ॥

पञ्चगव्यादिके पञ्चत्रिंशद्धस्ताङ्गुलेऽपि वा ।
चतुर्ग्रामादिकेषां च गात्रपर्यङ्कमण्डपे ॥ ६ ॥

तोरणादिसमायुक्ते सर्वालङ्कारसंयुते ।
अस्त्रेण शोधिते भूमौ वामदेवेन लेपयेत् ॥ ७ ॥

सूत्रन्यासं गुणास्त्रेण तालमात्राङ्गुलं यथा ।
द्वितालं स्कन्दकुम्भस्य वर्धन्योस्तालमात्रकम् ॥ ८ ॥

त्रितालं मूर्तिकामानं सर्वं सामान्यमीरितम् ।
अथवा द्व्यतालेन कर्णिकामानमीरितम् ॥ ९ ॥

पश्चाद्द्रव्यप्रमाणानि वक्ष्येऽहं श‍ृणु कौशिक ।
गुञ्जादिनिष्कपर्यन्तं पादाद्यङ्गप्रमाणकम् ॥ १० ॥

एकद्वित्रिचतुः प्रस्थं पञ्चगव्यादिमानकम् ।
मध्यादीनां च संप्रोक्तं पादमर्धमथापि वा ॥ ११ ॥

आज्यतैलप्रमाणेन तथैव परिकल्पयेत् ।
कर्पूरकुङ्कुमादीनां मानमित्थं प्रगृह्यताम् ॥ १२ ॥

उत्तमं नवकाशैस्तु मध्यमं सप्तदर्भकैः ।
अधमं पञ्चकाशैस्तु रुद्रधर्मग्रहायुतम् ॥ १३ ॥

ग्रन्थिरेकाङ्गुलं प्रोक्तमग्रं तु चतुरङ्गुलम् ।
तद्ग्रन्थिचतुरावर्तिं कूर्चलक्षणमीरितम् ॥ १४ ॥

ऊर्ध्वाग्रं पुष्टिदं प्रोक्तं अधोऽग्रं शान्तिदं भवेत् ।
कूर्चानां लक्षणं प्रोक्तं कुम्भानां लक्षणं श‍ृणु ॥ १५ ॥

कालं भिन्नं च सुषिरं भेदं छेदं च लीनकम् ।
दुर्गन्धं च पुराणञ्च कलशं च विवर्जयेत् ॥ १६ ॥

कालं च कलहं विद्याद्भिन्नं चैव [1]कुलक्षयम् ।
महामारी प्रकोपस्स्यात्सुषिरं च महामुने ॥ १७ ॥

1 कुलक्षणम्



भेदं विभेदनं कुर्यात् छेदं छेदकरं भवेत् ।
लीनं व्याधिकरं चैव दुर्गन्धं बालनाथनम् ॥ १८ ॥

स्त्रीनाशं स्यात्पुराणश्चेत्संग्रहे बिम्बसन्निभम् ।
तस्मात्सर्वप्रयत्नेन दोषाण्येतानि वर्जयेत् ॥ १९ ॥

कलशान् वेष्टयेद्विद्वानेकद्वित्रिकतन्तुभिः ।
एकद्वित्रियवान्ताढ्यं स्कन्दकुम्भं च वर्धनीम् ॥ २० ॥

अन्यांश्च कलशान् सर्वान् गवाक्षसदृशान्तरान् ।
मण्डपस्योत्तरे भागे दर्भैः शुद्धैः परिस्तरेत् ॥ २१ ॥

क्षालयेत् कलशानस्त्रान् प्रोक्षयेत् पुरुषेण तु ।
अधोमुखांश्च कलशान् स्थापयेत्तु कुशोपरि ॥ २२ ॥

प्रोक्षयेद्धृदयेनैव कलशोन्मीलनं तथा ।
वस्त्रपूतैर्गन्धयुक्तैर्जलैः संपूरयेद्धृदा ॥ २३ ॥

स्थण्डिलस्य विधिं वक्ष्ये श‍ृणु कौशिक सुव्रत ।
शालीनामाढकं श्रेष्ठं त्रिःप्रस्थं मध्यमं स्मृतम् ॥ २४ ॥

द्विःप्रस्थं तण्डुलं प्रोक्तं तदर्धं तिलमीरितम् ।
भूशोधनं तु प्रथमं अनुलेपं द्वितीयकम् ॥ २५ ॥

सूत्रन्यासं तृतीयं स्यात्स्थण्डिलं वै चतुर्थकम् ।
कलशस्थापनं पञ्च षष्ठं कूर्चाधिवासनम् ॥ २६ ॥

सप्तमं द्रव्यविन्यासमष्टमं देवतार्चनम् ।
विधानं नवमं प्रोक्तं दशमं वस्त्रवेष्टनम् ॥ २७ ॥

एकादशं गन्धपुष्पं द्वादशं धूपदीपकम् ।
मुद्रा त्रयोदशं प्रोक्तं प्रोक्षणं च चतुर्दशम् ॥ २८ ॥

दशपञ्च घटोद्धारं स्नानकर्म च षोडश ।
अस्त्रेण शोधयेद्भूमिं वामदेवेन लेपनम् ॥ २९ ॥

सूत्रन्यासमघोरेणस्थण्डिलं पुरुषेण तु ।
प्रणवेन घटोद्धारं स्कन्दसूक्तेन मन्त्रतः ॥ ३० ॥

पञ्चब्रह्मषडङ्गैश्च स्नापयेत् षण्मुखं सुधीः ।
लाजपुष्पतिलैर्दर्भैर्विकरान् प्रक्षिपेत्ततः ॥ ३१ ॥

पुण्याहं वाचयित्वाथ पश्चात् स्नपनमाचरेत्[1] ।
प्रवक्ष्यामि समासेन स्नपनं नवसंख्यकम् ॥ ३२ ॥

प्राक्सूत्रं देवसूत्रं स्यादुदक्सूत्रं तथैव च ।
तन्मध्ये स्कन्दकुम्भं तु वर्धनीं तस्य पार्श्वके ॥ ३३ ॥

पाद्यमाचमनं चार्घ्यं पञ्चगव्यं महादिशि ।
क्षीरं दधि घृतं चैव मध्वन्यासु विदिक्षु च ॥ ३४ ॥

सप्तसूत्रान् सापिधानांश्च सवस्त्रान् वारिपूरितान् ।
स्थापयेत् कलशान् वा स्यात् पूजयेत्तु यथाविधि ॥ ३५ ॥

1 आरभेत्



दक्षिणस्थितवर्धन्यां महावल्लीं यजेत्ततः ।
तन्मध्ये उत्तरस्थां च देवसेनां प्रपूजयेत् ॥ ३६ ॥

शकुन्याद्यष्टशक्तीश्च पूर्वादिकलशेषु च ।
अर्चयेत्तु यथान्यायं स्नापयेदसुरान्तकम् ॥ ३७ ॥

नवाख्यं कलशं प्रोक्तं पञ्चविंशतिकं शृणु ।
प्राक्सूत्रं वसुसूत्रं स्यादुदगग्रं तथैव च ॥ ३८ ॥

मध्ये नवपदं ग्राह्यं तत्पार्श्वकं पदं त्यजेत् ।
वसुद्वारसमायुक्तं शालिभिः स्थण्डिलं नयेत् ॥ ३९ ॥

तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ।
तन्मध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम् ॥ ४० ॥

मध्यकुम्भं कुमाराख्यं तत्पार्श्वे वर्धनीद्वयम् ।
पाद्यमाचमनञ्चार्घ्यं पञ्चगव्यं चतुर्दिशि ॥ ४१ ॥

क्षीरं दधिघृतञ्चैव [1]मध्वन्यासु विदिक्षु च ।
मधु कुष्ठङ्गुलञ्चैव क्षीरश्च [2]सर्पिषं तथा ॥ ४२ ॥

लवङ्गं चैव तक्कोलं दधिमेकं तिलं तथा ।
उशीरञ्च घृतं चैव शङ्खचूर्णं च सक्तुकम् ॥ ४३ ॥

नालिकेरञ्च हारिद्रं द्रव्याण्येतानि षोडश ।
पूर्वादिकलशेष्वत्र द्वितीयावरणं न्यसेत् ॥ ४४ ॥

1 मध्वाज्यादि 2 सर्षपं

मध्वकुम्भे यजेत्स्कन्दं पार्श्वे शक्तिद्वयं यजेत् ।
शकुन्याद्यष्टशक्तिश्च प्रथमावरणे यजेत् ॥ ४५ ॥

लोकपालामरान् दिक्षु जयन्ताद्यान् विदिक्षु च ।
पूजयित्वा यथान्यायं सेनान्यमभिषेचयेत् ॥ ४६ ॥

स्नपनं प्रोक्तमेवं हि पञ्चविंशतिसङ्ख्यकम् ।
पश्चादेकोनपञ्चाशत्स्नपनं प्रोच्यतेऽधुना ॥ ४७ ॥

प्रागग्रं दशसूत्रं स्यादुदक्सूत्रं तथैव च ।
मध्ये नवपदं ग्राह्यं लेपयेत्परितः पदम् ॥ ४८ ॥

द्वाराष्टकसमायुक्तं तालमात्रान्तरं पदम् ।
स्थण्डिलं पूर्ववत्कृत्वा तन्मध्ये नळिनं लिखेत् ॥ ४९ ॥

कलशान् लक्षणोपेतान् चतुःप्रस्थेन पूरितान् ।
ससूत्रान् सापिधानाञ्च सवस्त्रान् हेमसंयुतान् ॥ ५० ॥

वामे कुशोपरि न्यस्त्वा विन्यसेत्तु यथाक्रमम् ।
गन्धाम्बुरत्नसहितं कुम्भमध्ये गुहाख्यकम्[1] ॥ ५१ ॥

दक्षिणोत्तरभागे तु वर्धन्या हेमसंयुतौ ।
पाद्यमाचमनं चार्घ्यं गव्यं पूर्वादिदिक्षु च ॥ ५२ ॥

क्षीरं दधि घृतं चैव मध्वन्यासु विदिक्षु च ।
तक्कोलं भस्म निर्यासं हारिद्रं चैव मञ्जरी ॥ ५३ ॥

1 गुहाह्वयम्



नालिकेरं च बिल्वं च जम्बूकच्चोलमेव च ।
पाटली चैव पुन्नागं शङ्खपुष्पं तथैव च ॥ ५४ ॥

लक्ष्मी व्याघ्रीच सिंही च धुत्तूरं चैव षोडश ।
द्रव्याण्येतानि पूर्वादिद्वितीयावरणे न्यसेत् ॥ ५५ ॥

दूर्वा च सर्षपं चाम्रं नारङ्गं पनसं तथा ।
कदली च कदम्बं च धातकी श्वेतपङ्कजम् ॥ ५६ ॥

इक्षुसारश्च लाजं च चम्पकं गन्धतैलकम् ।
नीवारं कुङ्कुमं चैव तिलमाञ्जीमरुं तथा ॥ ५७ ॥

सक्तुश्च मातुलुङ्गं च चन्दनं चागरुस्तथा ।
उशीरं रात्रिचूर्णं च तृतीयावरणे न्यसेत् ॥ ५८ ॥

चतुर्विंशतिद्रव्याणि संख्यान्येव हि कौशिक ।
मध्ये गुहं समावाह्य पार्श्वयोः शक्तिकं द्वयम् ॥ ५९ ॥

शकुन्याद्यष्टशक्तीश्च प्रथमावरणे यजेत् ।
इन्द्राद्यान् द्विजवर्णाद्यान् द्वितीयावरणे यजेत् ॥ ६० ॥

शास्तारंद्वादशादित्यान् तथैकादशरुद्रकान् ।
पूर्वादिषु क्रमेणैव तृतीयावरणे यजेत् ॥ ६१ ॥

अर्चयित्वा यथान्यायं स्थापयेच्छङ्करात्मजम् ।
वर्धनीद्वयतोयेन पूजयेच्छक्तिकाद्वयम् ॥ ६२ ॥

स्नापयेत्कलशैस्सर्वैर्यथापूर्वं सुरेश्वरम् ।
प्रोक्तमेकोनपञ्चाशत्स्नपनम्मुनिसत्तम ॥ ६३ ॥

अथैकाशीतिकलशस्थापनं वक्ष्यतेऽधुना ।
प्राक्सूत्रं रविसूत्रं स्यादुदक्सूत्रं तथैव च ॥ ६४ ॥

पञ्चविंशत्पदम्मध्ये गृहीत्वा तत्समं ततः ।
पदमेकं न्यसेद्बाह्ये द्वाराष्टकसमायुतम् ॥ ६५ ॥

स्थण्डिलङ्कारयेत्तत्र तिलतण्डुलशालिभिः ।
तन्मध्ये नळिनं लिख्य साष्टपत्रं सकर्णिकम् ॥ ६६ ॥

स्कन्दकुम्भं न्यसेन्मध्ये तत्पार्श्वे वर्धनीद्वयम् ।
पाद्यमाचमनञ्चार्घ्यं गव्यं पूर्वादिदिक्षु च ॥ ६७ ॥

क्षीरं दधि घृतं चैव मध्वाज्यादिविदिक्षु च ।
अष्टद्रव्याणि मतिमान् प्रथमावरणे न्यसेत् ॥ ६८ ॥

मधु लाजान् हरिद्रांश्च शकृच्चूर्णञ्च कुष्ठकम् ।
इक्षुसारं च पनसं नारङ्गद्वयमेव च ॥ ६९ ॥

दाडिमी नालिकेरञ्च कदली मातुलुङ्गकम् ।
आम्रकञ्चोलमुशिरं द्रव्याण्येतानि षोडश ॥ ७० ॥

द्वितीयावरणे कुम्भेष्वाचार्यो विन्यसेत् क्रमात् ।
चन्दनं चैव कर्पूरं लवङ्गं जातिमेव च ॥ ७१ ॥



त्रुटिपत्रञ्च तक्कोलं कार्पासं पुष्पपत्रकम् ।
निम्बञ्च नवनीतञ्च मेघं चैव कुटं नटम् ॥ ७२ ॥

गुग्गुलुं चैव निर्यासं गुळखण्डं तथैव च ।
तिलं च सर्षपं चैव यवमुद्गं तथैव च ॥ ७३ ॥

प्रियङ्गुं चैव नीवारं चतुर्विंशतिसंख्यकम् ।
द्रव्याण्येतानि मतिमान् तृतीयावरणे न्यसेत् ॥ ७४ ॥

अपामार्गं च तुलसीं पद्मनीलोत्पलं तथा ।
नन्द्यावर्तं च तक्कोलं[1] करवीरं तपस्विनीम् ॥ ७५ ॥

भूतं कुञ्जरपुन्नागं मन्दारं बहुकर्णिकम्[2] ।
श्वेतार्कं [3]केतकीपुष्पं विष्णुक्रान्ता बलिस्तथा ॥ ७६ ॥

लक्ष्मी च सहदेवी च मालती जाति पुष्पकम् ।
सुगन्धी चम्पकं चैव पाटलं पूगमेव च ॥ ७७ ॥

अश्वत्थोदुम्बरं चैव लक्ष्मीवृक्षं वटं तथा ।
इन्द्रवल्ली महाद्रोणं स्थलारविन्दमीश्वरम् ॥ ७८ ॥

द्वात्रिंशत्परिसंख्यानि द्रव्याण्येतानि कौशिक ।
चतुर्थावरणेष्वत्र पूर्वादिक्रमशो न्यसेत् ॥ ७९ ॥

द्रव्येष्वेतेषु तत्काले यथालाभं प्रगृह्य च ।
पूजयेन्मध्यमे स्कन्दं वर्धन्योः शक्तिकाद्वयम् ॥ ८० ॥

---

1 तथा कोलं 2 बहुकर्णिका 3 बाह्वपुष्पं

शकुन्याद्यष्टशक्तीश्च प्रथमावरणे यजेत् ।
धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः ॥ ८१ ॥

प्रत्यूषश्च प्रभावश्च वस्वादीन्यष्टकान् न्यसेत् ।
षट्शक्तीरष्टदेवांश्च द्वितीयावरणे यजेत् ॥ ८२ ॥

कार्तिकेयं विशाखश्च गुहं चैव सुरान्तकम् ।
सेनानीः षण्मुखं चैव मयूरवाहनं तथा ॥ ८३ ॥

शक्तिपाणिनमीशानं कुम्भेषु च समर्चयेत् ।
वचद्भुवं विश्वभुवं ततो रुद्रभुवं तथा ॥ ८४ ॥

पश्चाद् ब्रह्मभुवं चैव भुवद्भुवमनन्तरम् ।
शक्तिं च मुसलङ्खङ्गं वर्मपाशमतः परम् ॥ ८५ ॥

वज्रश्च कार्मुकं चैव खेटकश्च मयूरकम् ।
अङ्कुशश्च क्रमेणैव चतुर्विंशतिदैवतम् ॥ ८६ ॥

तृतीयावरणे मन्त्री तत्तन्नाम्ना समर्चयेत् ।
ईशानं चैव पर्जन्यो जयन्तश्च महेन्द्रकः ॥ ८७ ॥

आदित्यः सत्यकश्चैव भ्रंशश्चैवान्तरिक्षकः ।
अग्निः पूषा च विततो गृहक्षतयमौ तथा ॥ ८८ ॥

गन्धर्वो भृङ्गराजश्च मृगश्च निमतिस्तथा ।
दौवारिकश्च सुग्रीवः पुष्पदन्ताभिधानकः ॥ ८९ ॥



वारुणासुरशोषाश्च पापरक्षस्तथैव च ।
वायुवेगस्तथा मुख्यो भल्लाटः सोम एव च ॥ ९० ॥

मृगश्चैवादितिश्चैव दितिरेव प्रकीर्तिता ।
द्वात्रिंशद्देवता बाह्ये चतुर्थावरणे यजेत् ॥ ९१ ॥

प्रणवादिनमोऽन्तश्च स्वस्वनामभिरर्चयेत् ।
स्कन्दकुम्भश्च वर्धन्यौ कृत्वा धामप्रदक्षिणम् ॥ ९२ ॥

अन्तः प्रविश्य कुम्भस्थं बीजं वै मूलबेरकम् ।
वर्धनीद्वितयम्बीजं यजेच्छक्तिद्वयेऽपि च ॥ ९३ ॥

स्नापयेत् सर्वकुम्भाद्भिः स्कन्दं गुरुर्यथाक्रमम् ।
अर्चनोक्तविधानेन पूजयेच्छङ्करात्मजम् ॥ ९४ ॥

प्रभूतहविषं दद्यात् प्रार्थयेदर्थमीप्सितम् ।
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः ॥ ९५ ॥

ब्राह्मणान् भोजयेत् पश्चाद्दीनानाथांश्च पूजयेत् ।
एकोनाशीतिकलशं स्नपनं प्रोक्तमेव च ॥ ९६ ॥

पश्चादष्टोत्तरशतं स्नपनं वक्ष्यतेऽधुना ।
प्रागग्रन्तु कलासूत्रमुदगग्रं तथैव च ॥ ९७ ॥

पञ्चविंशत्पदं मध्ये परितो द्विपदं त्यजेत् ।
बाह्येषु च चतुर्दिक्षु मध्ये त्रित्रिपदं न्यसेत् ॥ ९८ ॥

द्वादशद्वारसंयुक्तं स्कन्दव्यूहस्य मध्यमे ।
आग्नेयादिषु चत्वारो व्यूहधर्मादयः क्रमात् ॥ ९९ ॥

त्रित्रिव्यूहाश्च कोणेषु एकविंशत्पदम्भवेत् ।
स्थण्डिलङ्कारयेत्तत्र तिलतण्डुलशालिभिः ॥ १०० ॥

प्रत्येकं सर्वकुम्भानां मध्ये नळिनमालिखेत् ।
प्रागग्रैश्चोत्तराग्रैश्च व्यूहान् दर्भैः परिस्तरेत् ॥ १०१ ॥

लक्षणालंकृतोपेतान् कलशान् स्थापयेत्सुधीः ।
मध्ये स्कन्दश्च विन्यस्य वर्धन्या तस्य पार्श्वयोः ॥ १०२ ॥

पाद्यमाचमनश्चार्घ्यं गन्धं पूर्वादिदिक्षु च ।
दधिसर्पिर्मधुक्षीरं विदिक्षु प्रथमावृतौ ॥ १०३ ॥

तिलं बिल्वं मलयजं मेघचम्पकमेव च ।
करवीरं सर्षपश्च नागकेसरमेव च ॥ १०४ ॥

तक्कोलं च फलं कुन्दं कच्चोलं लोहमेव च ।
लवङ्गपत्रं कर्पूरं विन्यसेच्च क्रमेण तु ॥ १०५ ॥

द्रव्याणि षोडशैतानि द्वितीयावरणे पुनः[1] ।
तृतीयावरणे सक्तुवाहौ कलशपञ्चसु ॥ १०६ ॥

भसितं चैव नैर्ऋत्यां कलशेषु च पञ्चसु ।
हारिद्रचूर्णं वायव्यां कलशेषु च पञ्चसु ॥ १०७ ॥

1. बुधः



शङ्खचूर्णं तथैशान्यां कलशेषु च पञ्चसु ।
धात्रीं च नालिकेरञ्च लिकुचं मातुलुङ्गकम् ॥ १०८ ॥

वह्निकोणे तु मतिमान् कलशेषु च पञ्चसु ।
चतुर्थावरणे धीमान् विन्यसेन्मूलविद्यया ॥ १०९ ॥

लक्ष्मीं च सहदेवीञ्च विष्णुक्रान्तिं तथैव च ।
रुद्रपर्णीं च वन्ध्यादिकलशेषु नवस्वपि ॥ ११० ॥

पञ्चमावरणेऽप्येवं विन्यसेत्तु क्रमेण तु ।
स्कन्दं यजेन्मध्यकुम्भे पार्श्वयोः शक्तिकाद्वयम् ॥ १११ ॥

शकुन्याद्यष्टशक्तीश्च प्रथमावरणे यजेत् ।
इन्द्राद्यांश्च जयन्ताद्यान् द्वितीयावरणे यजेत् ॥ ११२ ॥

शास्तारं वास्तुनाथञ्च सुदेवसुमुखाह्वयम् ।
आग्नेयादिषु कोणेषु पञ्चपञ्चघटेषु च ॥ ११३ ॥

तृतीयावरणे मन्त्री पूजयेत्तु यथाक्रमम् ।
गङ्गां लक्ष्मीं च वाग्देवीं दुर्गां सप्तसु सप्तसु ॥ ११३ ॥

चतुर्थावरणे धीमानाग्नेयादिषु पूजयेत् ।
अग्निं सूर्यञ्चन्द्रमसं गुहास्त्रञ्च नवस्वपि ॥ ११५ ॥

पञ्चमावरणे वह्निकोणादिषु समर्चयेत् ।
गर्भगेहं ततः प्राप्य बेरशुद्धिं समाचरेत् ॥ ११६ ॥

स्कन्दकुम्भस्थतोयेन स्कन्दं संपूजयेद्गुहः ।
महावल्लीदेवसेनां वर्धन्यौ द्वौ प्रपूजयेत् ॥ ११७ ॥

स्थापितैः कलशैस्सर्वैः पूजयेच्छाम्भवं क्रमात् ।
प्रभूतहविषं दद्यात्प्रार्थयेदर्थमीप्सितम् ॥ ११८ ॥

आचार्यं पूजयेत्पश्चाद्गोभूमिधनवाहनैः ।
प्रोक्तमष्टोत्तरशतं स्नपनक्रममेव च ॥ ११९ ॥

अष्टोत्तरसहस्राख्यं स्नपनं वक्ष्यतेऽधुना ।
सूत्रैः प्रागादिकैर्भूमौ चत्वारिंशत् षडुत्तरैः ॥ १२० ॥

उदगग्रस्तथाशाल्यां शालिपिष्टरसान्वितैः ।
पञ्चविंशत्पदं मध्ये गृहीत्वा तद् बहिर्बुधः ॥ १२१ ॥

मार्गाय द्विपदं लोप्य बहिः पञ्चपदं ग्रहेत् ।
तद्बहिर्द्विपदं लोप्य बहिः पञ्चपदं ग्रहेत् ॥ १२२ ॥

द्विपदं लोप्य तद्बाह्ये विद्यते तु चतुष्पदम् ।
बहिर्वीथ्यान्तरालेषु कलशेषु पदेषु च ॥ १२३ ॥

मार्गाय लोपयेद् विद्वान् तन्मध्ये तु चतुष्पदम् ।
चतुर्दिक्षु ततो मन्त्री कल्पयेत् कल्पवित्तमः ॥ १२४ ॥

पञ्चविंशत्पदं व्यूहं पञ्चविंशद्बवेदिह ।
चतुष्कोणे षोडशभिः पदैर्व्यूहचतुष्टयम् ॥ १२५ ॥



अष्टभिश्च पदैर्व्यूहैश्चत्वारिंशद्भवेद्बहिः ।
महाद्वाराष्टदशकं क्षुद्रद्वारं तु विंशतिः ॥ १२६ ॥

अष्टोत्तरसहस्रेऽस्मिन् स्नपने षोडशावृतौ ।
वृत्तकुम्भमथो वक्ष्ये शृणु कौशिकसुव्रत ॥ १२७ ॥

षट्त्रिंशद्गात्रसंयुक्ते मण्डपे चतुरश्रके ।
चतुर्गात्राष्टगात्राणि मध्ये पङ्क्तिविवर्जिते ॥ १२८ ॥

श्रुतिद्वारसमायुक्ते सर्वालंकारसंयुते ।
मङ्गलाष्टकसंयुक्ते चतुस्तोरणभूषिते ॥ १२९ ॥

दशायुधसमायुक्ते दर्भमालाभिरावृते ।
मण्डपे मध्यदेशे तु हस्तसूत्रान्तरं यथा ॥ १३० ॥

तथा पश्चिमपूर्वोक्तं युग्मसूत्रं प्रकल्पयेत् ।
दक्षिणोत्तरमार्गेण युग्मसूत्रं प्रसारयेत् ॥ १३१ ॥

तन्मध्ये स्थापयेच्छङ्खंसमन्ताद्भ्रामयेत्ततः ।
तत्र षोडशसूत्राणि वृत्तवद्भ्रामयेत्सुधीः ॥ १३२ ॥

तावत्सूत्रान्तरम्प्रोक्तं षोडशावरणं क्रमात् ।
द्वारार्थकं महाशासु द्वारसूत्राणि विन्यसेत् ॥ १३३ ॥

स्वर्णालङ्कारयोर्मध्ये तिलतण्डुलशालिभिः ।
स्थण्डिलङ्कलशानान्तु कल्पयेत्कलशम्प्रति ॥ १३४ ॥

प्रथमावरणे चाष्टौ षोडशं द्वितीयावृतौ ।
त्र्यावृतौ चतुर्विंशद्द्वात्रिंशच्चतुरावृतौ ॥ १३५ ॥

चत्वारिंशच्च कलशान् पञ्चमावरणे न्यसेत् ।
अष्टाचत्वारिंशतिकान् कलशान् षष्ठमावृतौ ॥ १३६ ॥

षट्पञ्चाशद्घटान् पश्चात् सप्तमावरणे न्यसेत् ।
चतुःषष्टिघटान् पश्चादष्टमावरणे न्यसेत् ॥ १३७ ॥

द्विसप्ततिघटान् पश्चान्नवमावरणे न्यसेत् ।
अशीतिसंख्यान् कलशान् दशमावरणे न्यसेत् ॥ १३८ ॥

अष्टाशीतिघटान् पश्चात् न्यसेदेकादशावृतौ ।
कलशान् षण्णवतिकान् द्वादशावरणे न्यसेत् ॥ १३९ ॥

त्रयोदशावृतौ पश्चात् कुम्भान् चतुरशीतिकान् ।
घटान् द्विनवतीन्मन्त्री चतुर्दशमहावृतौ ॥ १४० ॥

कलशान् शतसंख्यांश्च न्यसेत् पञ्चदशावृतौ ।
अष्टोत्तरशतान् कुम्भान् षोडशावरणे न्यसेत् ॥ १४१ ॥

एवं विन्यस्य कलशान् अष्टोत्तरसहस्रकान् ।
रत्नलोहकधातूत्थं बीजोदं गन्धतोयकम् ॥ १४२ ॥

मृन्मार्जनञ्चाप्युपरि मार्जनं [1]पत्रपुष्पकम् ।
[2]*धान्यास्त्रं फलतोयञ्च कषायं मद्योदकं तथा ॥ १४३ ॥

1 पत्रपुष्पयुक् 2 म।न्यास्त्रं * छन्दोभङ्गः



कान्तमूलोदकंब्रह्मकूर्चंकल्काम्बुवल्कलम् ।
माणिक्यञ्चेन्द्रनीलञ्च वैडूर्यं च प्रवालकम् ॥ १४४ ॥

मुक्ता वज्रं पुष्परागं स्फटिकं मरकतं तथा ।
नवरत्नानि निक्षिप्य अथवा पञ्चरत्नकम् ॥ १४५ ॥

एभिर्युक्तं शुद्धतोयं रत्नोदकमुदीरितम् ।
सुवर्णं रजतं ताम्रमायसं त्रपुसीसकम् ॥ १४६ ॥

आरकूटन्तु तैर्युक्तं लोहोदकमिति स्मृतम् ।
सौवीरमञ्जनं श्यामं हरितालं मनःशिलाम् ॥ १४७ ॥

गैरिकं रोचनायुक्तं धातूदकमिति स्मृतम् ।
शालिकोद्रं च नीवारं प्रियङ्गुतिलसर्षपम् ॥ १४८ ॥

श्याममाषयवैर्युक्तं बीजोदकमिहोच्यते ।
नवनीतं च कर्पूरं त्वगेलापत्रसंयुतम् ॥ १४९ ॥

चन्दनं लघुकोष्ठं च वराळोशीरमुस्तकाः ।
कुङ्कुमं हरिबेरं च तक्कोलं जातिरेव च ॥ १५० ॥

एतेषां चूर्णसंयुक्तं गन्धोदकमिति स्मृतम् ।
पर्वते च नदीतीरे वल्मीके कर्कटे वटे ॥ १५१ ॥

वृषशृङ्गदर्भमूले समुद्रे गजदन्तयोः ।
अष्टमृद्भिस्समायुक्तं मृदम्भः परिकीर्तितम् ॥ १५२ ॥

गोक्षीरं सहदेवीं च विष्णुक्रान्तं कृताञ्जलिम् ।
सर्षपेन्दीवरं रात्रिं एभिर्मार्जनमुच्यते ॥ १५३ ॥

तुलसीं बिल्वपत्रञ्च तमालञ्च तपस्विनीम् ।
अपामार्गं शमीयुक्तं पत्रतोयमिहोच्यते ॥ १५४ ॥

पद्मं रक्तोत्पलं पश्चात् पाटलं चम्पकं तथा ।
पुन्नागनागं कुरवं नन्द्यावर्तञ्च मल्लिकाम् ॥ १५५ ॥

श्वेतार्कं वकुळैर्युक्तं पुष्पतोयमिहोच्यते ।
कुष्ठं कुटन्नटं लोहं चन्दनं कुङ्कुमं तथा ॥ १५६ ॥

कर्पूरोशीरसंयुक्तं मान्योदकमिति स्मृतम् ।
वज्रं शक्तिं च मुसलं खड्गं पाशाङ्कुशं धनुः ॥ १५७ ॥

चक्रं खेटध्वजं स्वर्णनिर्मितान्यायुधानि च ।
एभिर्युक्तं शुद्धतोयमस्त्रोदकमिति स्मृतम् ॥ १५८ ॥

पनसो नालिकेरश्च मातुलुङ्गाम्रवृक्षकौ ।
नारङ्गद्वयमेतेषां फलैर्युक्तं फलोदकम् ॥ १५९ ॥

पलाशोदुम्बराश्वत्थमधूकप्लक्षपाटलाः ।
जम्बुरेषां समत्वग्भिः कषायोदकमुच्यते ॥ १६० ॥

अभ्यङ्गत्रितयं पश्चात् माक्षिकत्रितयं तथा ।
गन्धत्रयसमायुक्तं मध्यतोयमिति स्मृतम् ॥ १६१ ॥



सूर्यकान्तमयःकान्तं चन्द्रकान्तत्रयं तथा ।
एभिश्च पञ्चकैर्युक्तं कान्ततोयमिति स्मृतम् ॥ १६२ ॥

उशीरो हरिबेरं च पुष्पकं च शतावरी ।
श्रीपर्णं पञ्चभिर्मूलैर्मूलोदकमिति स्मृतम् ॥ १६३ ॥

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् ।
एभिर्द्रव्यैः समायुक्तं ब्रह्मकूर्चमिति स्मृतम् ॥ १६४ ॥

मयूरशिखिकूर्चत्वकरोचनाभृङ्गराजकम् ।
कृतांजलिः पञ्चभिश्च कल्कोदकमिति स्मृतम् ॥ १६५ ॥

लोध्रद्वयं लवङ्गं च भूर्जत्वक्चूतवृक्षकः ।
एभिस्त्वग्भिः समायुक्तं वल्कोदकमिति स्मृतम् ॥ १६६ ॥

अग्निकोणक्रमात्तैलं क्षीरं दधि घृतं न्यसेत् ।
चत्वारिंशद्व्यूहकेषु कलशद्रव्यमुत्तमम् ॥ १६७ ॥

विंशद्भेदोदकं प्रोक्तं द्रव्याणां च विधिं शृणु ।
वराळत्रुटिकर्पूरत्वगेलोशीरकादयः ॥ १६८ ॥

स्कन्दकुम्भस्य वर्धन्योर्मध्यमेषु च विन्यसेत् ।
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् ॥ १६९ ॥

क्षीरंदधिघृतान्यष्टौ प्रथमावरणे न्यसेत् ।
क्षौद्रं गुळं यवं कोष्ठं तिलं रम्भाफलं तथा ॥ १७० ॥

सर्षपं नालिकेरञ्च रजनीमातुलुङ्गकम् ।
लाजदाडिमसक्तूनि पनसं पञ्चचूतकम् ॥ १७१ ॥

न्यसेद्द्वितीयावरणे द्रव्याण्येतानि षोडश ।
रक्तोदकं लोहतोयं तृतीयावरणे न्यसेत् ॥ १७२ ॥

धातूदकं बीजभवं चतुर्थावरणे न्यसेत् ।
गन्धोदकं मृदम्भश्च पञ्चमावरणे न्यसेत् ॥ १७३ ॥

मार्जनम्परिमार्जं च षष्ठमावरणे न्यसेत् ।
पत्रोदं पुष्पतोयञ्च सप्तमावरणे न्यसेत् ॥ १७४ ॥

मान्योदमस्त्रतोयञ्चाप्यष्टमावरणे न्यसेत् ।
नवावृतौफलोदञ्च कषायोदं दशावृतौ ॥ १७५ ॥

मद्योदमेकादशके कान्तोदं द्वादशावृतौ ।
त्रयोदशावृतौ धीमान् मूलोदकमथार्चयेत् ॥ १७६ ॥

चतुर्दशावृतौ पश्चात् ब्रह्मकूर्चं जलं क्षिपेत् ।
कल्कोदकं न्यसेद्धीमान् तथा पञ्चदशावृतौ ॥ १७७ ॥

षोडशावरणे सम्यक् न्यसेद्वल्कोदकम्बुधः ।
वज्रं समस्तरत्नानां लोहानामग्निदैवतम् ॥ १७८ ॥

धातूनां हरितालं च बीजानां यवमुत्तमम् ।
चन्दनं सर्वगन्धानां मृदं दर्भस्य मूलजम् ॥ १७९ ॥



मार्जनीरजनीचूर्णंदूर्वा च परिमार्जने ।
बिल्वपत्रं च पत्राणां पुष्पाणामुत्पलं स्मृतम् ॥ १८० ॥

मान्योदके च कर्पूरमस्त्राणां शक्तिरेव च ।
फलानां कदलीजातं त्वचामश्वत्थसम्भवा ॥ १८१ ॥

फलत्रयं मद्यतोये कान्तानां सूर्यकान्तकम् ।
कुटन्नटश्च मूलानां गोमूत्रं ब्रह्मकूर्चके ॥ १८२ ॥

कल्कोदके भृङ्गराजं वल्कानां लोध्रवल्कले ।
सहदेव्यौषधीनां च सिताभावे गुळं स्मृतम् ॥ १८३ ॥

फलपुष्पाद्यभावे तु तत्पत्रादिकमेव च ।
द्रव्याण्येतानि सर्वाणि मूलमन्त्रेण विन्यसेत् ॥ १८४ ॥

विधाय बीजं मुख्येन पल्लवैश्च शरावकैः ।
दत्वा हृदयमन्त्रेण वस्त्राणि विविधानि च ॥ १८५ ॥

शुभानि सर्ववर्णानि कृष्ण वस्त्राणि वर्जयेत् ।
गन्धं स्वनाममन्त्रेण पुष्पं धूपं तथैव च ॥ १८६ ॥

कुमारस्वामिनां मध्ये कुम्भे संस्थाप्य पूजयेत् ।
दक्षिणायां तु वर्धन्यां महावल्लीं प्रपूजयेत् ॥ १८७ ॥

उत्तरायां तु वर्धन्यां महासेनां प्रपूजयेत् ।
शकुन्याद्यष्टशक्तीश्च प्रथमावरणे न्यसेत् ॥ १८८ ॥

जयन्ताख्यमग्निशिखं कृत्तिकापुत्रसंज्ञकम् ।
अनन्तरम्भूतपतिं सेनान्यं गुहसंज्ञकम् ॥ १८९ ॥

हेमशूलं विशालाक्षं पूर्वादिक्रममेव च ।
द्वितीयावरणे धीमान् द्विवारं सम्यगर्चयेत् ॥ १९० ॥

पृथिव्यादिप्रकृत्यन्तं तत्त्वानीह त्रयोवृतौ ।
चतुर्वारं वसून्मन्त्री चतुर्थावरणे यजेत् ॥ १९१ ॥

गङ्गां च यमुनां चैव नर्मदां च सरस्वतीम् ।
सिन्धुं गोदावरीं चैव कावेरीं कुमरीं तथा ॥ १९२ ॥

पञ्चवारं यजेद्धीमान् पञ्चमावरणे क्रमात् ।
अनन्तं वासुकिं चैव तक्षं कार्कोटकं तथा ॥ १९३ ॥

शङ्खं पद्मं महापद्मं गुळकं षष्ठमावृतौ ।
षड्वारं पूजयेद्विद्वान् पूर्वादिषु पुनः पुनः ॥ १९४ ॥

भूरादिसप्तलोकानां दैवतानि पुनः पुनः ।
अष्टवारं यजेद्धीमान् सप्तमावरणे क्रमात् ॥ १९५ ॥

असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरवः ।
कपाली भीषणश्चैव संहारश्चाष्टभैरवः ॥ १९६ ॥

अष्टवारं यजेदेतान् अष्टमावरणे क्रमात् ।
महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ॥ १९७ ॥



मुकुन्दः कुन्दनीलाश्च वाराश्च निधयो नव ।
अष्टवारं यजेत्पश्चान्नवमावरणे तथा ॥ १९८ ॥

क्ष्मावह्नियजमानार्कजला वातेन्दुखानि च ।
अष्टमूर्तीन्न्यसेदेतान्दशवारं दशावृतौ ॥ १९९ ॥

महादेवशिवो रुद्रः शङ्करो नीललोहितः ।
ईशानो विजयो भीमो देवदेवो भवोद्भवः ॥ २०० ॥

कपाल्येकादशाख्याता रुद्रा एकादशावृतौ ।
अष्टवारं यजेदेतान्पूर्वादिकलशेषु च ॥ २०१ ॥

वैवस्वतो विवस्वांश्च मार्ताण्डो भास्करो रविः ।
लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः ॥ २०२ ॥

आदित्यश्चैव सूर्यश्च अंशुमाली दिवाकरः ।
द्वादशावरणे मन्त्री पूजयेदष्टवारकम् ॥ २०३ ॥

लवणेक्षुस्तथा क्षीरं दधिस्वादुसरित्पतिम् ।
सुराभिर्घृतसिन्धुश्च पूज्या द्वादशवारकम् ॥ २०४ ॥

त्रयोदशावृतौ मन्त्री पूर्वादिकलशेषु च ।
चतुर्वेदान्यजेन्मन्त्री त्रयोविंशतिवारकं ॥ २०५ ॥

चतुर्दशावृतौ सम्यग्गन्धपुष्पादिभिर्यजेत् ।
इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ २०६ ॥

सोमेशो ब्रह्मगोविन्दः पूजनीयास्तथैव च ।
दशवारं च गुरुणा तथा पञ्चदशावृतौ ॥ २०७ ॥

ग्रहान्भास्करमुख्यांश्च यजेद्द्वादशवारकम् ।
षोडशावरणे मन्त्री पूजयेत्तु यथाक्रमम् ॥ २०८ ॥

गन्धपुष्पादिभिश्चैव पूजयेत्स्वस्वनामतः ।
वालुकैश्च महाशासु स्थण्डिलङ्कल्पयेद्बुधः ॥ २०९ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तमार्गतः ।
समिदन्नघृतैस्स्कन्दं मूलब्रह्मषडङ्गकैः ॥ २१० ॥

प्रत्येकन्तु शतं हुत्वा स्कन्दगायत्रिमन्त्रतः ।
जगद्भुवादिषण्मन्त्रैः षड्वारं होमयेत्सुधीः ॥ २११ ॥

जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ।
यदस्येति ततो हुत्वा पूर्णाहुतिमथाचरेत् ॥ २१२ ॥

मध्ये कुम्भं च वर्धन्यौ कृत्वा धामप्रदक्षिणम् ।
गर्भगेहं प्रविश्याथ बेरशुद्धिमथाचरेत ॥ २१३ ॥

स्कन्दबीजं ततोद्धृत्य बेरस्य हृदि विन्यसेत् ।
तत्कुम्भस्थिततोयेन पूजयेच्छङ्करात्मजम् ॥ २१४ ॥

दक्षिणस्थितवर्धन्यां महावलीं प्रपूजयेत् ।
उत्तरस्थितवर्धन्यां देवसेनां प्रपूजयेत् ॥ २१५ ॥



स्थापितान्कलशान्सर्वानुद्धृत्य च यथाक्रमम् ।
सर्वदेवात्मकं स्कन्दं पूजयेद्विधिपूर्वकम् ॥ २१६ ॥

अर्चनोक्तविधानेन पूजयेदम्बिकासुतम् ।
महाहविर्निवेद्याथ ताम्बूलादिविशेषतः ॥ २१७ ॥

यथेप्सितं प्रार्थयित्वा नमस्कृत्य यथाविधि ।
आचार्यं पूजयेत्पश्चात् गोभूमिधनकाञ्चनैः ॥ २१८ ॥

अधमं पञ्चनिष्कन्तु द्विगुणं मध्यमं भवेत् ।
त्रिगुणं चोत्तमं विद्याद्देशिकस्य तु दक्षिणा ॥ २१९ ॥

भक्तांश्च परिवारांश्च दीनानाथांश्च पूजयेत ।
ब्राह्मणान् भोजयेत् पश्चाद्वित्तशाठ्यं न कारयेत् ॥ २२० ॥

एवं यः कुरुते मर्त्यः सर्वपापैः प्रमुच्यते ।
विद्याकामो लभेद्विद्यां धनकामो धनं लभेत् ॥ २२१ ॥

राज्यकामो लभेद्राज्यं जयकामो जयं लभेत् ।
सर्वान् कामानिह प्राप्य कौमारं लोकमाप्नुयात् ॥ २२२ ॥

इति श्री कुमारतन्त्रे स्नपनविधिर्नामद्वादशः पटलः

———

## त्रयोदशः पटलः

### अथ स्कन्दोत्सवविधिः

अतः परं प्रवक्ष्यामि स्कन्दोत्सवविधिक्रमम् ।
भुक्तिमुक्तिप्रदं दिव्यं सर्वभूतसुखप्रदम् ॥ १ ॥

सर्वलोकसुखं पुण्यं सदा विजयवर्धनम् ।
सर्वसिद्धिकरं वश्यं सर्वशान्तिकरं शुभम् ॥ २ ॥

सर्वशत्रुक्षयकरमिष्टकाम्यफलप्रदम् ।
भूतराक्षसनाशञ्च मर्त्यानां पोषणार्थकम् ॥ ३ ॥

उत्सवेति त्रिवर्णोयं सृष्टिस्थित्यन्तसंज्ञकम् ।
उत्सवस्त्रिविधः प्रोक्तो मुनिमुख्य महामते ॥ ४ ॥

मासोत्सवस्तु प्रथमो द्वितीयस्तु महोत्सवः ।
भक्तोत्सवस्तृतीयस्तु वक्ष्यते मुनिपुङ्गव ॥ ५ ॥

कृतस्त्वमायां मासाद्ये स तु मासोत्सवो भवेत् ।
त्र्याहञ्चैव पञ्चाहं सप्ताहञ्चनवाहकम् ॥ ६ ॥

द्वादशाहन्तु विधिना चरितस्तु महोत्सवः ।
भक्त्या पुण्यदिने भक्तैः क्रियते यः स उत्सवः ॥ ७ ॥

बलिहीनं तथा कुर्यात् भक्तोत्सवविशेषतः ।
महोत्सवन्तु षड्भेदं वक्ष्यामि शृणु सुव्रत ॥ ८ ॥



पैतृकं द्वादशाहं तु नवाहं सौख्यमुच्यते ।
सप्ताहं श्रीकरं प्रोक्तं पञ्चाहं भौतिकं स्मृतम् ॥ ९ ॥

सात्त्विकं च त्र्यहं प्रोक्तं चैकाहं शिवमुच्यते ।
भौतिके सात्त्विके शैवे वर्जयेत् केतुरोहणम् ॥ १० ॥

अन्येषु श्रीकरादीषु कर्तव्यं केतुरोहणम् ।
कृत्तिका सर्वमासेषु तीर्थनक्षत्रमुत्तमम् ॥ ११ ॥

कृत्तिकां विशाखां वा तीर्थर्क्षं सर्वमासके ।
कृष्णपक्षे तु षष्ठ्यां[1] वा सर्वमासे गुहोत्सवम् ॥ १२ ॥

सर्वमासेषु तां हित्वा मासर्क्षे वाथ कारयेत् ।
राजजन्मदिने वापि ऋक्षे राजाभिषेकके ॥ १३ ॥

ग्रामजन्मदिने वा तु भूपालमरणे दिने ।
राजयुद्धजयार्थे वा चोत्सवं कारयेद्बुधः ॥ १४ ॥

मार्गशीर्षे तथार्द्रान्तं पुष्यर्क्षे पुष्यमासके ।
माघमासे तु माघान्तं फाल्गुने चोत्तरोत्तरे ॥ १५ ॥

चैत्रे चित्रान्तमुदितं कर्तव्यं मुनिपुङ्गव ।
वैशाखे तु विशाखान्तं मूलान्तं ज्येष्ठमासके ॥ १६ ॥

उत्तराषाढमाषाढे श्रावणे श्रावणान्तकम् ।
उक्तं प्रोष्ठपदे मासे पूर्वाभाद्रान्तमुत्तमम् ॥ १७ ॥

---

1 षष्ठ्यन्तम्

अश्विन्यन्तमाश्वयुजि कार्तिके कृत्तिकान्तकम् ।
चित्रादितारकाद्यन्तैः पूर्वपक्षे तु सङ्गतः ॥ १८ ॥

मासाश्चैत्रादिका ज्ञेयाः त्रिभिः षष्ठ्यन्तसप्तमाः ।
एकमासे द्विनक्षत्रे सम्प्राप्ते त्वपरं परम् ॥ १९ ॥

नेष्टं प्रथमऋक्षं स्यादन्त्यर्क्षे तीर्थमाचरेत् ।
कृतं चेत्पूर्वनक्षत्रे यः कर्ता स विनश्यति ॥ २० ॥

खण्डिते सति नक्षत्रे त्वन्त्यर्क्षे तीर्थमाचरेत् ।
नाडीदशविहीने तु पूर्वतीर्थमनुष्ठितम् ॥ २१ ॥

युक्तो वाथ वियुक्तो वा मासर्क्षेण तु पर्वणि ।
तिथिप्रधानं सामुद्रमन्यदृक्षं प्रधानकम् ॥ २२ ॥

यस्मिन् मासे द्विजश्रेष्ठ पूर्वं संक्लृप्तमुत्सवम् ।
तस्मिन्नेव प्रकर्तव्यमन्यस्मिन्नेत्र कारयेत् ॥ २३ ॥

ध्वजावरोहणं तीर्थं दिवसेषु महामुने ।
अन्योत्सवन्तु कर्तव्यं प्रकर्तव्यं ध्वजं विना ॥ २४ ॥

प्रथमश्चाङ्कुरं कर्म द्वितीयं शिखियागजम् ।
तृतीयं ताडयेद् भेरीं चतुर्थं रोपयेद् ध्वजम् ॥ २५ ॥

पञ्चमं यागकर्म स्यादस्त्रयागमतः परम् ।
सप्तमं बलिदानं स्यादष्टयानं क्रमं परम् ॥ २६ ॥



नवमं परिवेषं स्यान्नीराजनमथो दश ।
एकादशं कौतुकं च तीर्थसंग्रहणं परम् ॥ २७ ॥

त्रयोदशं चूर्णकारं तीर्थं चैव चतुर्दश ।
ध्वजावरोहणं पश्चात्स्नपनं षोडशं भवेत् ॥ २८ ॥

एवं षोडशभेदेन चोत्सवं परिकीर्तितम् ।
ध्वजारोहणपूर्वन्तु भेरीताडनपूर्वकम् ॥ २९ ॥

अङ्कुरार्पणपूर्वन्तु त्रिविधा उत्सवाः स्मृताः ।
ध्वजमारोपयित्वा हि भेरीं रात्रौ तु ताडयेत् ॥ ३० ॥

उत्सवस्य तु रात्रौ तु बीजनिर्वापमुच्यते ।
ध्वजारोहणपूर्वं तु प्रोक्तं वेदविदां वर ॥ ३१ ॥

भेरी तु ताडयेत् पूर्वं ध्वजमारोपयेत्ततः ।
अङ्कुराण्यर्पयेत्पश्चाद्भेरीताडनपूर्वकम् ॥ ३२ ॥

ध्वजमारोपयेत्पश्चादङ्कुरार्पणपूर्वकम् ।
प्रातः काले त्ववभृथं सायं काले समाचरेत् ॥ ३३ ॥

निशि सायं दिवा प्रातरिति शास्त्रस्य निर्णयम् ।
मन्त्रभेदो भवेत्तत्र क्रियाभेदो न विद्यते ॥ ३४ ॥

शिवोत्सवप्रकारेण क्रियाः सर्वाः समाचरेत् ।
विघ्नेशं पूजयेत्पूर्वं भक्ष्यभोज्यादिभिर्बुधः ॥ ३५ ॥

अनङ्कुरन्तु यत्कर्म भवेत्तत्कर्म निष्फलम् ।
ध्वजाङ्कुरार्पणम्पूर्वं द्वितीयञ्चोत्सवाङ्कुरम् ॥ ३६ ॥

तीर्थाङ्कुरं तृतीयन्तु वक्ष्यते क्रमशस्ततः ।
ध्वजाङ्कुरं ध्वजाङ्गं स्याद्ध्वजात्पूर्वं तु तर्पयेत् ॥ ३७ ॥

नवाहे वाथ सप्ताहे पञ्चाहे त्रिदिनेऽपि वा ।
तद्दिनेवाङ्कुरं कर्म शुभाधिक्ये समाचरेत् ॥ ३८ ॥

उत्सवाङ्कुरमात्रञ्च तद्दिने कारयेद्बुधः ।
तीर्थर्क्षमादौ निश्चित्य अयुग्मेऽप्यङ्कुरार्पणम् ॥ ३९ ॥

अधमं सप्तहस्तन्तु मध्यमं नवहस्तकम् ।
उत्तमन्दशहस्तं स्याद्दैर्घ्यं ध्वजपटस्य तु ॥ ४० ॥

आयामं ध्वजवस्त्रस्य नवरुद्रकलाकरम् ।
दैर्घ्यस्य पञ्चभागैकं पटविस्तारमुच्यते ॥ ४१ ॥

अथवाऽन्यप्रकारेण भूतषट्सप्ततालकम् ।
विस्तारार्धन्तु शिखरं पुच्छं विस्तारमात्रकम् ॥ ४२ ॥

वेत्रद्वयसमायुक्तं पुच्छद्वयसमायुतम् ।
दुकूलपट्टदेवाङ्गैरथ कार्पासकेन वा ॥ ४३ ॥

वस्त्रेणैव नवेनैव कुर्यात् ध्वजपटं बुधः ।
श्वेतं विप्रध्वजं प्रोक्तं रक्तं क्षत्रध्वजाम्बरम् ॥ ४४ ॥



पीतं वैश्यन्तु शूद्राणां सर्वेषां श्वेतवर्णकम् ।
श्वेतवर्णध्वजपटं राजराष्ट्राभिवर्धनम् ॥ ४५ ॥

शुभायादिसमायुक्तम्मयूरं विलिखेद्बुधः ।
मयूरं वा गजं वापि कुक्कुटं वा महामुने ॥ ४६ ॥

पटमध्ये तु विलिखेत् सर्वलक्षणसंयुतम् ।
पद्मपीठमधो लिख्य पार्श्वे दीपौ समालिखेत् ॥ ४७ ॥

तदूर्ध्वे शक्तिमालिख्य छत्रचामरमूर्ध्वके ।
अधोभागे द्विभागे तु मङ्गलाष्टकमालिखेत् ॥ ४८ ॥

मयूरं श्यामवर्णं तु गजं वै श्वेतवर्णकम् ।
कुक्कुटं रक्तवर्णं तु यथा युक्त्या लिखेद्बुधः ॥ ४९ ॥

सर्वालंकारसंयुक्तं सर्वाभरणभूषितम् ।
आलिखेत्प्रतिमां तत्तत् प्रतिमालक्षणोक्तितः ॥ ५० ॥

वश्यं वै रक्तवर्णं तु स्तम्भनं पीतवर्णकम् ।
विजयं कपिलाभञ्च कृष्णं वै त्वाभिचारकम् ॥ ५१ ॥

धूम्रं व्याधिप्रदं ज्ञेयं वर्षार्थं श्यामवर्णकम् ।
क्षीराभं सर्वशान्त्यर्थञ्चैवमेवं क्रमेण तु ॥ ५२ ॥

ध्वजदण्डपटञ्चैव मयूरगजकुक्कुटान् ।
मानं मात्राङ्गुलाभ्यान्तु कल्पयेत्कल्पवित्तमः ॥ ५३ ॥

शान्त्यै शयानं पुष्ट्यर्थं स्थितं वै ध्वजमालिखेत् ।
विश्वमात्रादिषट्त्रिंशत् मात्रोत्सेधं प्रचक्षते ॥ ५४ ॥

जात्यंशकं समायुक्तं चित्रबेरध्वजं लिखेत् ।
वक्ष्येऽहं ध्वजदण्डस्य स्थानं शृणु महामुने ॥ ५५ ॥

पीठगोपुरयोर्मध्ये पीठाग्रे वा गजाग्रके ।
स्थानं स्याद्ध्वजदण्डस्य दण्डं वक्ष्याम्यथ शृणु ॥ ५६ ॥

वेणुः पलाशो न्यग्रोधो चन्दनः खादिरोऽर्जुनः ।
बिल्वः पूगो नालिकेरः सालस्तालोरथद्रुमः ॥ ५७ ॥

मधुकश्चन्दनश्चैते ध्वजवृक्षा उदीरिताः ।
वक्रं भिन्नञ्च सुषिरं क्रिमिकोटरसंयुतम् ॥ ५८ ॥

स्वयं शुष्कञ्च पतितं निर्घातेन हतद्रुमम् ।
बालवृक्षं विशेषेण वर्जयेन्मुनिपुङ्गव ॥ ५९ ॥

अन्तःसारं बहिस्सारं प्रहस्यादन्यवृक्षकम् ।
बहिस्सारद्रुमान् सर्वान् क्रियान्ते वर्जयेद् बुधः ॥ ६० ॥

दारुसंग्रहणोक्तेन मार्गेणैव समाचरेत् ।
प्रासादस्य समं तुङ्गं गोपुरस्य समं तु वा ॥ ६१ ॥

प्रासादग्रीवमानं वा वृषस्थलसमं तु वा ।
द्वितलत्रितलान्तं वा गोपुरग्रीवतुङ्गकम् ॥ ६२ ॥



रुद्रहस्तं समारभ्य हस्तैकेन [1]विवर्धनात् ।
विंशद्धस्तान्तकं वापि दण्डायामं समीरितम् ॥ ६३ ॥

सप्तविंशाङ्गुलायामं ध्वजदण्डमथोत्तमम् ।
मध्यमन्तु चतुर्विंशत्कन्यसं द्वादशाङ्गुलम् ॥ ६४ ॥

त्रिंशांशोनं तदग्रं स्यात् सुवृत्तं निर्व्रणं दृढम् ।
उभयोर्योगसिद्ध्यर्थं स्कन्धत्रयमथाहरेत् ॥ ६५ ॥

यान् यान् कामयते कामान् तांस्तान् साधयते द्विजः ।
पूर्वाह्णे विप्रवृद्धिः स्यात् मध्याह्ने राजवृद्धिदम् ॥ ६६ ॥

रात्रौ विट्शूद्रवृद्धिः स्यात् ध्वजारोहणकर्मणि ।
[2]स्कन्धत्रयं वा तद्दैर्घ्यं द्वादशाङ्गुलमायतम् ॥ ६७ ॥

षट्त्रिंशमात्रपर्यन्तं स्कन्धदैर्घ्यं प्रकीर्तितम् ।
सप्ताङ्गुलं समारभ्य गायत्र्यंशाङ्गुलावधि ॥ ६८ ॥

स्कन्धविस्तारमुद्दिष्टं मूलादग्रं त्रिभागतः ।
अर्धेन वा त्रिपादेन दर्व्याकारो यथा तथा ॥ ६९ ॥

ऊर्ध्वाग्रे सुषिरोपेता दण्डयष्ट्या स्वरूपकम् ।
अर्धचित्रस्त्वयःस्कन्धः प्रोक्तो यष्ट्याग्रदेशिकः ॥ ७० ॥

दण्डप्रान्ते विधेयं स्यात् वलयं स्कन्ध एव च ।
दण्डप्रोतप्रमाणन्तु दण्डाग्राद्वलयस्थितः ॥ ७१ ॥

1 विवर्धयेत 2 स्कन्धद्वयं

तदर्धं वलयादूर्ध्वे यष्ट्यायामं प्रचक्षते ।
उपदण्डादिदेशे तु हित्वा वस्वङ्गुलं दृढम् ॥ ७२ ॥

आयसं वलयं बध्वा यत्र रज्जुप्रवेशने ।
वलयं सुदृढं कार्यमुपदण्डाग्रनाहतः ॥ ७३ ॥

कार्पासतन्तुतो रज्जुर्भवेद्दृढतरः समः ।
तद्दण्डद्विगुणायामे त्रिवृद्ग्रन्थिविवर्जितम् ॥ ७४ ॥

प्रादक्षिण्यक्रमेणैव वेष्टितो दर्भमालया ।
शतदर्भकृतं कूर्चं यष्ट्यग्रे विनिवेशयेत् ॥ ७५ ॥

चतुस्तालसमं खात्वा तस्मिन् कूर्मं हिरण्मयम् ।
गजं पद्मं सप्तधान्यं न्यस्त्वा तस्योपरि क्रमात् ॥ ७६ ॥

स्थाप्य दण्डं तदूर्ध्वे तु वालुकैः पूरयेद्दृढम् ।
प्रासादाभिमुखं स्कन्धं वलयं दक्षिणे भवेत् ॥ ७७ ॥

तन्मूले वेदिकां कुर्याच्चतुस्तालप्रमाणतः ।
इष्टकाभिश्शिलाभिर्वा कृत्वोर्ध्वाब्जं प्रकल्पयेत् ॥ ७८ ॥

व्योमाङ्गुलप्रवृद्ध्याष्टदशाङ्गुलसमावधि ।
चतुरङ्गुलमारभ्य कर्णिकायाममीरितम् ॥ ७९ ॥

कर्णिकानिर्गमो दण्डात् पादवृद्ध्यैकमात्रतः ।
गुणाङ्गुलावधि तथा तदुत्सेधः प्रकीर्तितः ॥ ८० ॥



चतुरष्टाङ्गुलं पद्मं विकारदळमेव च ।
वृत्तं वा चतुरश्रं वा विधेयं दळपेशलम् ॥ ८१ ॥

तथोपदळसंयुक्तं तदयुक्तं न कारयेत् ।
ध्वजारोहणपूर्वेद्युर्निशायामधिवासयेत् ॥ ८२ ॥

स्कन्दं संपूज्य विधिवत् नत्वा विज्ञाप्य चोत्सवम् ।
प्रासादस्याग्रके रम्ये मण्डपं कारयेद् बुधः ॥ ८३ ॥

गोमयालेपनं कृत्वा राजसीं विनिपातयेत् ।
मण्डपं समलंकृत्य वितानैः स्तम्भवेष्टनैः ॥ ८४ ॥

कृत्वा मण्डपसंस्कारं पुण्याहं वाचयेत्सुधीः ।
त्रिधा वै स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः ॥ ८५ ॥

जगद्भुवेति मन्त्रेण प्रोक्षयेत्स्थण्डिलत्रयम् ।
शिल्पिना ध्वजबेरं तु नेत्रमोक्षणमाचरेत् ॥ ८६ ॥

पञ्चगव्येन संप्रोक्ष्य त्रिपादूर्ध्वे न्यसेत्ततः ॥
अक्षिमोक्षणकं कुर्यात् हेमसूचिकया पुनः[1] ॥ ८७ ॥

विन्यस्य सूर्यसोमांशु मयूरस्य तु नेत्रयोः ।
तर्पयेन्मधुसर्पिभ्यां गायत्र्या प्रोक्षयेत्ततः ॥ ८८ ॥

जलाधिवासनं कुर्याद्दर्पणे चार्धनाडिका ।
शयनं पूर्ववत्कृत्वा देवाग्रे स्थण्डिले तदा ॥ ८९ ॥

1. गुरुः

दर्भैः पुष्पैः परिस्तीर्य शाकशिरश्शाययेद् ध्वजम् ।
षट्सूत्रैरात्रिसहितैः कौतुकं बन्धयेत्ततः ॥ ९० ॥

मध्यमे स्थण्डिले स्थाप्य मयूरं कुम्भमुत्तमम् ।
अर्चयेत्तत्र धर्मादीनधोर्ध्वेच्छदनं पुनः ॥ ९१ ॥

मयूरासनमभ्यर्च्य मूर्तिं संपूज्य मूलतः ।
आवाहयेन्मयूरन्तु तद्ध्यानं संस्मरेद्गुरुः ॥ ९२ ॥

चित्रवर्णं सुरारिघ्नं भुजगोद्धृतवक्त्रकम् ।
महाबलं महाकायं मयूरं प्रणमाम्यहम् ॥ ९३ ॥

षडङ्गं कल्पयेद्विद्वान् बाह्यदीर्घैस्सबिन्दुकैः ।
आवाहनादिकान्सर्वान् दत्वा तन्मूलमन्त्रतः ॥ ९४ ॥

ससूत्रतोयं वस्त्राढ्यानष्टकुम्भान्सकूर्चकान् ।
पूर्वादिक्रमशो न्यस्य लोकपालान्समर्चयेत् ॥ ९५ ॥

नीलकण्ठाय विद्महे चित्रपक्षाय धीमहि ।
तन्नो मयूरः प्रचोदयात् ॥ (इति मयूरगायत्री) ॥ ९६ ॥

तस्याग्रे स्थण्डिलं कुर्याद्वालुकैर्हस्तमात्रकम् ।
अग्निकार्योक्तमार्गेण शिवाग्निं जनयेद्बुधः ॥ ९७ ॥

तस्मिन्मयूरमावाह्य संपूज्य विधिवद्गुरुः ।
समिदाज्यचरून् लाजान् कृत्वा तन्मूलमन्त्रतः ॥ ९८ ॥



शतमर्धं तदर्धं वा दशाङ्गं तत् षडङ्गकैः ।
द्रव्यान्ते व्याहृतीर्हुत्वा स्पृष्ट्वा दर्भैर्ध्वजं पुनः ॥ ९९ ॥

षडाहुतिस्तद्गायत्र्या पूर्णां तु शिरसा हुनेत् ।
जयादिरभ्याधानश्च राष्ट्रभृच्चक्रमाद्धुनेत् ॥ १०० ॥

धूपदीपादिकं दत्वा रक्षां विधाय भस्मना ।
बलिमन्त्रेण बलिं क्षिप्त्वा क्षेत्रपालबलिं क्षिपेत् ॥ १०१ ॥

ध्वजाधिवासनं प्रोक्तं भेरिताडनमुच्यते ।
तदग्रे स्थण्डिलं कृत्वा शालिभिर्द्रोणषड्गुणैः ॥ १०२ ॥

तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् ।
तण्डुलैश्च तिलैर्दर्भैर्भूषयेत्तु दळं प्रति ॥ १०३ ॥

वचद्ध्वेति मन्त्रेण प्रोक्षयेत्कुम्भवारिणा[1] ।
तस्योर्ध्वे विन्यसेद्भेरीं नववस्त्रेण वेष्टयेत् ॥ १०४ ॥

तन्मध्ये रुद्रमभ्यर्च्य दक्षिणे विष्णुमर्चयेत् ।
वामे ब्रह्माणमभ्यर्च्य सूर्यसोमौ च वृत्तयोः ॥ १०५ ॥

मातरस्तस्य कीलासु नागांश्चर्मसु पूजयेत् ।
अर्चयित्वा यथान्यायं भेर्यै दद्याद्गुळोदनम् ॥ १०६ ॥

तस्याग्रे स्थण्डिलं कुर्यात्तिलतण्डुलशालिभिः ।
षट्पदं पद्ममालिख्य पूजयेत्तु षडक्षरैः ॥ १०७ ॥

1. कुशवारिणा

अलंकृत्यास्त्रराजं वै तस्योर्ध्वे विन्यसेद्बुधः ।
इच्छाज्ञानक्रियाशक्तिस्वरूपां शक्तिमर्चयेत् ॥ १०८ ॥

रुद्रं तदूर्ध्वपत्रे तु मध्यपत्रे तु माधवम् ।
अधःपत्रे विधातारं फलकायान्तु पार्वतीम् ॥ १०९ ॥

सरस्वतीं महालक्ष्मीं तस्य दक्षिणवामयोः ।
महासेनं कुम्भमुखे वल्लीं सेनाञ्च पार्श्वयोः ॥ ११० ॥

दण्डाग्रे गणनाथञ्च दण्डमध्ये तु भास्करम् ।
दण्डमूले सुमित्रेशं मयूरं पीठमध्यमे ॥ १११ ॥

तस्य पार्श्वे चाष्टशक्ति पीठमूले वसुन्धराम् ।
अग्निं संपूज्य तद्वक्त्रे धूपदीपादिभिर्बुधः ॥ ११२ ॥

मयूरमन्त्रमुच्चार्य कीलं संगृह्य देशिकः ।
त्र्यम्बकेण तु मन्त्रेण ताडयेदेकताडनम् ॥ ११३ ॥

इदं विष्णुश्च मन्त्रेण द्विवारं ताडयेद्गुरुः ।
ब्रह्मजज्ञानमन्त्रेण त्रिवारं ताडयेत् पुनः ॥ ११४ ॥

देशिकः स्नापयेद् भेरीं प्राङ्मुखो वाप्युदङ्मुखः ।
गुर्वाज्ञया ततः पश्चात् वाद्यकः सर्वताडवित् ॥ ११५ ॥

उपोषितः शुचिः स्नायी शुक्लपक्षोपवीतकः ।
शुक्लवस्त्रधरोष्णीषः शिखीभस्मत्रिपुण्ड्रकः ॥ ११६ ॥



शिवदीक्षा विशुद्धात्मा स्कन्धे भेरीं प्ररोपयेत् ।
शिवादिसर्वदेवेशानिन्द्रादीन् लोकपालकान् ॥ ११७ ॥

त्रयस्त्रिंशत्कोटिदेवानष्टादशगणानपि ।
समुद्रान् पर्वतान्नागान् पातालस्थान्महोरगान् ॥ ११८ ॥

ऋषीनन्यामरान्सर्वानाहूय च समर्चयेत् ।
वाद्यकस्ताडयेद्भेरीं बलिताळं विशेषतः ॥ ११९ ॥

पश्चादपि पुटं ताड्यं पुनश्चापि पुटाह्वयम् ।
ततश्चोद्घट्टितं चैव ततो मद्दयमेव च ॥ १२० ॥

ततो जम्पुटमेवोक्तं सिंहनादं ततो भवेत् ।
ततश्च झम्पटश्चैव पञ्चवाद्यमतः परम् ॥ १२१ ॥

ततः कुम्भकवाद्यञ्च जयशब्दादिसंयुतम् ।
छत्रं पिञ्छसमाकीर्णं चामराम्बरसंयुतम् ॥ १२२ ॥

धूपदीपसमायुक्तं घण्टानादसमायुतम् ।
सुब्रह्मण्यमस्त्रराजमन्त्रलिङ्गं सुमित्रकम् ॥ १२३ ॥

ध्वजञ्च ध्वजदण्डञ्च शनैर्ग्रामप्रदक्षिणम् ।
ब्रह्मादीशानपर्यन्तं सन्धिदेवान् समन्त्रकैः ॥ १२४ ॥

आवाह्याभ्यर्च्य पुष्पाद्यैरस्त्रमुद्रां प्रदर्शयेत् ।
ध्वजोत्सवेषु कर्तव्यं देवतावाहनं बलिम् ॥ १२५ ॥

द्रोणं वापि तदर्धं वा बल्यर्थं तण्डुलं पचेत् ।
पटेनास्तरणं कृत्वा क्षालयेत् पुरुषेण तु १२६ ॥

तस्मिन्निक्षिप्य पक्वान्नमन्नद्रव्यसमायुतम् ।
अन्नलिङ्गाय मतिमान् द्विःप्रस्थं तण्डुलं पचेत् ॥ १२७ ॥

अन्नेन कारयेल्लिङ्गं मुनिश्रेष्ठ न संशयः ।
शुद्धोदनं गुलान्नं वा बलिं दद्यात् स्वमन्त्रतः ॥ १२८ ॥

ब्रह्मादीशानपर्यन्तं ब्रह्मान्तं वा बलिं क्षिपेत् ।
वरुणादिनिर्ऋत्यन्तं पश्चिमद्वारहर्म्यके ॥ १२९ ॥

बलिदानावसाने तु तालं नृत्तं च गीतकम् ।
ब्रह्मणे ब्रह्मताळं स्यात् मेघरागं तु तद्दिशि ॥ १३० ॥

इन्द्रस्य समताळं स्याद्गान्धारङ्गीतमेव च ।
अग्नेरर्धावणं ताळङ्गीतङ्कोल्ली च तद्दिशि ॥ १३१ ॥

यमस्य भृङ्गिणीताळङ्कौशिकङ्गीतमुच्यते ।
नैर्ऋत्यां मल्लतालञ्च नट्टभाषां तु गीतकम् ॥ १३२ ॥

वारुण्यान्नवताळञ्च श्रीकामरञ्च गीतकम् ।
वायव्यां बल्तितालञ्च तक्केशीगीतमेव च ॥ १३३ ॥

सौम्ये नट्टप्रहारं स्यात्तक्करागन्तु तद्दिशी ।
ऐशान्यां ढक्करीताळं शालपाणिश्च गीतकम् ॥ १३४ ॥



मध्यमे दण्डपादं स्यात्पूर्वस्यामूर्ध्वपादकम् ।
आग्नेय्यां मण्डलं चैव भुजङ्गत्रासितं यमे ॥ १३५ ॥

भुजङ्गनृत्तं नैर्ऋत्यां वारुण्यां नर्तनी तथा ।
वायव्यां भ्रमरीनृत्तमालीढञ्च तथोत्तरे ॥ १३६ ॥

प्रत्यालीढं तथैशान्यां नानारागन्तु तुष्टये ।
एवं प्रदक्षिणं कृत्वा ध्वजमारोपयेत्ततः ॥ १३७ ॥

ततो ध्वजपटं सम्यग्बन्धयेदस्त्ररज्जुना ।
अस्त्रेण क्षुद्रघण्टाञ्च रक्तमालाञ्च बद्धयेत् ॥ १३८ ॥

ततो जनेभ्यस्ताम्बूलं दापयेन्मङ्गलाय वै ।
पुण्याहं वाचयेत्तत्र तोयेनाभ्युक्ष्य वेदिकाम् ॥ १३९ ॥

आधाराख्यमनन्तं च कूर्मञ्च विनिवेशयेत् ।
कोणमध्ये तु धर्मादीनधर्मादींश्च दिक्षु च ॥ १४० ॥

दळाष्टके शकुन्यादिमध्यमे विश्वतो मुखीम् ।
दण्डे तु स्वामिनं पूज्य स्कन्धेष्वर्केन्दुपावकान् ॥ १४१ ॥

उपदण्डेऽनिलं चैव तक्षादींस्तस्य रज्जुनि ।
कुम्भाद्बीजं समादाय मयूरं हृदि विन्यसेत ॥ १४२ ॥

परं संप्रोक्ष्य कुम्भाद्भिर्गन्धपुष्पादिनार्चयेत् ।
मुद्गान्नं पायसान्नं वा मयूराय निवेदयेत ॥ १४३ ॥

स्वामिन्संपूज्य विधिवद्विज्ञाप्योत्सवमुत्तमम् ।
सुमुहूर्ते सुलग्ने तु सर्ववाद्यसमन्वितम् ॥ १४४ ॥

मयूरताळघोषेण गजताळेन वा ध्वजम् ।
मयूरमूलमन्त्रेण शीघ्रमारोपयेद्गुरुः ॥ १४५ ॥

आदौ स्पृष्ट्वा स्वयं चान्यं प्रेरयेद्रोहणाय वै ।
पूर्वेन्दुपश्चिमाशासु ध्वजाग्रगमनं शुभम् ॥ १४६ ॥

क्षेमारोग्यं यशोवृद्धिक्रमेण फलमीरितम् ।
तापोमृत्युमहारोगो वह्निपित्रेशनैर्ऋते ॥ १४७ ॥

वायौ भयं विजानीयात् पुच्छोऽप्येवं भवेत् सुधीः ।
आरोहणे निरुद्धश्चेत् पटो देशिकदोषकृत् ॥ १४८ ॥

दोषशङ्कां तिरस्कार्यो वहुरूपमनुस्मरन् ।
दण्डे सव्यक्रमेणैव मूले रज्जु निबद्धयेत् ॥ १४९ ॥

शुद्धोदककृतं पिण्डमष्टदिक्षु दळेषु च ।
अथवा नवपिण्डानि दिग्विदिक्षु च मध्यमे ॥ १५० ॥

द्विगुणं त्रिगुणं पिण्डं चतुर्गुणमथापि वा ।
निवेद्याभ्यर्चयेद्धीमान् धूपदीपैर्विशेषतः ॥ १५१ ॥

तत्पिण्डप्राशनफलं शृणु कौशिक सत्तम ।
पुत्रकामा तु या नारी स्नात्वोपोष्य विषशेतः ॥ १५२ ॥



प्राशयेत् प्रथमं पिण्डं सा तु पुत्रवती भवेत् ।
विधवा कन्यका वापि ध्वजपिण्डं न कारयेत् ॥ १५३ ॥

रोगी रोगविनाशार्थं पापी पापक्षयाय च ।
यत्रास्ते ध्वजयष्टिस्तु तद्राष्ट्रं वृद्धिमाप्नुयात् ॥ १५४ ।

अकालमृत्युस्तत्रास्ति दुर्भिक्षं च न जायते ।
कृतघ्नो ब्रह्महा गोघ्नो दृष्ट्वा ध्वजनिवेशनम् ॥ १५५ ॥

सर्वपापविमुक्तोऽभूत् किमुक्तं दर्शनात् फलम् ।
प्रविशेदालयं पश्चात् वापयेदुत्सवाङ्कुरम् ॥ १५६ ॥

ऐशान्ये पूर्वभागे वा दक्षिणे पावकेऽपि वा ।
उत्तरे पश्चिमे वापि कारयेद्यागमण्डपम् ॥ १५७ ॥

रसादिरुद्रहस्तान्तं मण्डपस्य तु विस्तृतम् ।
युगाश्रं तु कलास्तम्भं श्रुतिद्वारसमन्वितम् ॥ १५८ ॥

तन्मध्ये वेदिकां कुर्यान्नवभागैकभागतः ।
दर्पणोदरसंकाशं रत्निमात्रोन्नतं दृढम् ॥ १५९ ॥

कुण्डानि परितः कृत्वा नवपञ्चैकमेव वा ।
चतुरश्रं भगाकारमर्धचन्द्रं त्रिकोणकम् ॥ १६० ॥

वृत्तं षडश्रकं पद्ममष्टाश्रं चाष्टदिक्षु वै ।
ऐन्द्रेशकुण्डयोर्मध्ये प्रधानं तु षडश्रकम् ॥ १६१ ॥

चतुरश्रं चतुर्दिक्षु चैशान्यां तु षडश्रकम् ।
नवपञ्चविधिः प्रोक्तमेककुण्डविधिं शृणु ॥ १६२ ॥

ऐन्द्रशाङ्करयोर्मध्ये प्रधानं तु षडश्रकम् ।
मेखलात्रयसंयुक्तं नाभियोनिसमायुतम् ॥ १६३ ॥

कुण्डलक्षणमात्रेण सर्वकुण्डानि कारयेत् ।
उत्तमं नवकुण्डं स्यात् पञ्चकुण्डं तु मध्यमम् ॥ १६४ ॥

अधमं त्वेककुण्डं स्यात् वित्तशाठ्यं न कारयेत् ।
गोमयालेपनं कुर्यादलंकृत्य यथाविधि ॥ १६५ ॥

पुण्याहं वाचयित्वाथ प्रोक्षयेत्तज्जलेन तु ।
नैर्ऋते ईशभागे वा वास्तुहोमं समाचरेत् ॥ १६६ ॥

पर्यग्निकरणं कृत्वा प्रक्षिप्य विकिरानपि ।
वेद्यूर्ध्वे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः ॥ १६७ ॥

तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ।
तत्रैव पद्ममालिख्य षड्दळञ्च सकर्णकम् ॥ १६८ ॥

तन्मध्ये स्कन्दकुम्भञ्च द्रोणोदकसुपूरितम् ।
पूरितं शिवतोयेन द्विपार्श्वे वर्धनीद्वयम् ॥ १६९ ॥

ससूत्रान् सापिधानांश्च सवस्त्रान् हेमसंयुतान् ।
नवरत्नं प्रधाने तु हेमाब्जं वर्धनीद्वयम् ॥ १७० ॥



मध्ये कुमारमावाह्य मूलमन्त्रेण बुद्धिमान् ।
आसनावरणैरिष्ट्वा ब्रह्माङ्गैरपि पूजयेत् ॥ १७१ ॥

पूर्वे जगद्भुवं प्रोक्तं पावके तु चतुर्भुवम् ।
नैर्ऋत्यां मुनिशार्दूल यजेद्विश्वभुवं तथा ॥ १७२ ॥

आप्ये रुद्रभुवं पूज्य वायौ ब्रह्मभुवं तथा ।
भुवद्भुवं तथैशान्ये कुम्भमूले समर्चयेत् ॥ १७३ ॥

षड्वक्त्रं चैकवक्त्रं च बेरध्यानाकृतिं यजेत् ।
महावल्लीं देवसेनामर्चयेद्वर्धनीद्वये ॥ १७४ ॥

पूर्वादीशानपर्यन्तमष्टकुम्भान्न्यसेद्बुधः ।
जयन्ताख्यमग्निशिखं कृत्तिकापुत्रसंज्ञकम् ॥ १७५ ॥

अनन्तरं सूतपतिं सेनान्यं गुहसंज्ञकम् ।
हेमशूलं विशालाक्षं पूर्वाद्यष्टघटे यजेत् ॥ १७६ ॥

ससूत्रान् सापिधानांश्च सवस्त्रान् वारिपूरितान् ।
प्रत्येकं हेमसंयुक्तान् कुम्भान् पूर्वादिषु क्रमात् ॥ १७७ ॥

[5]पञ्चैक[1]चतुरो[4] [3]वह्नि[5]बाण[3]स्त्रि[4]चतुर[3]स्त्रयम् ।
संस्थाप्य परितो विद्वान् ऐशान्यामस्त्रवर्धनीम् ॥ १७८ ॥

दर्पणं पूर्णकुम्भञ्च मयूरं युग्मचामरम् ।
श्रीवत्सं स्वस्तिकं शङ्खं दीपे देवाष्टमङ्गलम् ॥ १७९ ॥

वेदिबाह्ये तु परितो न्यस्त्वाभ्यर्च्य यथाविधि ।
वज्रं शक्तिं च दण्डं च खड्गं पाशं तथाङ्कुशम् ॥ १८० ॥

गदां त्रिशूलं पद्मं च चक्रं चेति दशायुधम् ।
रक्षार्थं स्थापयेद्देवानस्त्राणि दशदिक्षु च ॥ १८१

तोरणानि चतुर्दिक्षु न्यस्त्वा संपूजयेत् क्रमात् ।
शान्तिभूतिबलारोग्यान् तोरणेषु विचक्षणः १८२ ॥

शान्तिं सुदेहं सुमुखं शक्रं सर्वं समर्चयेत् ।
इन्द्राग्निमध्ये मार्ताण्डं वह्निकोणे च पावकम् ॥ १८३ ॥

याम्ये विद्यां महावल्लीं ततः सेनापतिं यमम् ।
नैर्ऋते निर्ऋतिं विष्णुं महालक्ष्मीं प्रपूजयेत् ॥ १८४ ॥

आप्येति मूर्तिं [1]विशिखं गजं वरुणमस्तकम् ।
वायुं गणेशं क्षेत्रेशं वायव्यां दिशि पूजयेत् ॥ १८५ ॥

प्रतिष्ठां देवसेनां च सुमित्रं सोममुत्तरे ।
ईशानमपि धातारं गुरुमैशान्यके यजेत् ॥ १८६ ॥

तत्तत्स्वनाममन्त्रेण सर्वकुम्भान् समर्चयेत् ।
तां वाहनादिशक्त्यन्तान् परिवारयुतान् यजेत् ॥ १८७ ॥

दशायुधानि संपूज्य हुंफडिति स्वनामतः ।
भोभो शक्र त्वया स्वस्यां दिशि विघ्नप्रशान्तये ॥ १८८ ॥

1. शिखिनं



सावधानेन यागान्तं तावत् स्थेयं गुहाज्ञया ।
इत्येवं दशलोकेशान् प्रत्येकं श्रावयेद्गुरुः ॥ १८९ ॥

तृणे बद्धे च वंशे च मेध्या स्तम्भे च पञ्चसु ।
पूजयेत्तु पृथिव्यादि पञ्चभूतानि च क्रमात् ॥ १९० ॥

ततस्तीर्थाङ्कुरं कार्यमग्निकार्यमथाचरेत् ।
मूर्तिपञ्चाष्टचत्वारपरिवारसमायुतः ॥ १९१ ॥

आचार्यस्तैः समायुक्तो होमद्रव्याणि गृह्य च ।
अग्निकार्योक्तमार्गेण प्रधानाग्नौ हुनेद्गुरुः ॥ १९२ ॥

कुण्डसंस्कारकं कृत्वा सर्वकुण्डानि होमयेत् ।
समिदाज्यचरुं लाजं त्वपूपं गुलकं मधु ॥ १९३ ॥

तिलसर्षपमुद्गानि प्रियङ्गुं च दशोच्यते ।
पलाशदूर्वाखदिरकुशाश्वत्थगलूचिकाः ॥ १९४ ॥

वटार्कौ समिधः प्रोक्ता पूर्वादीनां दिशां क्रमात् ।
प्रधाने तु पलाशः स्यात् परिधिस्तेन तेन वै ॥ १९५ ॥

जगद्भवादि षड्वक्त्रैः षड्भिस्तन्मूर्तिमन्त्रकैः ।
द्रव्याण्येतानि मतिमान् एकैकाहुतिमाचरेत् ॥ १९६ ॥

मूलमन्त्रेण समिधं आज्यं वै शीर्षमन्त्रतः ।
तन्मन्त्रेण चरुं हुत्वा लाजं वै शिखया हुनेत् ॥ १९७ ॥

सक्तुं नेत्रेण मतिमानस्त्रं पञ्च निवेदयेत् ।
गुलमीशानमन्त्रेण मधु तत्पुरुषेण च ॥ १९८ ॥

तिलं वै वाममन्त्रेण सर्षपं कवचेन तु ।
मुद्गं त्वघोरमन्त्रेण प्रियङ्गुं सद्यमन्त्रतः ॥ १९९ ॥

शतमर्धं तदर्धं वा जुहुयात्तु विशेषतः ।
द्रव्यान्ते व्याहृतिं हुत्वा पूर्णां तु शिरसा हुनेत् ॥ २०० ॥

सर्वद्रव्यसमायुक्तं हव्यवाहेन होमयेत् ।
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्यजेत् ॥ २०१ ॥

ब्रह्मादीनां चतुर्दिक्षु मेखलोर्ध्वे बलिं क्षिपेत् ।
वज्रादीनां ततो मध्ये मेखलायां तथा बलिम् ॥ २०२ ॥

आचार्यं दक्षिणे पार्श्वे कल्पयेन्मण्डलत्रयम् ।
प्रथमे मण्डले विद्वान् रुद्रादीनां बलिं क्षिपेत् ॥ २०३ ॥

द्वितीयेऽप्यष्टनागानां आदित्यानां तृतीयके ।
अग्नेर्मूर्तिं समादाय कुम्भमध्ये सुयोजयेत् ॥ २०४ ॥

हविर्निवेदयेत्तत्र गुहाय च महामुने ।
होमकाले सदा कार्यं भेरी घण्टारवस्वनम् ॥ २०५ ॥

अस्त्रराजं पुरस्कृत्य सर्वकर्म समाचरेत् ।
एवं तीर्थदिनान्तं वै सायं प्रातर्हुनेत् बुधः ॥ २०६ ॥



होमान्ते ध्वजदेवाय नैवेद्यं दापयेद् गुरुः ।
गजादिपरिवाराणां तत्तत्स्थाने बलिं क्षिपेत् ॥ २०७ ॥

इन्द्रादिविष्णुपर्यन्तं महापीठे बलिं क्षिपेत् ।
ततो वै वास्तुदेवानां तत्तद्दिक्षु बलिं क्षिपेत् ॥ २०८ ॥

अनन्तादुपदंशं च बलिपात्रं निवापयेत् ।
बलिबेरं यथान्यायं अर्चयेद्गन्धपुष्पकैः ॥ २०९ ॥

शिरसा धारयित्वा तु पञ्चायुधमिहोत्तमम् ।
महाशक्तिं धनुर्बाणं अक्षमालां कमण्डलुम् ॥ २१० ॥

पञ्चायुधमिदं प्रोक्तं बल्यर्थं च विशेषतः ।
महाशक्तियुतो वापि बलिं ग्रामे विनिक्षिपेत् ॥ २११ ॥

ध्वजादिबलिपीठान्तं क्रमेण मुनिसत्तम ।
पूर्वाण्हे चान्नलिङ्गं तु मध्याह्ने पुष्पलिङ्गकम् ॥ २१२ ॥

सायाह्ने चाक्षतं लिङ्गं त्रिकाले तु विशेषतः ।
गुहाग्रे स्थण्डिलं कल्प्य शक्त्यस्त्रं तत्र विन्यसेत् ॥ २१३ ॥

स्कन्धदेव्या समायुक्तं कौतुकं बन्धयेत् क्रमात् ।
सौवर्णं राजतं वापि कार्पाससमथापि वा ॥ २१४ ॥

षट्तन्तुना तु तं सूत्रं भोगमोक्षप्रदं शुभम् ।
कुङ्कुमेन समायुक्तं ताम्बूलेनोपशोभितम् ॥ २१५ ॥

नववस्त्रसमोपेतं षट्सूत्रं साधकोत्तमः ।
स्थलिका स्थण्डिलोर्ध्वे तु रक्षासूत्रं तथैव च ॥ २१६ ॥

अङ्कुरार्पणसंयुक्तं सर्ववाद्यसमायुतम् ।
संवाद्य परिचारैश्च कृत्वा ग्रामप्रदक्षिणम् ॥ २१७ ॥

देवाग्रे न्यस्य मतिमान् पुण्याहं वाचयेत्ततः ।
त्र्यम्बकेन तु मन्त्रेण सूत्रं प्रागभिमन्त्र्य च ॥ २१८ ॥

स्कन्धसव्यकरे बध्वा विश्वेशायेति मन्त्रतः ।
बृहत्सामेति मन्त्रेण भस्म निक्षिप्य बुद्धिमान् ॥ २१९ ॥

देव्योर्गौरीमिमायेति तथा वामे च बन्धयेत् ।
महाशक्तेः सुमित्रस्य गुरुः सूत्रं च बन्धयेत् ॥ २२० ॥

अर्चयेद् गन्धपुष्पाद्यैर्नववस्त्रेण वेष्टयेत् ।
तद्रात्रौ तु विशेषेण प्रभूतहविषं ददेत् ॥ २२१ ॥

ताम्बूलं दापयेत् पश्चात् धूपं दीपं ततो रजः ।
आरात्रमर्चयेत् धीमान् दत्वा भस्म गुहाय वै ॥ २२२ ॥

रङ्गे वा शिबिकायां वा देवमारोप्य शास्त्रवित् ।
शङ्खघोषसमायुक्तं ब्रह्मघोषसमन्वितम् ॥ २२३ ॥

सर्वालंकारसंयुक्तं चित्रध्वजसमन्वितम् ।
गणिकायूथमभ्याशे सर्ववाद्यास्तदन्तिके ॥ २२४ ॥



तस्य पाशुपतः प्रान्ते महाव्रतधरास्तथा ।
महाशैवास्तदन्ते तु ब्राह्मणास्ते तदन्तिके ॥ २२५ ॥

सुमित्रेशस्तदन्ते तु जनाः सर्वे तदन्तिके ।
महाभेरीं पुरस्तात्तु यानकाले विशेषतः ॥ २२६ ॥

स्कन्दं शक्तिद्वययुतं सर्वालंकारसंयुतम् ।
सर्वाभरणसंयुक्तं सर्वदीपसमायुतम् ॥ २२७ ॥

उत्सवे यानकाले च यः करोति प्रदक्षिणम् ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥ २२८ ॥

ग्रामप्रदक्षिणं चैव पञ्चनृत्तसमन्वितः ।
वाद्यादिसर्वसङ्घैश्च प्रदक्षिणमथाचरेत् ॥ २२९ ॥

ब्रह्मस्थानं [1]समारभ्य प्रविशेत् ब्रह्मसंधिषु ।
पाद्यमाचमनं चार्घ्यं फलादिषु निवेदनम् ॥ २३० ॥

घटदीपैश्च कर्पूरमाराधयेत्तु षण्मुखम् ।
पुनश्चाचमनं चैव शनैः कृत्वालयं विशेत् ॥ २३१ ॥

सभायां मण्डपे वापि सर्वालंकारशोभिते ।
सिंहे पद्मासने वापि खट्वा पर्यङ्कमध्यमे ॥ २३२ ॥

अन्येष्वासनभेदेषु वाञ्छितेषु कुमारकम् ।
नीत्वाग्रे संस्थिताः सर्वे मृदङ्गादिमहारवाः ॥ २३३ ॥

1. समागत्य

नर्तको मद्दलः सव्ये वामतो वंशगेयकौ ।
गुरुर्दक्षिणपार्श्वे तु मूर्तिपैः संयुतः स्थितः ॥ २३४ ॥

वामपार्श्वे स्थितो राजा स्थानाचार्यस्तु तत्र वै ।
पार्श्वयोर्देवगणिका नृत्तमध्येष्य गायकम् ॥ २३५ ॥

देवस्योपरिभागे तु परिचारसमन्विताः ।
नार्यश्च विबुधाः पार्श्वे चामरव्यजनानि च ॥ २३६ ॥

पाद्यमाचमनं चार्घ्यं धूपदीपमतः परम् ।
आरत्त्याप्यर्चयेद्धीमान् भस्म दत्वा गुहाय च ॥ २३७ ॥

दर्शयेद्दर्पणं छत्रं चामरं व्यजनं गुरुः ।
नारिकेलोदकं पश्चात् पनसं कदलीफलम् ॥ २३८ ॥

नैवेद्यं हृदयेनैव ताम्बूलमपि दापयेत् ।
देवोत्सवस्य मध्ये तु न कुर्यान्मानुषोत्सवम् ॥ २३९ ॥

मोहेनैव कृतश्चेत्तु यः कर्ता स विनश्यति ।
ध्वजे ध्वजं न कर्तव्यं कर्तव्यं बर्हिणध्वजम् ॥ २४० ॥

रथे वा शिबिकायां वा रङ्गे वा गजवाहने ।
ग्रामप्रदिक्षणं कुर्यादह्निरात्रौ महोत्सवम् ॥ २४१ ।

उच्चैः पादप्रदीपस्तु रात्रौ ग्रामप्रदक्षिणम् ।
प्रथमे द्विजबृन्दं तु द्वितीयं वाद्यबृन्दकम् ॥ २४२ ॥



तृतीयं गणिकायूथं चतुर्थं केतुपुञ्जकम् ।
दीर्घछत्रविधिं पञ्च षष्ठं मुरवसंचयम् ॥ २४३ ॥

सप्तमं तु सुमित्रेशं भक्तानां यूथमष्टमम् ।
उत्सवस्योपकरणं नवमं परिकीर्तितम् ॥ २४४ ॥

दशमं जनसङ्घं तु गच्छेत् ग्रामप्रदक्षिणम् ।
धूपदीपसमायुक्तं सर्वालङ्कारसंयुतम् ॥ २४५ ॥

नित्यं वै यागहोमञ्च कुर्यात् ग्रामप्रदक्षिणम् ।
अग्निकार्योक्तमार्गेण होमं कुर्याद्विचक्षणः ॥ २४६ ॥

पूर्णाहुतिं च मूलेन परिषेचनमाचरेत् ।
सायाह्ने चोत्सवारम्भः प्रातस्त्ववभृथं भवेत् ॥ २४७ ॥

उदयाद्येकयामं तु प्रातः कालमिहोच्यते ।
भानोरस्तमनस्याग्रे याममेकं तथापरे ॥ २४८ ॥

सायं कालमिति प्रोक्तमुत्सवे होमकर्मणि ।
होमस्यान्ते बलिः कार्यः पूजावृद्धिकराय वै ॥ २४९ ॥

*अन्नलिङ्गे पाशुपतमस्त्रं चैव समाचरेत् ।
संपूज्य मुकुलं लिङ्गं पद्ममुद्रां प्रदर्शयेत् ॥ २५० ॥

बलिदानं प्रकर्तव्यं भेरीशङ्खादिनिस्वनैः ।
अस्त्रेशमन्नलिङ्गञ्च कृत्वा ग्रामप्रदक्षिणम् ॥ २५१ ॥

गजादिपरिवाराणां दिनदेवबलिं क्षिपेत् ।
नवाहेऽष्टादशबलिः सप्ताहे तु चतुर्दश ॥ २५२ ॥

पञ्चाहे स्याद्दशबलिस्त्रयाहे षट्बलिः स्मृतः ।
एकाहे द्विबलिः कार्यो विश्वामित्र महामुने ॥ २५३ ॥

आवाहने बलिः पूर्वमन्ते चोद्वासनम्बलिः ।
ग्रामप्रदक्षिणे काले देवेशं मञ्चसंस्थितम् ॥ २५४ ॥

यागेशाभिमुखीकृत्वा धूपदीपं हृदा ददेत् ।
जगद्भुवेति मन्त्रेण लाजपुष्पाञ्जलिं क्षिपेत् ॥ २५५ ॥

विघ्नेश्वरश्चतुर्वक्त्रो भूतगन्धर्वजातयः ।
इन्द्रश्च ऋषयो विष्णुः असुरश्च शिवस्तथा ॥ २५६ ॥

एते दिनाधिपाः प्रोक्ता एकाहादिक्रमात्ततः ।
लड्डुकं मधु मुद्गश्च नन्द्यावर्तं घृतान्वितम् ॥ २५७ ॥

विघ्नेशमन्त्रं तत्प्रीत्यै प्रथमे दापयेत्तदा ।
पायसं रक्तपद्मञ्च रम्भाफलघृतान्वितम् ॥ २५८ ॥

ब्रह्ममन्त्रमनुस्मृत्य द्वितीयेऽहनि दापयेत् ।
हरिद्रान्नञ्च पुन्नागकूश्माण्डघृतसंयुतम् ॥ २५९ ॥

गन्धर्वमन्त्रं संस्मृत्य चतुर्थेऽहनि दापयेत् ।
गुलान्नं जातिपुष्पञ्च पनसाम्रफलं घृतम् ॥ २६० ॥



इन्द्रमन्त्रमनुस्मृत्य पञ्चमेऽहनि दापयेत् ।
दूर्वालक्ष्मीपुष्पयुक्तं वेण्वन्नं सूपसंयुतम् ॥ २६१ ॥

पद्मकन्दमृषिभ्यो वै षष्ठेऽहनि च दापयेत् ।
तुलसीघृतसयुक्तं गुलान्नं बृहतीफलम् ॥ २६२ ॥

विष्णुमन्त्रमनुस्मृत्य सप्तमेऽहनि दापयेत् ।
अपूपं कृसरान्नञ्च कैतकं लाजसंयुतम् ॥ २६३ ॥

मधुनाप्यसुराणां वै दापयेदष्टमेऽहनि ।
आरग्वधञ्च शुद्धान्नं निष्पावं पनसाज्यकम् ॥ २६४ ॥

शिवमन्त्रमनुस्मृत्य नवमेऽहनि दापयेत् ।
दिनदेवबलिद्रव्यैर्लोकपालबलिं क्षिपेत् ॥ २६५ ॥

बलिपीठेऽथवा शुद्धे भूतपृष्ठे बलिक्रिया ।
बलिदानविधौ तत्र ये देवा बलिपार्श्वयोः ॥ २६६ ॥

तेषामग्रे बलिं दद्यात् स्वनामपदमन्त्रतः ।
अथवा वीथिमध्ये तु तानुद्दिश्य प्रदापयेत् ॥ २६७ ॥

चतुष्पथे पिशाचेभ्यस्त्रिपथे रक्षसां बलिः ।
सभास्थाने सरस्वत्यै ज्येष्ठायै तु जलाशये ॥ २६८ ॥

गोस्थाने चण्डरुद्रस्य भीमरुद्रस्य गोपुरे ।
उत्सवादौ समारभ्य सायंप्रातर्बलिं क्षिपेत् ॥ २६९ ॥

एवमेव बलिं दत्वा सर्वप्राणिसुखावहम् ।
पुष्पालाभे यथा लाभं पुष्पं ग्राह्य बलिं क्षिपेत् ॥ २७० ॥

दध्याज्ययुक्तं शुद्धान्नं सर्वेषामपि दापयेत् ।
कुक्कुटाण्डप्रमाणं वा महापीठे चतुर्गुणम् ॥ २७१ ॥

बलिं क्षिप्य यथान्यायं पादौ प्रक्षाल्य देशिकः ।
यागस्थानं प्रविश्याथ मतिमान् मुनिपुङ्गव ॥ २७२ ॥

अन्नलिङ्गं पाशुपतं पूर्वस्थाने नियोजयेत् ।
पूजापर्युषितं पुष्पं सुमित्राय प्रदापयेत् ॥ २७३ ॥

बलिनानुगतो देवो बल्यन्ते च प्रदक्षिणम् ।
प्रथमे चन्दनं शुभ्रं द्वितीये कुङ्कुमान्वितम् ॥ २७४ ॥

तृतीये कोष्ठसंयुक्तं चतुर्थे जातिगन्धकम् ।
पञ्चमे तु हरिद्रञ्च षष्ठेऽहनि लवङ्गकम् ॥ २७५ ॥

एलालवङ्गसंयुक्तं चन्दनं सप्तमेऽहनि ।
घनकुङ्कुमकर्पूरं त्रुटिजातिमुरान्वितम् ॥ २७६ ॥

हिमतोययुतं गन्धमष्टमेऽहनि दापयेत् ।
नवमे दिवसे विप्र कृष्णगन्धं विशेषतः ॥ २७७ ॥

पद्मं नीलोत्पलं जातिमल्लिकानीपचम्पकम् ।
पाटलीकरवीरञ्च वकुलं हल्लकं तथा २७८ ॥



नवैतानि च पुष्पाणि दिवसेषु नवस्वपि ।
गुग्गुलुञ्च घृतं कुष्ठं चन्दनं बिल्वमेव च ॥ २७९ ॥

निर्यासञ्च घनं चैव कर्पूरमुशिरं तथा ।
सर्वमध्वाज्यसंयुक्तं धूपद्रव्यं प्रकीर्तितम् ॥ २८० ॥

कर्पूरवर्तिना दीपं दापयेल्लघुवर्तिना ।
शुद्धान्न पायसं मुद्गं गुलान्नं कृसरान्नकम्[1] ॥ २८१ ॥

वेण्वन्नं च प्रियङ्ग्वन्नं माषान्नं तु यवान्नकम् ।
ओदनानि नवैतानि दिनेषु च नवस्वपि ॥ २८२ ॥

पद्मरागं मौक्तिकं च प्रवालं मरकतं तथा ।
पुष्परागं वज्रनीलं सूर्यवारादिभूषणम् ॥ २८३ ॥

सर्ववारेषु योग्यानि हारकाभरणानि च ।
तद्वर्णानि च पुष्पाणि तत्तद्वारेषु दापयेत् ॥ २८४ ॥

प्रथमेऽहनि मञ्चं स्यात् द्वितीये भूतवाहनम् ।
सिंहारूढं तृतीयेऽह्नि गजारूढं चतुर्थके ॥ २८५ ॥

पञ्चमे च मयूरं स्यात् षष्ठे वै कल्पतोरणम् ।
सप्तमेऽह्नि रथारूढं वाजी स्यादष्टमेऽहनि ॥ २८६ ॥

नवमेऽहनि मञ्चं स्याद् दिनवाहनमीरितम् ।
दिवाकाले सदा मञ्चं रात्रिकाले तु वाहनम् ॥ २८७ ॥

1. कृशरान्नकम्

सप्तमे दिवसे प्राप्ते रथारूढं दिवा भवेत् ।
चतुर्थे दिवसे रात्रौ पन्थानकं प्रचक्षते ॥ २८८ ॥

षष्ठेऽह्नि मुनिशार्दूल वसन्तोत्सवमुत्तमम् ।
हारिद्रचूर्णं दूर्वापि दत्वा धूरिति मन्त्रतः ॥ २८९ ॥

गुहाय वल्लीसेनाभ्यां सर्वमङ्गलकारकम् ।
सर्वेषामपि वर्णानां दापयेद्दानकालके ॥ २९० ॥

सप्तमे दिवसे विप्र रथारोहणकर्मणि ।
यात्रादानं प्रकर्तव्यं गोभूमितिलकाञ्चनैः ॥ २९१ ॥

श्रोत्रियाय दरिद्राय शिवभक्ताय दापयेत् ।
रथाढ्याङ्गानि सर्वाणि शोधयेच्छिल्पिवित्तमः ॥ २९२ ॥

पुण्याहं वाचयित्वाथ रथं संप्रोक्ष्य तज्जलैः ।
सर्वालंकारसंयुक्तं रथं संपूजयेत् क्रमात् ॥ २९३ ॥

छत्रदण्डेषु मायाख्या छत्रेषु शशिभास्करौ ।
भाराख्येषु च दण्डेषु त्वाधारायां समर्चयेत् ॥ २९४ ॥

परितः पट्टिकाजालैस्तथैकादश रुद्रकान् ।
गात्रेषु गात्रबृन्देषु धर्माधर्मादिकान् यजेत् ॥ २९५ ॥

गात्रं गात्रान्तरे वायुं स्थूपिकायां गुहं यजेत् ।
रथप्रान्ते स्वस्वदिक्षु लोकपालान् समर्चयेत् ॥ २९६ ॥



तदग्रपार्श्वयोर्विद्वान् जयं च विजयं तथा ।
मयूरं मध्यदण्डेषु देवान् सर्वांश्च रज्जुषु ॥ २९७ ॥

एवं संपूज्य मतिमान् धूपदीपं ददेत्ततः ।
बलिं क्षिप्त्वा तु तत्रैव तत्तन्नामादिमन्त्रतः ॥ २९८ ॥

देवेशं प्रीणयित्वाथ रथमारोप्य तद्दिने ।
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ॥ २९९ ॥

मुद्गसारं नालिकेरं दापयेत्तु विशेषतः ।
अष्टमे दिवसे विप्र मृगयात्रां समाचरेत् ॥ ३०० ॥

पूर्वादिषु चतुर्दिक्षु गन्तव्या मृगया वने ।
केचिद्धनुर्धराः केचित् खड्गखेटकधारिणः ॥ ३०१ ॥

अश्वारूढाः गजारूढाः केचिद्युद्धसमुद्यताः ।
एवं कृत्वा सुराध्यक्षा मृगक्रीडां विलोकयेत् ॥ ३०२ ॥

युद्धारम्भप्रभावेन कुर्याद्ग्रामप्रदक्षिणम् ।
नालिकेरजले तोयं मुद्गसारं गुलान्वितम् ॥ ३०३ ॥

निवेदयेद्विशेषेण ताम्बूलमपि दापयेत् ।
नवमे दिवसे विप्र कृष्णगन्धानुलेपनम् ॥ ३०४ ॥

षण्मुखं पूर्वरात्रे तु कौतुकं बन्धयेत्सुधीः ।
अर्चयित्वा सुगन्धाद्यैर्नैवेद्यमपि दापयेत् ॥ ३०५ ॥

ग्रामप्रदक्षिणं कुर्यात् सप्तविंशद्ग्रहावधि ।
प्रविशेदालयं पश्चात् प्रदोषे नवमेऽहनि ॥ ३०६ ॥

देवस्याग्रे त्रिपाद्यूर्ध्वे स्थलिकां स्थण्डिलोपरि ।
विन्यस्य कृष्णगन्धं तु कृत्वा धामप्रदक्षिणम् ॥ ३०७ ॥

पुण्याहं वचयेत्तत्र प्रोक्षयेच्चास्त्रमन्त्रतः ।
अङ्गन्यासं करन्यासं अन्तर्यजनमाचरेत् ॥ ३०८ ॥

[1]घृतस्नानादिकं कृत्वा भूषयेद्भूषणार्हकैः ।
कर्पूरमिश्रं तद्गन्धं सर्वाङ्गमपि लेपयेत् ॥ ३०९ ॥

आधाराधेयपूजां च कुर्यादपि विशेषतः ।
षण्मुखीं पद्ममुद्रां च नमस्कारं च दर्शयेत् ॥ ३१० ॥

पञ्चवक्त्रं ततः कुर्यात् सैकत्रिंशत् कलां न्यसेत् ।
न्यसेच्च मातृकान्यासं सुमुहूर्ते सुलग्नके ॥ ३११ ॥

धूपदीपं हृदा दत्वा पाद्यमाचमनं हविः ।
जम्बूफलप्रमाणेन कृष्णगन्धेन षण्मुखम् ॥ ३१२ ॥

जगद्भुवेति मन्त्रेण मूलमन्त्रेण देशिकः ।
देव्योर्गौरीमिमायेति यदि तन्मूलमन्त्रतः ॥ ३१३ ॥

लेपयेत् कण्ठदेशे तु स्तनमध्ये गुरूत्तमः ।
मूलबेरस्य तत्पश्चाद् वागीशानां ततः परम् ॥ ३१४ ॥

1. व्रत



आचार्यस्य ततः पश्चाद् भक्तानां तु ततः परम् ।
ततो राज्ञां प्रकर्तव्यं वर्णानामपि तत्परम् ॥ ३१५ ॥

यो वै भक्त्या कृष्णगन्धं लेपयेत् षण्मुखस्य तु ।
जन्मान्तरकृतं पापं तस्य नश्यत्यसंशयः ॥ ३१६ ॥

तस्मात् सर्वप्रयत्नेन ललाटे लेपयेन्नरः ।
अलंकृत्य मुनिश्रेष्ठ रक्तोत्पलमहोत्पलैः ॥ ३१७ ॥

रक्तमाल्यैर्भूषणैश्च देव्योः षण्मुखमादरात् ।
धूपदीपादिकं दत्त्वा नैवेद्यं चान्नसूक्ततः ॥ ३१८ ॥

मुखवाससमायुक्तं ताम्बूलं दापयेद्धृदा ।
पटं विसृज्य देवाय धूपदीपादिदापयेत् ॥ ३१९ ॥

दत्त्वा भस्म नमस्कृत्य प्रार्थयेदर्थमीप्सितम् ।
सवत्सां गां सुवर्णं च कांस्यपात्रं घृतान्वितम् ॥ ३२० ॥

तिलं प्रियङ्गुदानं च दापयेद्गुरवे नृप ।
यात्रादानमिदं प्रोक्तं कर्तुरिष्टप्रदायकम् ॥ ३२१ ॥

उष्णीषं चोत्तरीयं च सर्वाभरणभूषितम् ।
गुरुरर्घ्यकरो मौनी पीठे देवस्य दक्षिणे ॥ ३२२ ॥

स्थित्वा षडक्षरं मन्त्रं जपेत् सर्वार्थसिद्धये ।
भेरीमद्दलवीणाभिः शङ्खदुन्दुभिकाहलैः ॥ ३२३ ॥

नानावाद्यसमायुक्तं छत्रध्वजसमन्वितम् ।
चामरैर्व्यजनैर्युक्तं गणिकायूथसंयुतम् ॥ ३२४ ॥

यन्त्रदीपैः सुदीपैश्च त्रिशूलो यष्टिदीपकैः ।
शिबिकास्थितदेवेशं कृत्वा ग्रामप्रदक्षिणम् ॥ ३२५ ॥

शनैःशनैश्च मतिमान् वाद्ये सप्तग्रहावधि ।
दर्शयित्वा नर्ति कृत्वा प्रविश्य स्थानमण्डपम् ॥ ३२६ ॥

पृष्ठभागे वाद्यगीतैर्नृत्तैः सन्तोषयेद्गुहम् ।
स्नापयित्वा महासेनं शुक्लवस्त्रैश्च वेष्टयेत् ॥ ३२७ ॥

कर्पूरधूलिनोद्धृत्य मल्लिकाजातिपुष्पकैः ।
मुक्तादामैरलंकृत्य नैवेद्यं दापयेद् गुरुः ॥ ३२८ ॥

ताम्बूलं मुखवासं च धूपदीपादिदापयेत् ।
रङ्गे वा शिबिकायां वा रात्रौ यामत्रयात्परम् ॥ ३२९ ॥

पङ्क्तियानं प्रकर्तव्यं हर्म्ये वा पुरतोऽपि वा ।
वेदध्वनिसमायुक्तं स्तोत्रध्वनिसमन्वितम् ॥ ३३० ॥

वाद्यसप्तसमायुक्तं गीतनृत्तसमन्वितम् ।
आस्थानमण्डपं प्राप्य रात्रिशेषं व्यपोह्य च ॥ ३३१ ॥

अरुणोदयवेलायां पुनः स्नानं समाचरेत् ।
नदीतीरे तडागे वा प्रपायां शुद्धभूतले ॥ ३३२ ॥



पुण्याहं वाचयित्वाथ नवकुम्भश्च विन्यसेत् ।
गङ्गां च यमुनां चैव नर्मदां च सरस्वतीम् ॥ ३३३ ॥

सिन्धुं गोदावरीं चैव कावेरीं कुमरीं तथा ।
स्कन्दतीर्थञ्च तन्मध्ये पूजयेत्स्वस्वमन्त्रतः ॥ ३३४ ॥

अभिषिच्य यथाशक्ति देशिकः परिचारकैः ।
स्नापयेत्स्कन्दतीर्थैश्च गङ्गास्नानफलं लभेत् ॥ ३३५ ॥

आलयं तु प्रविश्याथ समलंकृत्य षण्मुखम् ।
रथे वा शिबिकायां वा मञ्चे वारोप्य षण्मुखम् ॥ ३३६ ॥

ग्रामप्रदक्षिणं कृत्वा सर्वोपकरणान्वितम् ।
महावीथीं क्षुद्रवीथीं सर्ववीथीं विशेषतः ॥ ३३७ ॥

आस्थानमण्डपं प्राप्य धूपदीपञ्च दापयेत् ।
देवस्य परमभागे तु वाद्यघोषैश्च गीतकैः ॥ ३३८ ॥

देवस्याग्रे विशेषेण स्थलशुद्धिं विधाय च ।
पाद्यमाचमनं चार्घ्यं धूपदीपञ्च दापयेत् ॥ ३३९ ॥

मुद्गसारं निवेद्याथ पिष्टापूपं गुलान्वितम् ।
उपदंशाज्यसंयुक्तं महाहविर्निवेदयेत् ॥ ३४० ॥

पानीयाचमनीयञ्च ताम्बूलमुखवासकम् ।
धूपदीपादिकं दत्त्वा षण्मुखं पूजयेद्गुरुः ॥ ३४१ ॥

ततश्चूर्णोत्सवं कुर्यात् उत्सवान्ते दिने [1]गुरुः ।
देवाग्रे शुद्धदेशे तु कल्पयेत्स्थण्डिलद्वयम् ॥ ३४२ ॥

जगद्भुवेति मन्त्रेण दर्भैः पुष्पैः परिस्तरेत् ।
पुण्याहं वाचयेत्तत्र हृदा संप्रोक्ष्य बुद्धिमान् ॥ ३४३ ॥

मङ्गलाङ्कुरसंयुक्ते प्राच्यां स्थण्डिलमध्यमे ।
कौतुकं तु विसृज्याथ तन्मध्ये विन्यसेत्क्रमात् ॥ ३४४ ॥

मुसलोलूखले न्यस्त्वा रक्तवस्त्रेण वेष्टयेत् ।
शक्तिश्च पश्चिमे स्थाप्य गुहास्त्रं संप्रपूजयेत् ॥ ३४५ ॥

लूखले शक्तिमाधारं मुसले स्कन्दमर्चयेत् ।
शूर्पे विष्णुं समभ्यर्च्य कुर्यात्तत्रशिरोऽर्पणम् ॥ ३४६ ॥

सुश्लक्ष्णं रजनीचूर्णं द्रोणं वापि तदर्धकम् ॥
लूखले हृदयेनैव निक्षिपेद्रात्रिचूर्णकम् ॥ ३४७ ॥

व्योमव्यापिपदैर्मन्त्रैर्लूखलेनैव घट्टयेत् ।
तत्रागतजनैर्वापि चूर्णयेद्गणिकाजनैः ॥ ३४८ ॥

रजनीचूर्णमादाय दूर्वा तैलेन संयुतम् ।
तीर्थकाले प्रयोक्तव्यं स्कन्दं स्कन्दास्त्रयोरपि ॥ ३४९ ॥

मस्तके देवदेवीनां स्कन्दास्त्रे मध्यपत्रके ।
सुब्रह्मण्येति मन्त्रेण दापयेद्देशिकोत्तमः ॥ ३५० ॥

1. बुधः



अयं कुमारमन्त्रेण ताम्बूलमपि दापयेत् ।
सुमित्राय गुरुः पश्चात् भक्तानामपि दापयेत् ॥ ३५१ ॥

तत्पश्चाद्रजनीचूर्णं यजमानाय दापयेत् ।
चूर्णं ग्रामजनानां वै दत्वा शीघ्रं प्रदक्षिणम् ॥ ३५२ ॥

प्रविश्य भवनं पश्चात् तीर्थस्नानमथाचरेत् ।
सायङ्कालेऽथवा रात्रौ तीर्थकर्मविशेषतः ॥ ३५३ ॥

नद्यां वाथ तडागे वा समुद्रे वाप्यथापि वा ।
तीरे समतलं सम्यक् प्रपां कृत्वातिसुन्दराम् ॥ ३५४ ॥

जलक्रीडासमायुक्तं कृत्वा ग्रामप्रदक्षिणम् ।
कुमारञ्च गुहास्त्रञ्च प्रपामारोप्य शास्त्रवित् ॥ ३५५ ॥

स्थण्डिलद्वितयं कृत्वा शालिभिर्विमलैस्तथा ।
सङ्कल्पमपि पुण्याहं ब्राह्मणैः सह वाचयेत् ॥ ३५६ ॥

जगद्भुवेति मन्त्रेण प्रोक्षयेच्छुद्धवारिणा ।
पश्चिमे स्थण्डिले शक्तिं पूर्वकुम्भांश्च विन्यसेत् ॥ ३५७ ॥

ससूत्रान् सापिधानांश्च सवस्त्रान् वारिपूरितान् ।
जयन्ताद्यष्टविद्येशान् मध्ये सेनान्यमर्चयेत् ॥ ३५८ ॥

जयशब्दादिसंयुक्तैः स्वस्तिमङ्गलवाचकैः ।
आवाह्य सर्वदेवांश्च गन्धाद्यैरर्चयेत् क्रमात् ॥ ३५९ ॥

दिग्बन्धश्च ततः कृत्वा तीर्थस्नानाय मन्त्रवित् ।
स्थापितैः कलशैर्विद्वानस्त्रराजं प्रपूजयेत् ॥ ३६० ॥

तत्तीर्थं वारिमध्ये तु व्याहृत्या विन्यसेत् [1]क्रमात् ।
हे देवि गङ्गे यमुने नर्मदे च सरस्वति ॥ ३६१ ॥

सिन्धु गोदावरी चैव कावेर्यत्र जलाशये ।
संनिधी भवतः स्वान्दतीर्थार्थमिह शुद्धये ॥ ३६२ ॥

तस्मिन् तीर्थे च यः स्नात्वा गङ्गास्नानफलं लभेत् ।
जलक्रीडां प्रकुर्वीत ततो भक्तजनैः सह ॥ ३६३ ॥

तत्तीर्थेनैव मतिमान् सेनान्यमभिषेचयेत् ।
प्रविश्य भवनं पश्चात् सर्वातोद्यसमन्वितम् ॥ ३६४ ॥

यागपूजाविधिं कुर्यात् होमान्ते यागमूर्तिपम्[2] ।
मूलबेरे नियोज्याथ स्नपनं तत्र कारयेत् ॥ ३६५ ॥

यागवेदिस्थितैः कुम्भैः पूजयेन्मूलबेरकम् ।
गन्धतोयैः शुद्धतोयैर्गन्धाद्यैरर्चयेत्ततः ॥ ३६६ ॥

महाहविर्निवेद्याथ धूपदीपादि दापयेत् ।
बलिं दत्वा क्रमेणैव बलिपीठे समर्चयेत् ॥ ३६७ ॥

ग्रामप्रदक्षिणं कुर्यात् मौनव्रतधरस्तथा ।
सन्धिदेवान् विसृज्याथ बलिपीठस्य दक्षिणे ॥ ३६८ ॥

1. बुधः 2 मूर्तिनम्



स्थित्वाशिषं ततो जप्त्वा शङ्खभेर्यादिभिः स्वनैः ।
ध्वजावरोहणं कुर्यात् पुण्याहं वाचयेद्गुरुः ॥ ३६९ ॥

ध्वजस्य दण्डमूले तु पिण्डादि च निवेदयेत् ।
गजे वा मूलबेरस्य वाहने योजयेद् ध्वजम् ॥ ३७० ॥

गर्भगेहं प्रविश्याथ पाद्यमाचमनार्घ्यकम् ।
धूपदीपं हृदा दत्त्वा सर्वकर्म समाचरेत् ॥ ३७१ ॥

सुमित्रयागं वक्ष्येऽहं शृणु कौशिक सुव्रत ।
अलंकृत्य सुमित्रेशं वस्त्रैराभरणैरपि ॥ ३७२ ॥

तस्याग्रे स्थण्डिलं कृत्वा सर्वकर्म समाचरेत् ।
समिदन्नाज्यधान्यैश्च मूलेनैव हुनेद्बुधः ॥ ३७३ ॥

शतमर्धं तदर्धं वा दशांशं तत् षडङ्गकैः ।
हुत्वा हविर्निवेद्याथ ताम्बूलमपि दापयेत् । ३७४ ॥

धूपदीपादिकं दत्वा संधिदेवबलिं क्षिपेत् ।
बलिपात्रं चान्नलिङ्गमस्त्रराजं विशेषतः ॥ ३७५ ॥

परिचारैः परिवृतो गुरुर्मौनव्रतस्ततः ।
हुङ्कारो दीपहीनः सन् कुर्याद्ग्रामप्रदक्षिणम् ॥ ३७६ ॥

संधौ संधौ बलिं दद्यात् त्रिपथे च चतुष्पथे ।
बलिपीठे बलिं दद्यात् पादौ प्रक्षाल्य बुद्धिमान् ॥ ३७७ ॥

आलयं तु प्रविश्याशु सर्वेषां भस्म दापयेत् ।
आचार्यं पूजयेत् कर्ता वस्त्रहेमाङ्गुलीयकैः ॥ ३७८ ॥

दक्षिणां दापयेत् पश्चात् गोभूमिकाञ्चनैः सह ।
षण्णिष्कमधमं ज्ञेयं मध्यमं दशनिष्ककम् ॥ ३७९ ॥

निष्काणां विंशतिः श्रेष्ठं आचार्यस्य तु दक्षिणा ।
दशभागैकभागं तु मूर्तिपानां तु दक्षिणा ॥ ३८० ॥

यागोपकरणं सर्वं देशिकाय प्रदापयेत् ।
भक्तानां परिचाराणां यथाशक्त्या च दक्षिणा ॥ ३८१ ॥

दीनानन्धांश्च भक्तांश्च ब्राह्मणान् भोजयेत् सुधीः ।
अपरे दिवसे विप्र देव्युत्सवमथाचरेत् ॥ ३८२ ॥

ततोऽधिवासनं कुर्यात सर्वरात्रं महामुने ।
समलंकृत्य देवेशं देव्योर्भूषैर्विशेषतः ॥ ३८३ ॥

शक्तिद्वयं पुरस्कृत्य सेनान्यं तदनन्तरम् ।
ग्रामप्रदक्षिणं कृत्वा प्रविश्यास्थानमण्डपम् ॥ ३८४ ॥

धूपदीपं हृदा दत्त्वा नीराजनमनन्तरम् ।
महाहविर्निवेद्याथ ताम्बूलमपि दापयेत् ॥ ३८५ ॥

नित्यं नित्यं रात्रिकाले नृत्तैः संतोषयेद्गुहम् ।
गुहोत्सवविधिः प्रोक्तः समासान्मुनिपुङ्गव ॥ ३८६ ॥



एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।
धर्मार्थी लभते धर्ममर्थार्थी चार्थमाप्नुयात् ॥ ३८७ ॥

कामार्थी लभते कामं मोक्षार्थी मोक्षमाप्नुयात् ।
विजयस्तु भवेन्नित्यं सत्यं सत्यं वदाम्यहम् ।
इहैव कामान् भुक्त्वान्ते कौमारं लोकमाप्नुयात् ॥ ३८८ ॥

इति श्रीकुमारतन्त्रे उत्सवविधिर्नामत्रिंशः पटलः

———

## चतुर्दशः पटलः

अथ प्रायश्चित्तविधिः

कौशिकः—

उत्सवस्योपकरणे क्रियामन्त्रविहीनके ।
निमित्ते समनुप्राप्ते पूजाविच्छिन्नके पुनः ॥ १ ॥

प्रायश्चित्तं कथं देव वक्तुमर्हसि शंकर ।

ईश्वर उवाच—

साधु साधु त्वया पृष्टं तच्छृणुष्व महामुने ॥ २ ॥

मायूरयागहीने तु ध्वजारोहणहीनके ।
ध्वजलक्षणहीने तु दण्डह्रस्वादिहीनके ॥ ३ ॥

स्कन्धहीने वेदिहीने ध्वजदण्डस्य भग्नके ।
ध्वजस्य रज्जुविच्छिन्ने तत्रैव ध्वजपातने ॥ ४ ॥

ध्वजघण्टाविहीने तु घण्टापातनके पुनः ।
भेरीताडनहीने च वेदिकुण्डविहीनके ॥ ५ ॥

वेद्यूर्ध्वस्थण्डिले हीने यागशालादिदग्धके ।
घोणच्छेदेन पतिते छिन्नयोर्यजनेऽपि च ॥ ६ ॥

शालालङ्करणे वस्त्रे दग्धे सति घटैः सह ।
वितानध्वजहीने च तोरणानां विहीनके ॥ ७ ॥

स्रुक्स्रुवौ तु विहीने चेदेतौ लक्षणहीनके ।
दर्भविष्टरहीने च होमद्रव्यविहीनके ॥ ८ ॥

दशायुधविहीने च अष्टमङ्गलहीनके ।
अङ्कुरार्पणहीने तु पालिकादिविहीनके ॥ ९ ॥

अस्त्रयागविहीने च कुम्भस्नपनहीनके ।
कुम्भवस्त्रविहीने च सुकूर्चविधिहीनके ॥ १० ॥

कुम्भे जले विहीने च हेमरत्नविहीनके ।
सूत्रवेष्टनहीने च वेदिवस्त्रविहीनके ॥ ११ ॥

नैवेद्यादिविहीने च यागदीपविहीनके ।
कुण्डे च वह्निविच्छिन्ने प्रणीताभिन्नचालने ॥ १२ ॥

मन्त्रहीने क्रियाहीने समित्परिधिहीनके ।
बलिद्रव्यविहीने च बलिदानविहीनके ॥ १३ ॥



बलिलिङ्गविहीने च तद्दिने पतितेऽथवा ।
अस्त्रेशपतने [1]भङ्गे वेणुदण्डविहीनके ॥ १४ ॥

आयुधानि प्रणष्टे च भिन्ने वा पतितेऽथवा ।
बलिपीठविहीने च बलिदानविहीनके ॥ १५ ॥

बलिदीपविहीने च रात्रिकालेमहामुने ।
बलिदाने च याने च कालातिक्रमणे सति ॥ १६ ॥

उत्सवे यानहीने च तत्काले कलहे सति ।
पूजापर्युषिते द्रव्ये संकुले प्रतिमासु च ॥ १७ ॥

यानकाले तथा बेरे पतने चाङ्गहीनके ।
दीक्षान्तरैश्च शूद्रैश्च प्रतिमास्पर्शने तथा ॥ १८ ॥

तेनैव यागशाला च स्पृष्टे च शुनकादिना ।
उत्सवे यत्र तद्ग्रामे मनुष्ये च मृते सति ॥ १९ ॥

परिवेष्टनहीने च नीराजनविहीनके ।
पताकाद्यग्निना दग्धे युद्धारम्भविहीनके ॥ २० ॥

रक्षासूत्रविहीने च कौतुकस्नानहीनके ।
चूर्णोत्सवविहीने च तीर्थकर्मविहीनके ॥ २१ ॥

वेद्यूर्ध्वैः स्थापितैः कुम्भैरभिषेकविहीनके ।
ध्वजावरोहणे हीने शुद्धस्नानविहीनके ॥ २२ ॥

1. भग्ने

दिनाधिके तथा न्यूने यानकाले महोत्सवे ।
पीठोद्वासनहीने च सुमित्रायानहीनके ॥ २३ ॥

आरभ्य चान्यतन्त्रेण स्कन्दयागे कृते सति ।
आचार्यदक्षिणाहीने द्विजभोजनहीनके ॥ २४ ॥

ग्रामकर्तृनृपाणां च लग्नर्क्षप्रतिकूलके ।
यागोपकरणं सर्वमदत्ते देशिकाय वै ॥ २५ ॥

एवमादिसमुत्पन्ने प्रायश्चित्तं विधीयते ।
मयूरयागहीनं चेद्दुष्टसर्पविवर्धनम् ॥ २६ ॥

मयूरस्नपनं कृत्वा गन्धपुष्पादिभिर्यजेत् ।
मुद्गान्नञ्च निवेद्याथ शान्तिहोमं समाचरेत् ॥ २७ ॥

मयूरयागविधिना प्रागुक्तेन समाचरेत् ।
ध्वजारोहणहीनश्चेत् ध्वजलक्षणहीनके ॥ २८ ॥

तद्राष्ट्रं भयमाप्नोति राजा दौर्जन्यमाप्नुयात् ।
ध्वजसङ्कल्पविधिना तद्दोषशमनाय च ॥ २९ ॥

शान्तिहोमं ततः कुर्याद्ध्वजमारोपयेत्पुनः ।
ध्वजदण्डादिके न्यूने स्कन्दयष्टिविहीनके ॥ ३० ॥

उपवेदिविहीनश्चेत् परचक्राद्भयं भवेत् ।
शिल्पिनं हन्ति सहसा महान्दोषो गुरोर्भवेत् ॥ ३१ ॥



पुनः सलक्षणं दण्डं स्थाप्य सङ्कल्प्य वेदिकाम् ।
दण्डसंप्रोक्षणं कृत्वा तदा शान्तिद्वयं जपेत् ॥ ३२ ॥

ध्वजदण्डविभिन्ने च परभूपाद्भयं भवेत् ।
शान्तिहोमं ततः कृत्वा पुनः संधानमाचरेत् ॥ ३३ ॥

ध्वजस्य रज्जुविच्छिन्ने तत्रैव ध्वजपातने ।
कर्तारञ्च गुरुं हन्ति शान्तिहोमं समाचरेत् ॥ ३४ ॥

अन्यं रज्जुं दृढं ग्राह्यं बध्वा संप्रोक्षयेद्बुधः ।
घण्टाविहीने पतिते बालानां नाशनं भवेत् ॥ ३५ ॥

पुण्याहं वाचयित्वाथ मूलमन्त्रशतं जपेत् ।
घण्टामस्त्रेण संप्रोक्ष्य पुनः संधानमाचरेत् ॥ ३६ ॥

भेरीताडनहीनं चेन् भूतप्रेतादिवर्धनम् ।
स्कन्दस्य स्नपनं कृत्वा ततो भेरीं प्रताडयेत् ॥ ३७ ॥

घोषकाले तु तद्घोणा छेदे वा पतितेऽपि वा ।
चर्मच्छेदेपि तद्राष्ट्रे सस्यनाशं भवेद्ध्रुवम् ॥ ३८ ॥

मयूरमूलमन्त्रेण हुत्वा जप्त्वा शतं जपेत् ।
परिग्राह्यान्यभेरीं च तडायेद्विधिना बुधः ॥ ३९ ॥

यागशालाविहीनश्चेत् वेदिकुण्डविहीनके ।
एतल्लक्षणहीनं चेत् भवेत्तद्ग्रामनाशनम् ॥ ४० ॥

सहसा विधिना कृत्वा पुण्याहं वाचयेत्ततः ।
शान्तिहोमं ततः कृत्वा तदूर्ध्वं कर्म कारयेत् ॥ ४१ ॥

वेद्यूर्ध्वे स्थण्डिले हीने सस्यानां नाशनं भवेत् ।
गव्यैः संप्रोक्ष्य मतिमान्मूलमन्त्रैः शतं जपेत् ॥ ४२ ॥

स्थण्डिलं विधिना कृत्वा तत्र कुम्भान् न्यसेत्ततः ।
यागशालाग्निना दग्धे मध्ये वा चोत्सवस्य तु ॥ ४३ ॥

राजा मरणमाप्नोति परचक्राद्भयं भवेत् ।
सर्वांस्तान्सहसा त्यक्त्वा सर्वं सङ्कल्प्य पूर्ववत् ॥ ४४ ॥

दिशाहोमं ततः कृत्वा पुनरुत्सवमाचरेत् ।
विधिना मुनिशार्दूल तद्दिने तु गुरूत्तमाः ॥ ४५ ॥

केवलं यागशाला हि दग्धे कुर्याच्च पूर्ववत् ।
पुण्याहं वाचयित्वाथ शान्तिहोमं समाचरेत् ॥ ४६ ॥

गुहस्य स्नपनं कृत्वा विशेषाराधनं चरेत् ।
शालालङ्करणे वस्त्रे दग्धे सति पटैः सह ॥ ४७ ॥

वितानध्वजहीने च तोरणादिविहीनके ।
महाव्याधिर्भवेद्राज्ये कल्याणानि विनश्यति ॥ ४८ ॥

स्नपनं पूर्ववत्कृत्वा शान्तिहोमं समाचरेत् ।
स्रुक्स्रुवौ च विहीनौ चेत्तल्लक्षणविहीनके ॥ ४९ ॥



तद्ग्रामवासिनां विप्र ज्वरमारी प्रजायते ।
शान्तिहोमं ततः कृत्वा कारयेत्तौ सलक्षणौ ॥ ५० ॥

दर्भविष्टरहीने च शस्त्रबाधा भवेन्नृणाम् ।
मूलमन्त्रैश्शतैर्हुत्वा दर्भैः परिधिना नयेत् ॥ ५१ ॥

होमद्रव्यविहीनं चेदनावृष्टिर्भविष्यति ।
महाव्याहृतिभिर्हुत्वा चास्त्रेणैव शतं हुनेत् ॥ ५२ ॥

तत्तद्द्रव्यं हुनेद्धीमान् शास्त्रदृष्टेन वर्त्मना ।
दशायुधविहीने च तस्करैर्भयमादिशेत् ॥ ५३ ॥

दशाक्षरेण मन्त्रेण जुहुयात्तु शताहुतिम् ।
सहसा लक्षणैः कृत्वा प्रोक्ष्य स्थानेषु विन्यसेत् ॥ ५४ ॥

अष्टमङ्गलहीने च स्त्रीणां नाशकरं भवेत् ।
स्कन्दसूक्तस्य षण्मन्त्रैरष्टवारं हुनेत्सुधीः ॥ ५५ ॥

कृत्वाष्टमङ्गलं भूयः प्रोक्ष्य संकल्पयेत्क्रमात् ।
अङ्कुरार्पणहीने च पालिकादिविहीनके ॥ ५६ ॥

सर्वेषां लक्षणे हीने सस्यनाशं न संशयः ।
शान्तिहोमं ततः कृत्वा कारयेदङ्कुरार्पणम् ॥ ५७ ॥

अस्त्रयागविहीने च महामारी प्रजायते ।
मूर्तिहोमं ततः कृत्वा स्नपनं षण्मुखस्य वै ॥ ५८ ॥

यागाधिशसनं तत्र कुर्यात्पूर्वोक्तमार्गतः ।
कुम्भस्थापनहीने च कुम्भहीने च निर्जले ॥ ५९ ॥

हेमरत्नविहीने च सूत्रवेष्टनहीनके ।
अपिधानविहीने च कुम्भरत्नविहीनके ॥ ६० ॥

वेदिवस्त्रविहीने च नैवेद्यादिविहीनके ।
दुर्भिक्षं जायते भूमौ मूर्तिहोमं समाचरेत् ॥ ६१ ॥

मूलेनैव शतं जप्त्वा सर्वकर्म समाचरेत् ।
यागदीपविहीने च नेत्ररोगं भवेद्भुवि ॥ ६२ ॥

शान्तिहोमं ततः कृत्वा दीपं द्विगुणमानयेत् ।
कुण्डे च वह्निविच्छिन्ने दुर्भिक्षं जायते भुवि ॥ ६३ ॥

निष्फलं तस्य तत्कर्म शान्तिहोमं समाचरेत् ।
भस्मधारं ततोद्धास्य [1]विधानाग्निं निधापयेत् ॥ ६४ ॥

समिदाज्येन चरुणा मूलेनैव शतं हुनेत् ।
द्रव्यान्ते व्याहृतिं हुत्वा यदस्मिन्निति होमयेत् ॥ ६५ ॥

प्रणीतिर्लीयते भिन्ने गवां व्याधिस्तु जायते ।
इदं विष्णिवति मन्त्रेण होमयेद् द्वादशाहुतिम् ॥ ६६ ॥

जुहुयादस्त्रमन्त्रेण शतं वै षोडशाहुतिम् ।
प्रणीतां पूर्ववत्कृत्वा तदूर्ध्वं कर्म कारयेत् ॥ ६७ ॥

1 विधिना



मन्त्रहीने क्रियाहीने दारिद्र्यं जायते गुरोः ।
महोन्मादो भवेद्भूमौ मूर्तिहोमं समाचरेत् ॥ ६८ ॥

मूलेनैव शतं जप्त्वा तथा पाशुपतं जपेत् ।
उक्तद्रव्यैश्च मन्त्रैश्च विधिना होममाचरेत् ॥ ६९ ॥

समित्परिधिहीने च प्रजा दुःखमवाप्नुयात् ।
शान्तिहोमं ततः कृत्वा समित्परिधिमानयेत् ॥ ७० ॥

बलिद्रव्यविहीने च बलिदानविहीनके ।
सस्यानां नाशनं तत्र क्षुद्बाधा जायते नृणाम् ॥ ७१ ॥

कृत्वा तदा मूर्तिहोमं स्कन्दमूलं शतं जपेत् ।
बलिद्रव्यं समासाद्य बलिदानं समाचरेत् ॥ ७२ ॥

बलिलिङ्गविहीने तु भिन्ने च पतितेऽथवा ।
कर्तुर्विनाशो भवति परिवारस्य दुर्दशा ॥ ७३ ॥

शान्तिहोमं ततः कृत्वा मूलेनैव शतं हुनेत् ।
बलिलिङ्गं नवं कृत्वा पुनश्च बलिमाचरेत् ॥ ७४ ॥

अस्त्रेशपतिते हीने नष्टे च मुनिपुङ्गव ।
राष्ट्रग्रामनृपाणां च शत्रुभिर्भयमादिशेत् ॥ ७५ ॥

पतितश्चेत्तु संप्रोक्ष्य शान्तिहोमं समाचरेत् ।
भिन्ने नष्टे पुनः कृत्वा संप्रोक्षणमथाचरेत् ॥ ७६ ॥

शान्तिहोमं ततः कृत्वा तन्मूलेन शतं हुनेत् ।
पुनर्बलिं ततः क्षिप्त्वा ब्राह्मणान्भोजयेत्ततः ॥ ७७ ॥

अस्त्रस्य दण्डभग्ने च नवदण्डं प्रयुज्य च ।
पञ्चगव्येन संप्रोक्ष्य बलिशेषं समाचरेत् ॥ ७८ ॥

आयुधानि प्रणष्टे च भिन्ने वा पतितेऽपि वा ।
प्रवर्तते महामारी यागो राक्षसभुग्भवेत् ॥ ७९ ॥

षडक्षरेण मन्त्रेण जपेदष्टोत्तरं शतम् ।
नष्टे भिन्ने पुनः कृत्वा प्रोक्ष्य संस्थापयेत्सुधीः ॥ ८० ॥

बलिपात्रविहीने च धनधान्यक्षयं भवेत् ।
शान्तिहोमं ततः कृत्वा सहसा पात्रमानयेत् ॥ ८१ ॥

बलितालविहीने च न तुष्टाः सन्धिदेवताः ।
मूर्तिहोमं ततः कृत्वा जगतस्त्राणनाशनम् ॥ ८२ ॥

बलिदीपविहीने तु ग्रामलक्ष्मी गता भवेत् ।
स्कन्दगायत्रिमन्त्रेण जपेदष्टोत्तरं शतम् ॥ ८३ ॥

द्विगुणं दीपमारोप्य बलिशेषं समाचरेत् ।
बलिदाने च याने च कालातिक्रमणे सति ॥ ८४ ॥

तद्ग्रामस्य क्षयं प्रोक्तं शान्तिहोमं समाचरेत् ।
बलिदानं देवयानं कारयेन्मुनिपुङ्गव ॥ ८५ ॥



उत्सवे यागहीने च कर्तुमरणमादिशेत् ।
मूर्तिहोमं ततः कृत्वा कौतुकं स्थाप्य चार्चयेत् ॥ ८६ ॥

यानक्रमेण मतिमान् कुर्याद्ग्रामप्रदक्षिणम् ।
तत्काले कलहं विप्र तद्राष्ट्रं कलहं भवेत् ॥ ८७ ॥

शान्तिहोमं ततः कृत्वा जपेदस्त्राणुना शतम् ।
पूजापर्युषितं द्रव्यं संकुले प्रतिमासु च ॥ ८८ ॥

परचक्राद्भयं भूमौ महामारी प्रवर्तते ।
शान्तिहोमं ततः कृत्वा जपेत् पाशुपतं शतम् ॥ ८९ ॥

यानकाले तथा बेरे पतने चाङ्गहीनके ।
ग्रामराष्ट्रनृपाणां च नाशनं भवति ध्रुवम् ॥ ९० ॥

स्नपनं तत्र कुर्वीत शान्तिहोमं तु कारयेत् ।
पुनर्यानं प्रकर्तव्यं पतने मुनिपुङ्गव ॥ ९१ ॥

शिरो बाहुस्तथा पादौ हीने तु परिवर्जयेत् ।
पूर्ववत् प्रतिमां कृत्वा जलाधिवासनं विना ॥ ९२ ॥

प्रतिष्ठां विधिना कृत्वा पुनरुत्सवमाचरेत् ।
वाहनायुधवस्त्रादिकर्णाङ्गुलिविहीनके ॥ ९३ ॥

पद्मबन्धविहीने तु पुनः संधानमाचरेत् ।
संप्रोक्षणं ततः कृत्वा कुर्यात् ग्रामप्रदक्षिणम् ॥ ९४ ॥

मूर्तिहोमं ततः कृत्वा ब्राह्मणान् भोजयेत्सुधीः ।
दीक्षान्तरैस्तथा शूद्रैः प्रतिमास्पर्शिते यदि ॥ ९५ ॥

तथैव यागशालायां संस्पृष्टे च शुना तथा ।
तद्ग्रामवासिनां शीघ्रं स्थानभ्रष्टं न संशयः ॥ ९६ ॥

पुण्याहं वाचयित्वाथ गव्यैः संप्रोक्षयेत्सुधीः ।
स्नपनं कारयेद्बिम्बे शान्तिहोमं तु कारयेत् ॥ ९७ ॥

उत्सवं यत्र तद्ग्रामे मनुजे तु मृते सति ।
वर्णानां दूषणोत्पत्तिः शीघ्रं त्यक्त्वा तु तच्छतम् ॥ ९८ ॥

मूर्तिहोमं ततः कृत्वा हुनेदस्त्राणुना शतम् ।
परिवेष्टनहीने च राजाज्ञा क्षीयते भुवि ॥ ९९ ॥

स्कन्दसूक्तशतं जप्त्वा शान्तिहोमं समाचरेत् ।
नीराजनविहीने तु भवेदग्निभयं भुवि ॥ १०० ॥

षडक्षरेण मन्त्रेण शतं जप्त्वा स मन्त्रवित् ।
नीराजनं ततः कुर्यात् शास्त्रदृष्टेन वर्त्मना ॥ १०१ ॥

पताका ह्यग्निना दग्धे महावातप्रकोपनः ।
तत्त्यक्त्वा सहसा मन्त्री जपेदस्त्राणुना शतम् ॥ १०२ ॥

मूर्तिहोमं ततः कृत्वा पञ्चशान्तिं जपेत् पुनः ।
युद्धारम्भविहीनं तु बालानां नाशनं भवेत् ॥ १०३ ॥



मूर्तिहोमं ततः कृत्वा युद्धारम्भमथाचरेत् ।
रक्षासूत्रविहीने तु लोकरक्षा विनश्यति ॥ १०४ ॥

अयुतं जप्य चास्त्राणुं कौतुकं बन्धयेत्ततः ।
कौतुकस्नानहीने तु वृषं नश्यत्यसंशयः ॥ १०५ ॥

मूर्तिहोमं ततः कृत्वा कौतुकस्नानमाचरेत् ।
चूर्णोत्सवविहीने तु भवेयुर्विधवा स्त्रियः ॥ १०६ ॥

दशाक्षरेण मन्त्रेण हुनेदष्टोत्तरं शतम् ।
मूलमन्त्रशतं जप्त्वा चूर्णोत्सवमथाचरेत् ॥ १०७ ॥

तीर्थकर्मविहीने तु तद्राष्ट्रं जलवर्जितम् ।
अस्त्राणुना शतं जप्त्वा तीर्थकर्म समाचरेत् ॥ १०८ ॥

वेद्यूर्ध्वे स्थापितैः कुम्भैरभिषेकविहीनके ।
निष्फलं यागकर्म स्यात् मूर्तिहोममथाचरेत् ॥ १०९ ॥

मूर्तिहोमं ततः कृत्वा कुर्यात्तैरभिषेचनम् ।
ध्वजावरोहणेहीने महावातप्रकोपनम् ॥ ११० ॥

मूर्तिहोमं ततः कृत्वा ध्वजं तत्रावरोहयेत् ।
शुद्धस्नानविहीने च वृष्टिर्नश्यत्यसंशयः ॥ १११ ॥

शान्तिहोमं ततः कृत्वा स्नपनं तत्र कारयेत् ।
दिनाधिके महादुःखं कर्तुः संजायते ध्रुवम् ॥ ११२ ॥

मूर्तिहोमं ततः कृत्वा ब्राह्मणानपि भोजयेत् ।
अपरे दिवसे विप्र तीर्थकर्म समाचरेत् ॥ ११३ ॥

न्यूने चैव तथा कर्तुर्ग्रामस्य च भवेत् क्षयम् ।
प्रागुक्तविधिना तस्मादुत्सवं कारयेद्बुधः ॥ ११४ ॥

आदौ व्यवस्थितं त्यक्त्वा होमात् पूर्वेऽथवा परे ।
उत्सवे तु कृते तस्य ग्रामस्य च भवेत् क्षयम् ॥ ११५ ॥

शान्तिहोमं ततः कृत्वा स्नपनं कारयेत्तदा ।
पूर्वोक्तविधिना धीमान् पुनरुत्सवमाचरेत् ॥ ११६ ॥

पीठोद्वासनहीने च न प्रीताः सन्धिदेवताः ।
मूलेनैव शतं जप्त्वा पीठोद्वासनमाचरेत् ॥ ११७ ॥

सुमित्रयागहीने तु सर्वकर्म च निष्फलम् ।
गुहस्य स्नपनं कृत्वा सौमित्रं यागमाचरेत् ॥ ११८ ॥

आरम्भोऽप्यन्यतन्त्रेण स्कन्दयागे कृते सति ।
राज्ञां सेना क्षयं याति तद्यज्ञं पुनराचरेत् ॥ ११९ ॥

आचार्यदक्षिणेहीने द्विजभोजनहीनके ।
न लभेत्तत्फलं कर्ता क्षयं प्राप्नोत्यसंशयः ॥ १२० ॥

शान्तिहोमं ततः कृत्वा द्विगुणां दक्षिणां ददेत् ।
ग्रामकर्तृनृपाणाञ्च लग्नर्क्षप्रतिकूलके ॥ १२१ ॥



ग्रामकर्तृनृपाणाञ्च व्याधिपीडा भवेद्ध्रुवम् ।
तस्मिन्नपि च यत्कर्म तद्दोषशमनाय च ॥ १२२ ॥

शान्तिहोमं ततः कृत्वा ब्राह्मणान् भोजयेत्क्रमात् ।
यागोपकरणं सर्वमददाद्देशिकाय वै ॥ १२३ ॥

तद्यागं निष्फलं तस्मात् देशिकं पूजयेद्बुधः ।
अनुक्तं यस्य दोषस्य शान्तिहोमं तु तत्र वै ॥ १२४ ॥

यागाग्नौ जुहुयाद्धीमान् प्रागुक्तविधिना ततः ।
आलये पतिते भिन्ने स्फुटिते तृणरूपके ॥ १२५ ॥

गजोष्ट्रतुरगाद्यैश्च बेरे च चलिते जलैः ।
भूपतेश्चलनं सद्यो दृढं कृत्वा तु पूर्ववत् ॥ १२६ ॥

शान्तिहोमं ततः कृत्वा संप्रोक्षणमथाचरेत् ।
गृहीते शत्रुभिर्बेरे राजराष्ट्रं विनश्यति ॥ १२७ ॥

आशु बालालयं कुर्यात् प्रयत्नैर्वत्सरान्तरैः ।
तद्बेरमेव संग्राह्य स्थापयेत् पूर्वदेशिकः ॥ १२८ ॥

तदूर्ध्वेऽन्यं परिग्राह्य प्रतिष्ठां विधिनाचरेत् ।
अष्टबन्धनहीने तु स्त्रीनाशं तज्जलं भुवि ॥ १२९ ॥

सहसा बन्धनं कुर्यात् गुहस्य स्नपनं चरेत् ।
स्थलकर्मविहीने च महामारी प्रजायते ॥ १३० ॥

पुनः संधानमाचार्यः संप्रोक्षणमथाचरेत् ।
वह्निना दूषिते बेरे शान्तिहोमं समाचरेत् ॥ १३१ ॥

संप्रोक्षणं ततः कुर्यात् विधिना देशिकोत्तमः ।
परिवारविहीने तु राजसेना च नश्यति ॥ १३२ ॥

परिवारान् ततः कृत्वा स्थापयेद्विधिपूर्वकम् ।
बलिपीठविहीने तु गावो नश्यत्यसंशयः ॥ १३३ ॥

बलिपीठं ततः कृत्वा विधिना स्थाप्य पूजयेत् ।
नकुलैः सूकरैश्चैव खरकुक्कुटवायसैः ॥ १३४ ॥

ऋतुस्त्रीचोरचण्डालैः प्रेतकैश्चैव पातकैः ।
गर्भगेहं प्रविष्टश्चेत् संस्पृष्टे कौतुकेऽथवा ॥ १३५ ॥

प्रतिलोमानुलोमैश्च पतितैः पापरोगिभिः ।
मूलबेरे च संस्पृष्टे प्रमादाद्वाऽथ गर्वतः ॥ १३६ ॥

एतेऽपि नरकं यान्ति राष्ट्रे मारी प्रवर्तते ।
मृन्मयानि च भाण्डानि त्यक्त्वा लेप्य च गोमयैः ॥ १३७ ॥

पर्यग्निकरणं कृत्वा संप्रोक्षणमथाचरेत् ।
हस्तोत्खातं च तद्देशं खात्वा पूर्य च वालुकैः ॥ १३८ ॥

मृत्पात्राणि च संत्यक्त्वा गोमयेन विलिप्य च ।
पुण्याहवाचनं कृत्वा भोजयित्वा द्विजानपि ॥ १३९ ॥



मूर्तिहोमं ततः कृत्वा संप्रोक्षणमथाचरेत् ।
नित्यपूजाविहीने च दुर्भिक्षं जायते भुवि ॥ १४० ॥

तद्ग्रामस्था न भुञ्जेयुः भुञ्जेयुश्चेत् क्रिमिं सदा ।
एकसंधिविहीने च द्विगुणं चान्यकालके ॥ १४१ ॥

संधिद्वयार्चने हीने पञ्चगव्याभिषेचनम् ।
संधित्रयविहीने च कर्तव्यं शान्तिहोमकम् ॥ १४२ ॥

अहोरात्रविहीने तु स्नपनं शान्तिहोमकम् ।
पञ्चाहे स्नपनं कुर्यात् मूर्तिहोमं विशेषतः ॥ १४३ ॥

पक्षहीने दिशाहोमं स्नपनञ्च विशेषतः ।
मासादूर्ध्वविहीने तु जलसंप्रोक्षणं मतम् ॥ १४४ ॥

नित्यहोमविहीने स्यादनावृष्टिर्न संशयः ।
एकसन्धिविहीने तु हुत्वा पाशुपतम् शतम् ॥ १४५ ॥

सन्धिद्वयविहीने तु मूलेनैव शतं हुनेत् ।
अयंकुमारमन्त्रेण शतमष्टोत्तरं हुनेत् ॥ १४६ ॥

एकाहे होमहीने तु पञ्चब्रह्मषडङ्गकैः ।
स्कन्दमूलेन मन्त्रेण शतमष्टोत्तरं हुनेत् ॥ १४७ ॥

होमहीने तु पञ्चाहे स्नपनं शान्तिहोमकम् ।
कृत्वा पाशुपतेनैव जपेत् पञ्चशतं पुनः ॥ १४८ ॥

पक्षहोमविहीने तु स्नपनं मूर्तिहोमकम् ।
मासहोमविहीने तु ब्रह्माङ्गैश्च दशाक्षरैः ॥ १४९ ॥

क्षुरिकाबीजमुख्यैश्च प्रत्येकं तु शतं हुनेत् ।
मूलमन्त्रशतं जप्त्वा स्नपनं कारयेत् प्रभोः ॥ १५० ॥

मासादूर्ध्वविहीने तु शान्तिहोमं समाचरेत्।
स्कन्दस्य स्नपनं कृत्वा प्रभूतहविषं ददेत ॥ १५१ ॥

सायं रक्षाविहीने तु बालानां नाशनं भवेत्।
स्नपनं पञ्चगव्येन सायं रक्षा समाचरेत् ॥ १५२ ॥

नीराजनविहीने तु क्षुद्भयं ग्रामवासिनाम्।
द्वारपूजाविहीने तु तस्करैर्भयमादिशेत् ॥ १५३ ॥

मूलमन्त्रशतं हुत्वा नीराजनमथाचरेत् ।
द्वारदेवान्स्वमन्त्रेण गन्धपुष्पादिनार्चयेत् ॥ १५४ ॥

नित्योत्सवविहीने तु धान्यनाशं न संशयः ।
संध्यैकेन विहीने तु स्नपनं पञ्चगव्यकैः ॥ १५५ ॥

मूलमन्त्रशतं जप्त्वा नित्योत्सवमथाचरेत् ।
सन्धिद्वयविहीने तु शान्तिहोमं समाचरेत् ॥ १५६ ॥

पञ्चाहे चोत्सवे हीने स्नपनं शान्तिहोमकम् ।
दशाहे तु तथा कृत्वा मूलमन्त्रशतं हुनेत् ॥ १५७ ॥



पक्षाहे च तथा कृत्वा मूलमन्त्राच्छतं हुनेत् ।
मासनित्योत्सवे हीने ब्रह्माङ्गैर्बीजमुख्यकैः ॥ १५८ ॥

दशाक्षरैस्तथा हुत्वा प्रत्येकं तु शतं हुनेत् ।
मासादूर्ध्वविहीने तु दिशाहोमं तदूर्ध्वके ॥ १५९ ॥

सौख्यगेये विहीने च महामारी प्रवर्तते ।
एकसंधिविहीने च पञ्चगव्याभिषेचनम् ॥ १६० ॥

पञ्चाहे तु तदूर्ध्वे तु मूलमन्त्रशतं जपेत् ।
अर्धमासविहीने तु तदूर्ध्वं तच्छतं जपेत् ॥ १६१ ॥

एकमासविहीने तु पञ्चब्रह्मषडङ्गकैः ।
त्र्यम्बकेन तु मन्त्रेण तदूर्ध्वं होमयेच्छतम् ॥ १६२ ॥

मासादूर्ध्वविहीने तु तेषामूर्ध्वं महाहविः ।
सौख्यदीपविहीने तु नेत्ररोगं भवेन्नृणाम् ॥ १६३ ॥

आरोप्य द्विगुणं दीपमघोरेण शतं जपेत्।
गेयवंशविहीने तु वाद्यशङ्खविहीनके ॥ १६४ ॥

सस्यानां नाशनं प्रोक्तं निष्कृतिः सौख्यगेयवत् ।
नृत्तकाले तु गणिका पतने तु विशेषतः ॥ १६५ ॥

कर्ता दुरितमाप्नोति शान्तिहोमं समाचरेत् ।
सौख्यश्लोकविहीने तु बधिरत्वं प्रवर्तते ॥ १६६ ॥

सौख्यगानविधानेन निष्कृतिश्च विधीयते ।
गन्धद्रव्यविहीने च स्त्रीनाशं सस्यनाशनम् ॥ १६७ ॥

अघोरेणशतं जप्त्वा तद्द्रव्यं द्विगुणं ददेत् ।
पुष्पार्घ्यधूपहीने च वृष्टिर्नश्यत्यसंशयः ॥ १६८ ॥

मूलमन्त्रं शतं जप्त्वा तद्द्रव्यद्विगुणं भवेत् ।
हीने निर्वाणदीपे चेत् भूतप्रेतादिवर्धयेत् ॥ १६९ ॥

एकाहे द्विगुणं दीपं तदूर्ध्वे सौख्यगेयवत् ।
संध्या दीपविहीने तु सर्वदोषावहं नृणाम् ॥ १७० ॥

एकस्य द्विगुणं दीपं विधिनारोपयेत्सुधीः ।
मन्त्रव्यतिक्रमे पूजा तत्सर्वं निष्फलं भवेत् ॥ १७१ ॥

शान्तिहोमं ततः कृत्वा मूलमन्त्रशतं जपेत् ।
नैवेद्यदीपहीने च दुर्भिक्षं जायते भुवि ॥ १७२ ॥

एकसन्धिविहीने तु तद्द्रव्यं द्विगुणं मतम् ।
सन्धिद्वयविहीने तु कुर्याद्गव्याभिषेचनम् ॥ १७३ ॥

सन्धित्रयविहीने तु तदूर्ध्वे स्नपनञ्चरेत् ।
पञ्चाहेन विहीने तु तदूर्ध्वे तु षडक्षरैः ॥ १७४ ॥

घृतेन जुहुयाद्धीमान् अष्टोत्तरशताधिकम् ।
दशाहे स्नपनं कृत्वा मूर्तिहोमं समाचरेत् ॥ १७५ ॥



एकमासविहीने तु दिशाहोमं समाचरेत् ।
स्कन्दस्य स्नपनं कृत्वा पूजयेत्तु विशेषतः ॥ १७६ ॥

मासादूर्ध्वे विहीने तु जलसंप्रोक्षणञ्चरेत् ।
पूर्वं विनिश्चितद्रव्यं यावत्काले विहीनके ॥ १७७ ॥

सम्यक् समूह्य तत्सर्वं षण्मुखाय निवेदयेत् ।
सन्ध्यातिक्रमणेनैव ग्रामनाशं धनक्षयम् ॥ १७८ ॥

षडक्षरेण जुहुयात् आहुत्यास्तु सहस्रकम् ।
नैवेद्योत्थापने काले पतने लङ्घने नरैः ॥ १७९ ॥

सस्यानां नाशनं प्रोक्तं तदन्नं परिवर्जयेत् ।
मूलमन्त्रं शतं जप्त्वा पक्वान्नं सहसा ददेत् ॥ १८० ॥

मार्जनालेपनं हीनं शङ्खघोषविहीनके ।
गवां नाशकरं प्रोक्तं निर्वीर्या पृथिवी भवेत् ॥ १८१ ॥

मालामन्त्रशतं जप्त्वा मार्जनादि च कारयेत् ।
बिम्बे पुष्पविहीने च ज्वरमारी प्रवर्तते ॥ १८२ ॥

दुर्नीतिर्दुर्मृतिश्चैव दुर्भिक्षमपि जायते ।
महाहविर्निवेद्याथ तत्तत्सर्वं समाचरेत् ॥ १८३ ॥

स्पृष्टे दीक्षान्तरैर्बिम्बे शूद्रैरपि तथा पुनः ।
परचक्राद्भयं भूमौ पुण्याहं वाचयेत्सुधीः ॥ १८४ ॥

शान्तिहोमं ततः कृत्वा स्नपनङ्कारयेत्प्रभोः ।
उत्सवान्तं दिनान्तं वा लब्धमासे तु कारयेत् ॥ १८५ ॥

पवित्रारोहणे हीने मासपूजाविहीनके ।
नवनैवेद्यहीने च दुर्भिक्षं जायते भुवि ॥ १८६ ॥

मूर्तिहोमं ततः कृत्वा भूसुरानपि पूजयेत् ।
कृत्तिकादीपहीनं चेत् अनावृष्टिर्न संशयः ॥ १८७ ॥

शान्तिहोमं ततः कृत्वा स्नपनङ्कारयेत्प्रभोः ।
लब्धमासेऽग्निनक्षत्रे कृत्तिकादीपमाचरेत् ॥ १८८ ॥

तैलाभ्यङ्गविहीने च दारिद्र्यं ग्रामवासिनाम् ।
मूलमन्त्रैः शतं कृत्वा तैलाभ्यङ्गं समाचरेत् ॥ १८९ ॥

मन्त्रसंस्कारदोषेण राजराष्ट्रं विनश्यति ।
संप्रोक्षणं ततः कृत्वा तन्मन्त्रेणैव पूजयेत् ॥ १९० ॥

आचार्यसङ्करं चैव कर्तुर्ग्रामस्य नाशनम् ।
मूर्तिहोमं ततः कृत्वा पूर्वाचार्येण पूजयेत् ॥ १९१ ॥

अनुक्तं यद्भवेत् किञ्चिच्छान्तिहोमेन शाम्यति ।
मन्त्रेऽनुक्ते क्रियाणां तु हृदयेनैव कारयेत् ॥ १९२ ॥

एवं यः कुरुते मर्त्यः स पुण्याङ्गतिमाप्नुयात् ॥ १९३ ॥

इति श्रीकुमारतन्त्रे प्रायश्चित्तविधिर्नाम चतुर्विंशः पटलः

———

## पञ्चदशः पटलः

### अथ जीर्णोद्धारविधिः

जीर्णोद्धारविधिं वक्ष्ये श्रृणु कौशिक सुव्रत ।
सर्वशान्तिकरं पुण्यं सर्वव्याधिविनाशनम् ॥ १ ॥

राष्ट्रग्रामनृपाणाञ्च हितार्थं गुरुशिल्पिनोः ।
जीर्णोद्धारं यः करोति फलं पूर्वाच्चतुर्गुणम् ॥ २ ॥

जीर्णोद्धारं न कुर्याच्चेत् राजराष्ट्रं विनश्यति ।
तस्मात्सर्वप्रयत्नेन जीर्णोद्धारं तु कारयेत् ॥ ३ ॥

जीर्णं लोहजबेरं चेत् तल्लोहेनैव कारयेत् ।
शैलजं दारुजं चेत्तु वर्जयेत् कुशिकात्मज ॥ ४ ॥

यद्रूपं यन्मयं पूर्वं तथैव परिकल्पयेत् ।
अन्यथा कारितं चेत्तु राजराष्ट्रं विनश्यति ॥ ५ ॥

शैलं जीर्णं समुद्धृत्य शकटे वा गजेऽपि वा ।
रथे वा शिबिकायां वा विधिनारोप्य बुद्धिमान् ॥ ६ ॥

समुद्रे वा तडागे वा कूपे वाऽपि विसर्जयेत् ।
दारुजङ्कारयेद्भूमौ पश्चिमे चोत्तरेऽपि वा ॥ ७ ॥

गजोष्ट्रतुरगैश्चोरैर्विषनागेश्वरैरपि ।
पतिते चलिते भग्ने नदीस्रोतेन वा पुनः ॥ ८ ॥

वह्निना दह्यमानेऽपि जीर्णोद्धारं विधीयते ।
क्षेत्रे जीर्णे तु तत् क्षेत्रे स्थापयेत्तु प्रयत्नतः ॥ ९ ॥

नदीवेगेन चलितं शतदण्डं व्यपोह्य च ।
द्विशतं द्विगुणं वाऽपि चतुर्गुणमथापि वा ॥ १० ॥

तस्योत्तरेषु पूर्वेषु दक्षिणे चाथवा पुनः ।
आरोप्य च शुचौ देशे कृत्वा गेहप्रमाणवत् ॥ ११ ॥

स्थापनं तत्र कर्तव्यं नेत्रोन्मीलनवर्जनम् ।
जलाधिवासरहितं शेषकर्माणि कारयेत् ॥ १२ ॥

अङ्गस्योपाङ्गप्रत्यङ्गमङ्गानि त्रिविधानि च ।
अङ्गं प्रधानं मूलं स्यादुपाङ्गमथ कथ्यते ॥ १३ ॥

वक्षोदण्डकटीदण्डबाहुकूर्परकद्वयम् ।
ऊरू जानू च जङ्घे च पाणी पादतलाङ्गुली ॥ १४ ॥

उपाङ्गं त्रिविधं ज्ञेयं आयुधाभरणानि च ।
वस्त्रवाहनपीठानि प्रत्यङ्गमिति कीर्तितम् ॥ १५ ॥

ब्रह्मदण्डविहीनं चेत् शूलस्थापनमुच्यते ।
प्रत्यङ्गोपाङ्गहीने च पुनः सन्धानमाचरेत् ॥ १६ ॥

आसप्तदिवसात् पूर्वं कुम्भे त्वावाह्य कारयेत् ।
तदूर्ध्वे बालहर्म्ये वै कृत्वा संप्रोक्षणं चरेत् ॥ १७ ॥



लोहजं शैलजं बेरं मृण्मयं वा सुधामयम् ।
शिरोबाहू तथा चोरू हीने स्यात् परिवर्जयेत् ॥ १८ ॥

अङ्गुलीनखनासाग्रं पुनः सन्धानमाचरेत् ।
सन्धानयोग्यं सन्धार्यमयोग्यं न प्रयोजयेत् ॥ १९ ॥

वस्तुहीनं न कर्तव्यं कुर्याद्वस्त्वधिकेन तु ।
*पूर्वात्कुर्यात्पूर्वमानात् अङ्गके श्रीकरं भवेत् ॥ २० ॥

विहीने नाशकृत्प्रोक्तं तस्माद्धीनं न कारयेत् ।
मासपक्षर्क्षवारादीनविचार्य समाचरेत् ॥ २१ ॥

जीर्णोद्धारं न कुर्याच्चेन्महादोषोऽभिजायते ।
तद्दुष्टभूतवेताळपिशाचब्रह्मराक्षसाः ॥ २२ ॥

प्रेताश्च देवशून्यत्वादाश्रयन्ति न संशयः ।
कुर्वन्ति ते भयं ह्युग्रं दुर्भिक्षं मरणं नृणाम् ॥ २३ ॥

अर्चितं चेन्निहत्याशु तस्माज्जीर्णं [1]समाचरेत् ।
मन्दिरे चोद्धृते तत्र बिम्बे निर्दोषसंस्थिते ॥ १४ ॥

बालहर्म्यं ततः कृत्वा बालस्थानोक्तमार्गतः ।
हर्म्याग्रे पञ्जरे वापि त्रिबेरं तु समाचरेत् ॥ २५ ॥

स्तूप्याद्याद्येष्टकानाञ्च खात्वा त्यक्त्वान्यशेषकम् ।
प्रथमेष्टिकां क्षिपेत्प्राग्वद्गर्भन्याससमायुतम् ॥ २६ ॥

---

1 समुद्धरेत्

यावन्मन्दिरपर्यन्तं तावत्कृत्वा सलक्षणम् ।
यद्द्रव्येणोद्धृतं हर्म्यं यत्प्रमाणं यदाकृतिम् ॥ २७ ॥

तद्द्रव्येण पुनः कुर्यात् प्रमाणेन तु बुद्धिमान् ।
सर्वावयवसंपूर्णं यथाशोभं यथाबलम् ॥ २८ ॥

दार्विष्टकाशिला यत्र जीर्णं प्रासादके पुनः ।
कर्मयोग्यास्तु संपाद्य अयोग्यान् परिवर्जयेत् ॥ २९ ॥

हीनमानोद्धृते धाम्नि शास्त्रोक्तेनाथ कर्मतः ।
पूर्वाद्धीनं न कर्तव्यमुत्कृष्टं शुभदं स्मृतम् ॥ ३० ॥

स्तूपी नासी च शाला च कपोतीकूटपञ्जरम् ।
एतेष्वङ्गं यथा हीनं तथा तद्वस्तुना पुनः ॥ ३१ ॥

परिवारालये जीर्णे तस्योद्धारणकर्मसु ।
तत्तद्धामाग्रके पीठे कृत्वा मूर्तिं [1]समाचरेत् ॥ ३१ ॥

स्थापितेनोक्तदेशे तु तद्बिम्बं मन्त्रतन्त्रकैः ।
उक्तस्थाने प्रकर्तव्यं परिवारादिकान् क्रमात् ॥ ३३ ॥

जीर्णे तु गोपुरे तत्र प्रासादस्योक्तवर्त्मनः[2] ।
अन्येषां मण्डपादीनां प्रासादस्योक्तमार्गतः ॥ ३४ ॥

एवं सामान्यमुदितं विशेषमधुनोच्यते ।
इष्टकायाः [3]परं पीठं पीठादाभासमुत्तमम् ॥ ३५ ॥

1 समर्चयेत् 2 मार्गतः 3 वरं



आभासादर्धचित्रं स्यादर्धचित्रात्तु दारुजम् ।
दारुजान्मृण्मयं श्रेष्ठं मृण्मयाच्छैलजं स्मृतम् ॥ ३६ ॥

शैलजाल्लोहजं श्रेष्ठं लोहजाद्रत्नजं तथा ।
चित्रञ्च चित्रमन्यच्चेत्पूर्ववन्मूलबेरकम् ॥ ३७ ॥

द्रव्योत्कृष्टेन कर्तव्यं विपरीतं न कारयेत् ।
आदिशैवकुलोद्भूतः प्रागुक्तो लक्षणो गुरुः ॥ ३८ ॥

सुस्नातः सकलीकृत्य गन्धपुष्पैरलंकृतः ।
नववस्त्रधरोष्णीषो हैमपञ्चाङ्गभूषणः ॥ ३९ ॥

नत्वा गणाधिपं पूर्वं गन्धपुष्पादिभिर्यजेत् ।
संकल्पमपि पुण्याहं वाचयेत्प्रोक्ष्य तज्जलैः ॥ ४० ॥

सुब्रह्मण्यं ततोऽभ्यर्च्य गन्धपुष्पादिभिः क्रमात् ।
*जीर्णबेरं त्याज्यमिति भगवद्वाक्यनिर्णयात् ॥ ४१ ॥

*जीर्णोद्धारङ्कर्म कर्तुमनुग्रह षडानन ।
इति प्रणम्य विज्ञाप्य देवस्यानुज्ञया गुरुः ॥ ४२ ॥

स्कन्दाग्रे स्थण्डिलं कृत्वा हस्तमात्रेण देशिकः ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ ४३ ॥

समिदाज्यचरूंल्लाजं सर्षपं क्षीरमेव च ।
तिलं माषं ततो मुद्गं प्रियङ्गुं च गुलं मधु ॥ ४४ ॥

द्रव्याणि द्वादशैतानि होमयेत्तु विचक्षणः ।
जगद्भुवादिषण्मन्त्रैस्तत्तत्षण्मूर्तिमन्त्रकैः ॥ ४५ ॥

समिदाज्यचरून् हुत्वा प्रत्येकन्तु त्रयाहुतिम् ।
स्कन्दमूलेन जुहुयात्समिधं ब्रह्मवृक्षजम् ॥ ४६ ॥

घृतमीशानमन्त्रेण पुरुषेण चरुं हुनेत् ।
लाजांस्त्वघोरमन्त्रेण सर्पिषं वाममन्त्रतः ॥ ४७ ॥

सद्योजातेन गोक्षीरं तिलं पाशुपतेन च ।
माषं कवचमन्त्रेण मुद्गं हृदयमन्त्रतः ॥ ४८ ॥

प्रियङ्गुं नेत्रमन्त्रेण गुलं वै शीर्षमन्त्रकः ।
मध्वस्त्रेणैव जुहुयात्प्रत्येकन्तु शताहुतिम् ॥ ४९ ॥

द्रव्यान्ते व्याहृतीर्हुत्वा पूर्णां तु शिरसा हुनेत् ।
हव्यवाहेन मन्त्रेण स्विष्टकृद्धोमयेत्सुधीः ॥ ५० ॥

जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ।
शान्तिहोममिति प्रोक्तं हृत्कुम्भस्थापनं शृणु ॥ ५१ ॥

पुण्याहवाचनं कृत्वा कारयेदङ्कुरार्पणम् ।
स्कन्दाग्रे स्थण्डिलं कृत्वा द्विद्रोणै रक्तशालिभिः ॥ ५२ ॥

षड्दलं पद्ममालिख्य प्रोक्ष्य गायत्रिमन्त्रतः ।
द्रोणतोयेन संपूर्णं कुम्भं बिम्बसमप्रभम् ॥ ५३ ॥



चूतपल्लवकूर्चाढ्यं रत्नहोमाब्जसंयुतम् ।
सवस्त्रगन्धमालाभिस्तन्मध्ये स्थापयेत्सुधीः ॥ ५४ ॥

पार्श्वयोर्द्वयवर्धन्यौ शिवतोयेन पूरितौ ।
सर्वालङ्कारसंयुक्तौ स्थापयेद्विधिपूर्वकम् ॥ ५५ ॥

पूर्वादीशानपर्यन्तमष्टकुम्भान्न्यसेत्क्रमात् ।
पुनर्बिम्बप्रवेशाय पूजासिद्ध्यर्थये नृणाम् ॥ ६६ ॥

त्यक्त्वा [1]दोषोत्थितं बेरं कुम्भेष्वागच्छतु प्रभो ।
इदं मन्त्रं समुच्चार्य पुष्पाञ्जलियुतो गुरुः ॥ ५७ ॥

बिम्बान्तस्थं स्कन्दबीजं विन्यसेत्कुम्भमध्यमे ।
आधाराधेयपूजां च पञ्चावरणपूजनम् ॥ ५८ ॥

आवाहनादिसंस्कारदशकर्माङ्कुरात्ततः ।
धनुः पद्मत्रिशूलञ्च मकरं खड्गनमस्कृतम् ॥ ५९ ॥

षण्मुखं कुम्भवक्त्रे तु दर्शयित्वा समाचरेत् ।
दक्षिणस्थितवर्धन्यां महावल्लीं तथा यजेत् ॥ ६० ॥

वामे स्थितायां वर्धन्यां देवसेनां यजेत्तथा ।
शकुन्याद्यष्टशक्तीश्च पूर्वादिषु यजेद्बुधः ॥ ६१ ॥

स्वनामाद्यक्षरेणैव नमोऽन्तं प्रणवादिकम् ।
वर्धन्योश्चाष्टकुम्भेषु योनिमुद्रां प्रदर्शयेत् ॥ ६२ ॥

1 दोषाच्छ्रितं

पञ्चायुधानि कुम्भाग्रे रक्षणार्थं यजेद्गुरुः ।
शक्तिदण्डं प्रासदण्डं खड्गतोमरबीजतः ।। ६३ ॥

हृत्कुम्भस्थापनं ह्येवं विश्वामित्र महामुने ।
यात्राहोमं ततः कुर्यात्कुण्डे वा स्थण्डिलेऽपि वा ॥ ६४ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
समिदाज्यचरूंल्लाजं माषशालियवं तिलम् ॥ ६५ ॥

सक्तुसर्षपमुद्गानि पञ्चब्रह्मषडङ्गकैः ।
सहस्रं वा तदर्धं वा स्कन्दमूलेन सर्पिषा ॥ ६६ ॥

देव्योर्दशांशं जुहुयादस्त्रेणैव शतं हुनेत् ।
अघोरेण शतं हुत्वा स्विष्टमर्हेति होमयेत् ॥ ६७ ।

जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् ।
सुब्रह्मण्याय नैवेद्यमुपदंशसमन्वितम् ॥ ६८ ॥

सगुलं घृतसंपूर्णमपूपं मधुसंयुतम् ।
नालिकेराम्रपनसं फलयुक्तं दधिप्लुतम् ॥ ६९ ॥

पानीयमपि ताम्बूलं विशेषेण न्यवेदयेत् ।
धूपदीपं हृदा दत्वा दर्पणादीनि दर्शयेत् ॥ ७० ॥

पूर्णाहुतिं ततो हुत्वा रुद्रादीनां बलिं क्षिपेत् ।
ज्ञानखड्गधरो भूत्वा त्वदाज्ञेति वदेत् गुरुः ॥ ७१ ॥



मण्डपस्येशदिग्भागे सर्वालङ्कारशोभिते ।
शालिभिः स्थण्डिलङ्कृत्वा कुम्भानुद्धृत्य विन्यसेत् ॥ ७२ ॥

संरक्ष्य चास्त्रमन्त्रेण सेनान्यं संनिरोध्य च ।
*यावत्प्रतिष्ठादिवसं तावत्पूर्ववदाचरेत् ॥ ७३ ॥

कुद्दालं वा खनित्रं वा पूजयेदस्त्रमन्त्रतः ।
शान्तिकुम्भस्थतोयेन बिम्बं तत्राभिषिच्यते ॥ ७४ ॥

[1]उच्चरेन्नेत्रमन्त्रेण जीर्णबेरं द्विजोत्तमैः ।
इन्द्रादिविष्णुपर्यन्तं दशदिक्षु बलिं क्षिपेत् ॥ ७५ ॥

नववस्त्रैश्च पुष्पैश्च समलंकृत्य बेरकम् ।
आचार्यो मूर्तिपैः सार्धं सहायैर्वेदवित्तमैः ॥ ७६ ॥

नृत्तवाद्यसमायुक्तं स्तोत्रमङ्गलसंयुतम् ।
ततो भक्तजनैः सार्धं जीर्णोत्सवमथाचरेत् ॥ ७७ ॥

रथे वा शिबिकायां वा गजे वाऽरोप्य बुद्धिमान् ।
स्वस्तिसूक्तं जपित्वा तु शिवभक्तियुतैर्द्विजैः ॥ ७८ ॥

समुद्रे वा तडागे वा नद्यां वा स्रोतसि क्षिपेत् ।
दारुजं मृण्मयं शैलं पटं वाऽप्सु विसर्जयेत् ॥ ७९ ॥

उत्तरे दक्षिणे वाऽपि खातयेदथवा पुनः ।
लोहं चेदग्निना दह्यात्कुर्यात्तेनैव बेरकम् ॥ ८० ॥

1 उद्धरेत्तेन मन्त्रेण

प्रतिबिम्बं तु सहसा कारयेल्लक्षणान्वितम् ।
यद्वस्तुना कृतं बेरं कुर्यात्तद्वस्तुना पुनः ॥ ८१ ॥

*अन्येन कुर्याच्चेद्यत्तु मूर्तिनाशो न संशयः ।
तस्मात्सर्वप्रयत्नेन पूर्ववत्कल्पयेत् सुधीः ॥ ८२ ॥

[1]तद्घनेन घनं कार्यं पूर्वमानेन शिल्पिना ।
हृत्कुम्भस्थं स्कन्दबीजं पुनः स्थापनमाचरेत् ॥ ८३ ॥

जलसंप्रोक्षणेनैव मार्गेण च विशेषतः ।
आचार्यं पूजयेत्कर्ता गोभूमिधनकाञ्चनैः ॥ ८४ ॥

उत्तमं दशनिष्कं तु पञ्चनिष्कं तु मध्यमम् ।
तदर्धमधमं ज्ञेयं देशिकस्य तु दक्षिणा ॥ ८५ ॥

पञ्चभागैकभागं तु मूर्तिपानां तु दक्षिणा ।
सहायेभ्यस्तदर्धं स्यात् ब्राह्मणान्भोजयेत्ततः ॥ ८६ ॥

यागोपकरणं सर्वं देशिकाय प्रदापयेत् ।
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ॥ ८७ ॥

इति श्रीकुमारतन्त्रे जीर्णोद्धारविधिर्नाम पञ्चदशः पटलः

———

1 अघने तु

## षोडशः पटलः

अथ वास्तुहोमविधिः

वास्तुहोमविधिं वक्ष्ये सर्वकर्मशुभावहम् ।
उत्सवेषु प्रतिष्ठासु वास्तुनिर्माणकेषु च ॥ १ ॥

संप्रोक्षणविधानेषु यागेष्वन्येषु मन्त्रिभिः ।
वास्तुहोमं प्रकर्तव्यं तच्छृणुष्व महामुने ॥ २ ॥

कुण्डवेदिसमायुक्ते मण्डपे नैर्ऋते पुनः ।
हस्तमात्रेण संकल्प्य स्थण्डिलं द्रोणतण्डुलैः ॥ ३ ॥

पुण्याहं वाचयेन्मन्त्री अभ्यङ्गैः प्रोक्ष्य तज्जलैः ।
एकाशीतिपदं कृत्वा मध्ये नवपदे विधिम् ॥ ४ ॥

मरीचिं च विवस्वांश्च मित्रं चैव धराधरम् ।
[1]पूर्वादितन्मुखे पूज्य षट्कषट्कपदेषु च ॥ ५ ॥

ईशानादिषु तत्पार्श्वेष्वापश्चैवापवत्सरम् ।
सवित्रश्चैव सावित्र इन्द्र इन्द्रजयस्तथा ॥ ६ ॥

[2]रुद्रोरुद्रजयः पूज्यो द्विद्विभागे विशेषतः ।
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः ॥ ७ ॥

आदित्यः सत्यकश्चैव [3]भ्रंशश्चैवाभिरक्षकः ।
अग्निपूषा च वितथो ग्रहाक्षतयमौ तथा ॥ ८ ॥

1 पूर्वादित मुखे 2 रुद्रे 3 भ्रंशश्चैवान्तरिक्षकः

गन्धर्वो भृङ्गराजश्च यमश्च निर्ऋतिः पुनः ।
दौवारिकश्च सुग्रीवः पुष्पदन्तेन वासवः ॥ ९ ॥

असुरः सोषरोगौ च वायुर्नागस्तु मुख्यकः ।
भल्लाटश्चैव सोमश्च धिगश्चैवाधिगस्तथा ॥ १० ॥

दितिस्त्वेकैकपदिनो बाह्यो द्व त्रिंश उत्सवः ।
शरकी च विदारी च पूतना पापराक्षसी ॥ ११ ॥

ईशानादिषु कोणेषु पूजनीया पदाद्बहिः ।
स्कन्दो यमश्च जम्भश्च बलिपिं च क्रमेण तु ॥ १२ ॥

पूर्वादिपदबाह्ये तु पूजयेद्गन्धपुष्पकैः ।
अधोमुखं भुवं प्राप्य शेते वास्तुनरः सदा ॥ १३ ॥

उग्रत्वाद्भयकारित्वात्पूजितव्यं फलेप्सुभिः ।
शिरस्केशपदानी च निर्ऋतिश्च पदानि यत् ॥ १४ ॥

मध्ये ब्रह्मपदे नाभि रङ्ग सर्वपदानि च
चतुर्भुजं जटामौलिकमण्डल्वक्षधारिणम् ॥ १५ ॥

वामहस्ते तु जाग्रत्वे सव्यहस्ताकुले स्थितम् ।
चतुर्भुजो युताशेषात् खड्गखेटकधारिणम् ॥ १६ ॥

कृताञ्जलिपुटाः सर्वे ध्यात्वा स्वस्वपदे स्थिताः ।
तत्तत्स्वनाममन्त्रैश्च स्वाहान्तैः प्रणवान्तकैः ॥ १७ ॥



उच्चार्य गन्धपुष्पाद्यैः प्रतिप्रति समर्चयेत् ।
तद्वामे मुनिशार्दूल स्थण्डिलं कल्प्य वालुकैः ॥ १८ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
ततस्त्रयोर्ध्वे पञ्चाशद्देवतानां पृथक्पृथक् । १९ ॥

पलाशसमिदाज्याद्यै स्तिलैस्तण्डुलसंयुतैः ।
होमं [2]हुत्वा विशेषेण द्रव्यान्ते व्याहृतिं हुनेत् ॥ २० ॥

स्कन्दमूलेन मन्त्रेण घृतेनैव शताहुतिम् ।
ततः षण्मूर्तिमन्त्रेण पञ्चब्रह्मषडङ्गकैः ॥ २१ ॥

दशांशं जुहुयादन्ते स्विष्टकृद्[3]द्रव्यमन्त्रकैः ।
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ॥ २२ ॥

दध्याज्यगुलसंमिश्रं शुद्धान्नेन बलिं क्षिपेत् ।
पलाशोदुम्बराश्वत्थपत्रैः शुद्धैः सदर्भकैः ॥ २३ ॥

सिद्धार्थतिलसंयुक्तैः कबलं [4]बहुमन्त्रतः ।
*मध्वाज्येन मर्दयित्वा संप्रोक्ष्य हृदयेन तु ॥ २४ ॥

प्रज्वाल्य तस्मिन्नग्नौ[5] तु अस्त्रवर्धनितोययुक् ।
प्राकाराभ्यन्तरं सर्वं भवनं यागमण्डपम् ॥ २५ ॥

पर्यग्निकरणं कृत्वा परिचारेण मन्त्रवित् ।
[6]उत्क्राम्यत्वाच्च तत्पार्श्वे स्नानं कुर्याद्विधानतः ॥ २६ ॥

1 कै 2 कृत्वा 3 हव्यमन्त्रतः 4 बाहुमात्रतः
5 वन्ही 6 उत्क्रान्त्यत्वाथ तद्वाह्ये

पञ्चगव्येन संप्रोक्ष्य मन्त्रेणास्त्रेण देशिकः ।
तदूर्ध्वं कारयेत्कर्म दक्षिणां दापयेद्गुरोः ॥ २७ ॥

वास्तुपूजा समाख्याता सर्वशोभनकारिणी ॥ २८ ॥

इति श्रीकुमारतन्त्रे वास्तुपूजाविधिर्नाम षोडशः पटलः

— —

## सप्तदश पटलः

### अथ शान्तिहोमविधिः

शान्तिहोमं ततो वक्ष्ये शृणु कौशिक सुव्रत ।
प्रायश्चित्तेषु सर्वेषु कल्पितेषु समाचरेत् ॥ १ ॥

कुण्डे वा स्थण्डिले वाऽपि शान्तिहोमं समाचरेत् ।
तत्रैव स्थापयेत् कुम्भं सर्वलक्षणसंयुतम् ॥ २ ॥

तं स्पृष्ट्वा चास्त्रमन्त्रेण स्कन्दमूलेन मन्त्रतः ।
शिवभक्तियुतैर्विप्रैर्जपेयुः पञ्चशान्तिना ॥ ३ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
हृद्वामघोरमन्त्रेण समिदाज्यचरुं क्रमात् ॥ ४ ॥

प्रत्येकं षोडशं कृत्वा स्कन्दमूलाच्छताहुतिः ।
पञ्चब्रह्मषडङ्गैश्च दशांशं सर्पिषा हुनेत् ॥ ५ ॥



जयन्ताद्यष्टदेवानामेकैकं सर्वनामवित् ।
क्षुरिकाबीजमुख्येन प्रत्येकं षोडशाहुतिः ॥ ६ ॥

जगद्भुवादिषण्मन्त्रैः कृत्वा षण्मूर्तिमन्त्रकैः ।
घृतमिश्रतिलेनैव त्र्यम्बकेन दशाहुतिः ॥ ७ ॥

हव्यवाहनमन्त्रेण स्विष्टकृच्च हुनेत्ततः ।
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ॥ ८ ॥

शान्तिकुम्भस्थतोयेन महासेनं प्रपूजयेत् ।
होतारं पूजयेत् कर्ता निष्कं निष्कार्धमानतः ॥ ९ ॥

इति श्रीकुमारतन्त्रे शान्तिहोमविधिर्नाम सप्तदशः पटलः

— — —

## अष्टादशः पटलः

### अथ दिशाहोमविधिः

दिशाहोमं ततो वक्ष्ये शृणुष्व मुनिपुङ्गव ।
भवनस्य चतुर्दिक्षु कुण्डे वा स्थण्डिलेऽपि वा ॥ १ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तवर्त्मना ।
वञ्जुलं बिल्वमश्वत्थमर्कं पूर्वादिदिक्षु च ॥ २ ॥

सद्यमन्त्रेण समिधं स्कन्दमूलेन सर्पिषा ।
चरुमस्त्रेण मन्त्रेण सर्षपं कवचेन च ॥ ३ ॥

तिलमीशानमन्त्रेण प्रत्येकं षोडशं हुनेत् ।
षडक्षरेण मन्त्रेण घृतेनैव शताहुतिः ॥ ४ ॥

पञ्चब्रह्मषडङ्गैश्च दशांशं जुहुयात्ततः ।
जगद्भुवादिषण्मन्त्रैर्हुत्वा षण्मूर्तिमन्त्रतः ॥ ५ ॥

तिलैश्च घृतसंयुक्तैस्त्र्यम्बकात् षोडशाहुतिः ।
पूर्णाहुतिं च शिरसा स्विष्टकृद्धव्यमन्त्रतः ॥ ६ ॥

जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ।
होतारं पूजयेत् पश्चात् यथावित्तानुसारतः ॥ ७ ॥

इति श्रीकुमारतन्त्रे दिग्गहोमविधिर्नाम अष्टादशः पटलः

———

## एकोनविंशः पटलः

### अथ मूर्तिहोमविधिः

मूर्तिहोमं ततो वक्ष्ये तच्छृणुष्व महामुने ।
हर्म्याग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्तथा ॥ १ ॥

स्कन्दकुम्भञ्च तन्मध्ये द्विपार्श्वे वर्धनीद्वयम् ।
अष्टकुम्भान्न्यसेन्मन्त्री पूर्वाद्यष्टदिशासु च ॥ २ ॥

मध्ये स्कन्दं समावाह्य पूजयेत्तु यथाविधि ।
महावल्लीं देवसेनां वर्धन्योः संप्रपूजयेत् ॥ ३ ॥



जयन्ताद्यष्टदेवांश्च पूर्वादिषु घटेषु च ।
तस्याग्रे स्थण्डिलं कृत्वा निर्दोषैः सिकतैः सितैः ॥ ४ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
पलाशीं च गुलूचीं च सद्येनैव शतं शतम् ॥ ५ ॥

अघोरेण घृतं [1]दत्वा चरुमीशानमन्त्रतः ।
स्कन्दमूलेन मन्त्रेण घृतेनैव शतं हुनेत् ॥ ६ ॥

पञ्चब्रह्मषडङ्गैश्च दशांशं जुहुयात्ततः ।
मूलमन्त्रेण मतिमान् शतमष्टोत्तरं हुनेत् ॥ ७ ॥

जगद्भुवादिषण्मन्त्रैर्हुत्वा षण्मूर्तिमन्त्रतः ।
घृतसिक्ततिलेनैव त्र्यम्बकेन शताहुतिः ॥ ८ ॥

पूर्णाहुतिञ्च शिरसा स्विष्टकृद्धव्यमन्त्रतः ।
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात् ॥ ९ ।

[2]कुम्भाद्भिर्देवदेवञ्च क्रमेणैवाभिषेचयेत् ।
यथाविभवविस्तारं होतारमपि पूजयेत् ॥ १० ॥

इति श्रीकुमारतन्त्रे मूर्तिहोमविधिर्नाम एकोनविंशः पटलः

———

1 तद्दत्  2 तत्कुम्भे देव देवीश्च

## विंशः पटलः

### अथ पञ्चगव्यविधिः

पञ्चगव्यविधिं वक्ष्ये शृणुष्व कुशिकात्मज ।
सर्वपापक्षयकरं सर्वव्याधिविनाशनम्[1] ॥ १ ॥

हर्म्याग्रे मण्डपे रम्ये गोमयेनानुलेपिते ।
हस्तमात्रप्रविस्तारं पञ्चाङ्गुलसमन्वितम् ॥ २ ॥

स्थण्डिलं शालिभिः कल्प्य रक्तवर्णैः मनोरमैः ।
ततो नवपदं कल्प्य तन्मध्ये नलिनं लिखेत् ॥ ३ ॥

सकलीकृत्य संप्रोक्ष्य दर्भैश्चैव परिस्तरेत् ।
शिवादिविद्यातत्त्वान्तं नवकोष्ठेषु पूजयेत् ॥ ४ ॥

सौवर्णं राजतं [2]ताम्रं मृण्मयं वाऽथ गृह्य च ।
अस्त्रेण क्षाल्य विन्यस्य मध्यादिक्रमयोगतः ॥ ५ ॥

सुप्रतिष्ठं सुशान्तं च तेजोरूपमथामृतम् ।
[3]रत्नोदयं ततो व्यक्तं पात्राणि [4]प्रणिपातयेत् ॥ ६ ॥

तेषु क्षीरं दधिघृतं गोमूत्रं गोमयं क्रमात् ।
कुशोदकं ततोऽग्न्यादि पिष्टामलकरात्रिकम् ॥ ७ ॥

क्षिप्त्वा ब्रह्मषडङ्गैश्च पूजयित्वा यथाविधिः ।
सकूर्चं [5]सहितास्त्रेण पूजितं रक्षितं तथा ॥ ८ ॥

1 समुन्नतम् 2 पात्रं 3 रत्नोदक 4 प्रणिपाद्यजेत् 5 संहिता



अमृतीकृत्य विधिवद्विदध्यात् पञ्चगव्यकम् ।
सर्पिर्दधिघृतं चैव गोमयं गोजलं तथा ॥ ९ ॥

कुशोदकं क्रमादंशमेकं द्वित्रि [1]च वेद षट् ।
श्वेतवर्णं गवां क्षीरं पीतवर्णं गवां दधि ॥ १० ॥

कृष्णवर्णं गवां सर्पिं रक्तवर्णं च गोजलम् ।
गोमयं कपिलायां वा यथालाभं ग्रहेत्सुधीः ॥ ११ ॥

क्षीरं वै शुक्रदैवत्यं दधि वै सोमदैवतम् ।
सर्पिश्च रुद्रदैवत्यं गोमयस्य बृहस्पतिः ॥ १२ ॥

गोमूत्रमग्निदैवत्यं शालिपिष्टं च शङ्करी ।
लक्ष्मीरामलकस्यैव रजन्यास्तु सरस्वती ॥ १३ ॥

कुशोदकस्य गङ्गा च अधिदेवाः प्रकीर्तिताः ।
भारद्वाजः काश्यपश्च [2]शालिहोत्रोऽथ गौतमः ॥ १४ ॥

आत्रेयश्चैव पञ्चैते गव्यानामृषयः क्रमात् ।
भार्गवोऽगस्त्य आङ्गीरः शक्तिपिष्टादिकेर्षयः ॥ १५ ॥

क्षीरं मोक्षप्रदं ज्ञेयं दधिव्याधिविनाशनम् ।
घृतं कुष्ठविनाशार्थं गोमूत्रं पुत्रवृद्धिदम् ॥ १६ ॥

गोमयं रोगनाशार्थं पञ्चगव्यफलं लभेत् ।
प्रातः कालेऽभिषेकश्च सर्वपापविनाशनम् ॥ १७ ॥

1 एक 2 विश्वामित्रो

माध्यंदिनेऽभिषेकं च सर्वशान्त्यर्थमुच्यते ।
सायंकालाभिषेकेण सर्वव्याधिविनाशनम् ॥ १८ ॥

गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राविष्णोति वै दधि ॥ १९ ॥

ततः शुक्रमसीत्याज्यं देवस्यत्वा कुशोदकम् ।
एवं संहारमार्गेण संयोज्यान्ते कुशोदकम् । २० ॥

जगद्भुवादिषण्मन्त्रैर्जपित्वास्त्रेण रक्ष्य च ।
धूपदीपादिकं दत्वा ततः पूजां समाचरेत् ॥

पञ्चगव्याभिषेकेण महापातकनाशनम् ॥ २१ ॥

इति श्रीकुमारतन्त्रे पञ्चगव्यविधिर्नाम विंशः पटलः

---

## एकविंशः पटलः

### अथ पञ्चामृतविधिः

पञ्चामृतविधिं वक्ष्ये शृणु कौशिक सुव्रत ।
पूर्ववत् स्थण्डिलं कल्प्य मध्येन्द्रादिचतुष्टये ॥ १ ॥

ईशानादीनि सद्यान्तं पञ्चकोष्ठेषु पूजयेत् ।
क्षीरं दधि घृतं चैव मधु स्यादिक्षुसारकम् ॥ २ ॥



उत्तमं प्रस्थमेवोक्तं मध्यमं तु तदर्धकम् ।
तदर्धमधमं ज्ञेयं मानं पञ्चामृतं तथा ॥ ३ ॥

क्षीरं वै मध्यमे स्थाप्य पूर्वकोष्ठे न्यसेद्दधि ।
सर्पिश्च दक्षिणे विद्वान् मधु वै चोत्तरे पुनः ॥ ४ ॥

वारुण्यामिक्षुसारं स्यादस्त्रेणैव तु शोधयेत् ।
ईशानाद्यनुवाकैश्च जप्त्वा ब्रह्मभिरर्पयेत्[1] ॥ ५ ॥

स्कन्दमूलेन तन्मध्ये गायत्र्याश्च चतुर्दिशि ।
स्कन्दसूक्तेन मन्त्रेण त्वभिषेकं पृथक्पृथक् ॥ ६ ॥

कदलीपनसं चैव नालिकेरफलं तथा ।
आम्रञ्च मातुलुङ्गं स्यादेतत् पञ्चफलं तथा ॥ ७ ॥

पञ्चामृताभिषेकेण [2]महापातकनाशनम् ।
फलसाराभिषेकेण फलमीप्सितमाप्नुयात् ॥ ८ ॥

इति श्रीकुमारतन्त्रे पञ्चामृतविधिर्नाम एकविंशः पटलः

---

## द्वाविंशः पटलः

### अथ बालस्थापनविधिः

बालस्थापनकं वक्ष्ये शृणु कौशिक सुव्रत ।
जीर्णगेहसमुद्धारे चित्रजीर्णेऽङ्गहीनके ॥ १ ॥

1 रर्चयेत् 2 पञ्च

स्थलजीर्णे पीठजीर्णे पुनर्बेरकृते तथा ।
आसन्न[1] दिवसात्पूर्वं कुम्भमावाह्य[2] कारयेत् ॥ २ ॥

तदूर्ध्वे मुनिशार्दूल बालस्थानं विधीयते ।
मूलबेरप्रतिष्ठायां[3] प्रागेव तरुणालयम् ॥ ३ ॥

मूलालयं विनिश्चित्य कारयेत् तरुणालयम् ।
[4]बालस्थानविहीनत्वात् बालानां नाशनं भवेत् ॥ ४ ॥

तस्मात्सर्वप्रयत्नेन बालस्थानं तु कारयेत् ।
मूलस्थानस्य चाग्रे वा सौम्ये वा पावकेऽपि वा ॥ ५ ॥

ऐशान्ये पूर्वभागे वा बालस्थानं विधीयते ।
कूटं वा मण्डपं वाऽपि कारयेद्विधिपूर्वकम् ॥ ६ ॥

मूलप्रासादविस्तारादधिकं नैव कारयेत् ।
मूलबेरस्य चार्धं वा तदर्धार्धमथापि वा ॥ ७ ॥

रुद्राङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
एकविंशत्यङ्गुलान्तं षड्विधं मानमङ्गुलैः ॥ ८ ॥

आयादिशुभसंयुक्तं सर्वलक्षणसंयुतम् ।
लोहजं शैलजं वाऽपि दारुजं मृण्मयं तु वा ॥ ९ ॥

यथालाभेन कर्तव्यं तरुणालयबेरकम् ।
[5]बन्धूकं वृक्षमादाय कारयेद्दारुबेरकम्[6] ॥ १० ॥

---

1 आरब्ध 2 कुम्भे भावाह्य 3 या: 4 बालालय
5 याज्ञीकं 6 दारुजे बुध:



प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् ।
पङ्क्तित्रयसमायुक्तं चतुर्द्वारसमायुतम् ॥ ११ ॥

तन्मध्ये वेदिकां कुर्यान्नवभागैकभागतः ।
परितः पञ्चकुण्डानि कारयेद्विधिपूर्वकम् । १२ ॥

दर्भमालासमायुक्तं चतुस्तोरणभूषितम् ।
वितानादिध्वजोपेतमष्टमङ्गलसंयुतम् ॥ १३ ॥

गोमयालेपनं कृत्वा पुण्याहं कारयेत्ततः ।
अयं कुमारमन्त्रेण प्रोक्षयेत् कुशवारिणा ॥ १४ ॥

अङ्कुरानर्पयेद्धीमान् पूर्वोक्तविधिना ततः ।
वेद्यूर्ध्वे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः ॥ १५ ॥

तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ।
तन्मध्ये पद्ममालिख्य साष्टपत्रं सकर्णिकम् ॥ १६ ॥

शयनं कल्पयेत् पश्चादण्डजाद्यैरनुक्रमात् ।
नयनोन्मीलनं कुर्याज्जलैश्चैवाधिवासयेत् ॥ १७ ॥

पर्यग्निकरणं कृत्वा वास्तुहोमेन मण्डपे ।
जलाद्बिम्बं समुद्धृत्य शयने शाययेद्बुधः ॥ १८ ॥

सर्वलक्षणसंयुक्तान् सर्वालङ्कारसंयुतान् ।
कुम्भानावाहयेद्धीमान् पूर्वोक्तविधिना पुनः । १९ ॥

जयन्ताद्यष्टविद्येशान् वेद्यूर्ध्वेऽष्टसु दिक्षु च ।
मध्ये कुमारमावाह्य पार्श्वे शक्तिद्वयं यजेत् ॥ २० ॥

अर्चयेद्गन्धपुष्पाद्यैः स्वैःस्वैर्नामभिरेव च ।
परिवारघटान् सर्वान् पूर्वोक्तविधिनार्चयेत् ॥ २१ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
समिदाज्यचरुं लाजान् सर्षपं च यवं तिलान् ॥ २२ ॥

होमद्रव्याणि सप्तैते जुहुयात्तु विशेषतः ।
खादिरौ वटशम्यार्कस्त्वपामार्गो महादिशि ॥ २३ ॥

प्रधाने तु पलाशः स्यात् समिधः परिकीर्तिताः ।
स्कन्दमूलेन मन्त्रेण ततः षण्मूर्तिमन्त्रतः ॥ २४ ॥

समिधादीनि जुहुयात् प्रत्येकं तु षडाहुतिः ।
[1]सद्यादीनां शिरोऽन्तेन होमयेत्तदनन्तरम् ॥ २५ ॥

शतमर्धं तदर्धं वा जुहुयाद्देशिकोत्तमः ।
सुब्रह्मण्यं कुमारं च स्कन्दं शरवणोद्भवम् ॥ २६ ॥

देवसेनापतिं विद्वान् यथोक्तेनैव पूजयेत् ।
द्रव्यान्ते व्याहृतिं हुत्वा स्पृष्ट्वा स्पृष्ट्वा च बेरकम् ॥ २७ ॥

सर्वद्रव्यसमायुक्तं हव्यवाहेन होमयेत् ।
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात् ॥ २८ ॥

1 सद्यादिना



प्रभाते समुहूर्ते तु सुनक्षत्रसुलग्नके ।
बिम्बं संस्थाप्य मतिमान् स्कन्दमूलेन मन्त्रतः ॥ २९ ॥

पुनर्दृढतरं कृत्वा पद्मपीठे विशेषतः ।
कुम्भञ्च वर्धनीं [1]चैव कृत्वा धामप्रदक्षिणम् ॥ ३० ॥

देवस्य पुरतो न्यस्त्वा न्यासं सर्वं समाचरेत् ।
कुम्भाद् बीजं समादाय बेरस्य हृदये न्यसेत् ॥ ३१ ॥

वर्धन्योर्बीजमादाय द्वयोः शक्त्योः स्तने न्यसेत् ।
तत्तद्घटस्थतोयेन क्रमेणैवाभिषेचयेत् ॥ ३२ ॥

जयन्तादिघटान् सर्वान् क्रमात्पीठेऽभिषेचयेत् ।
वस्त्रैश्च गन्धपुष्पाद्यैः पूजयेत्तु यथाविधि ॥ ३३ ॥

उद्वाहकर्म कर्तव्यं वेदोक्तेनैव वर्त्मना ।
चतुर्थे दिवसे प्राप्ते चतुर्थीहोममाचरेत् ॥ ३४ ॥

जगद्भुवादिषण्मन्त्रैरयं कुमारमन्त्रतः ।
कुण्डं प्रति हुनेत् धीमान्मूलेनैव शतं हुनेत् ॥ ३५ ॥

महाहविर्निवेद्याथ दीनानाथांश्च भोजयेत् ।
आचार्यं पूजयेत् कर्ता वस्त्रहेमाङ्गुलीयकैः ॥ ३६ ॥

उत्तमं पञ्चनिष्कं तु मध्यमं तु तदर्धकम् ।
तदर्धमधमं ज्ञेयं देशिकस्य तु दक्षिणा ॥ ३७ ॥

1 द्वे च

मूर्तिपान् परिचारांश्च यथाशक्त्या तु दक्षिणा ।
एवं यः कुरुते मर्त्यः कोटियज्ञफलं लभेत् ॥
सर्वान् कामानवाप्नोति सोऽन्ते स्कन्दपदं व्रजेत् ॥ ३८ ॥

इति श्रीकुमारतन्त्रे बालस्थापनविधिर्नाम द्वाविंशः पटलः

---

## त्रयोविंशः पटलः

### अथ संप्रोक्षणविधिः

अतः परं प्रवक्ष्यामि संप्रोक्षणविधिं शृणु ।
आवर्तं पुनरावर्तमनावर्तं तु कौशिक ॥ १ ॥

प्रोक्षणं त्रिविधं प्रोक्तं तत्तद्भेदमथ शृणु ।
आदौ च बालबेरात्तु मूलबेरं प्रतिष्ठितम् ॥ २ ॥

तदावर्तमिति ख्यातं पुनरावर्तमुच्यते ।
प्रासादपतनाच्छिन्ने प्रमादात् भिन्नके पुनः ॥ ३ ॥

मूलबेरात् समादाय संस्थाप्य बालबेरके[1] ।
तत्तन्मूलंप्रवेशं यत् पुनरावर्तमीरितम् ॥ ४ ॥

प्रतिमापीठविश्लिष्टे सुधाकर्मविहीनके ।
प्रत्यङ्गोपाङ्गहीने च प्रमादात् पतने पुनः ॥ ५ ॥

1 गेहके



चोरचण्डालसंस्पृष्टे सूतके प्रेतसंभवे ।
पूजाहीनेऽष्टदिवसात् ऊर्ध्वं शतसमावधि ॥ ६ ॥

प्रोक्षणं त्वेमवाद्येषु तदनावर्ततोरितम् ।
आवर्ते पुनरावर्ते मासपक्षर्क्षकादिभिः ॥ ७ ॥

प्रतिष्ठोक्तविधानेन कारयेद्देशिकोत्तमः ।
यात्राहोमं युगावर्ते अनावर्तं गुरूत्तम ॥ ८ ॥

न तिथिर्न च नक्षत्रे न कालश्च न वारकम् ।
कालापेक्षां विना कुर्यात् अनावर्तं गुरूत्तम ॥ ९ ॥

पूर्वस्थापितबिम्बस्य न पुनः स्थापनं स्मृतम् ।
स्थापिते तु महान् दोषस्तस्मात् संप्रोक्षणं स्मृतम् ॥ १० ॥

अङ्गस्य हानिसंधाने प्रतिष्ठां [1]नैव कारयेत् ।
जलाधिवासरहितं नेत्रोन्मीलनवर्जितम् ॥ ११ ॥

संप्रोक्षणविहीने तु पूजा निष्फलदायिनी ।
जायते तु महान् दोषस्तस्मात् संप्रोक्षणं चरेत् ॥ १२ ॥

निमित्ते समनुप्राप्ते सद्यः कृत्वा समर्चयेत् ।
आसप्तदिवसात्पूर्वं कुम्भमावाह्य मन्त्रवित् ॥ १३ ॥

अग्रे वा दक्षिणे वामे मण्डले स्थण्डिलोपरि ।
कुम्भं न्यस्त्वा समभ्यर्च्य पुनर्बेरं समावहेत् ॥ १४ ॥

1 अनु

तदूर्ध्वे बालहर्म्ये तु स्थाप्य मूले पुनर्न्यसेत् ।
प्रासादाग्रे तु कर्तव्यं दक्षिणे चोत्तरेऽपि वा ॥ १५ ॥

यथाविभवविस्तारं मण्डपं कारयेद्बुधः ।
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥ १६ ॥

वितानादिध्वजोपेतं अष्टमङ्गलसंयुतम् ।
दर्भमाला समायुक्तं [2]बिल्वपल्लवशोभितम् ॥ १७ ॥

[3]नक्षत्रतिथिवारे च पञ्चमे सप्तमेऽह्नि वा ।
पूर्वोक्तविधिना धीमान् कारयेदङ्कुरार्पणम् ॥ १८ ॥

मण्डपं नवधा कृत्वा मध्यभागे तु वेदिकाम् ।
रत्निमात्रसमुत्सेधं दर्पणोदरसंनिभम् ॥ १९ ॥

वेद्या मूले तु परितश्चोपवेदिं प्रकल्पयेत् ।
युग्माङ्गुलसमुत्सेधं द्विगुणं [1]दीर्घमुच्यते ॥ २० ॥

कुण्डानि परितः कुर्यात् नवपञ्चैकमेव च ।
दिशासु चतुरश्राणि कोणेष्वत्र कुशेशयम् ॥ २१ ॥

शक्रशाङ्करयोर्मध्ये प्रधानं तु षडश्रकम् ।
पञ्चकुण्डेषु कोणेषु वर्जयेदब्जकुण्डकम् । २२ ॥

[4]षक्कुण्डे तथैशाने कारयेत्तु षडश्रकम् ।
आवर्ते तु मुनिश्रेष्ठ बालबेरस्य चाग्रतः ॥ २३ ॥

1 कल्पयेत् 2 फल 3 पुण्यर्क्षे 4 निम्न



अङ्गन्यासं करन्यास[1]मन्तर्यागं तथाचरेत् ।
विशेषार्घ्यस्थतोयेन प्रोक्षयेदस्त्रमन्त्रतः ॥ २४ ॥

स्थण्डिलं कल्प्य मतिमान् निर्दोषैर्हेमशालिभिः ।
सूत्राभिधानरत्नाढ्यं [2]कुम्भस्योपरि [3]विन्यसेत् ॥ २५ ॥

वर्धन्यौ हेमसंयुक्ते न्यसेद् दक्षिणवामयोः ।
परितः कलशानष्टौ [4]स्वस्थानेषु क्रमान्न्यसेत् ॥ २६ ॥

मध्यकुम्भे महासेनं बालबेरात् समावहेत् ।
मूलबेरप्रवेशाय बालस्थानादिह प्रभो ॥ २७ ॥

कुम्भे विशन्तु सर्वेशाः सुब्रह्मण्यप्रियो भव ।
इदं मन्त्रं समुच्चार्य पूजयेद् गन्धपुष्पकैः ॥ २८ ॥

महावल्लीं देवसेनां वर्धन्योः पार्श्वसंस्थयोः ।
तत्तद्बेरात्समादाय क्रमेणावाह्य पूजयेत् ॥ २९ ॥

जयपन्ताद्यष्टविघ्नेशान् पीठादावाह्य पूजयेत् ।
स्थापयेन्मूलमन्त्रेण षड्वर्णेनावकुण्ठयेत् ॥ ३० ॥

सांनिध्यं हृदयेनैव यजेत्पुष्पादिभिः क्रमात् ।
दर्शयेद्बिम्बमुद्राश्च [5]षण्मुखं पद्ममुद्रिकाम् ॥ ३१ ॥

1 अन्तर्यजन 2 कुम्भं तस्योपरि 3 न्यसेत्
4 स्वर्णयुक्तान् 5 षण्मुखीं

नमस्काराख्यमुद्राश्च दिक्बन्धेदस्त्रमन्त्रत: ।
यात्राहोमं प्रकर्तव्यं बालस्थानस्य चाग्रत: ॥ ३२ ॥

निर्दोषै: सिकतै: कृत्वा स्थण्डिलं हस्तमात्रत: ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ ३३ ॥

सद्योमन्त्रेण समिधमीशानेन घृतं हुनेत् ।
जगद्भुवादिषण्मन्त्रै: स्पृष्ट्वा स्पृष्ट्वाऽ[1]सने तत: ॥ ३४ ॥

गुरुस्तु [2]मण्डपं गत्वा पुण्याहं वाचयेत्तत: ।
पर्यग्निकरणं कुर्यात् वास्तुहोमेन वर्त्मना ॥ ३५ ॥

शिरसा वाहयित्वा तु कुम्भश्च वर्धनीद्वयम् ।
क्रमाद्विघ्नेशकलशान् मूर्तिभि: परिवारकै: ॥ ३६ ॥

सर्वातोद्यसमायुक्तं वेदघोषसमन्वितम् ।
हर्म्यप्रदक्षिणं [3]कृत्वा वेदिकोपरि विन्यसेत् ॥ ३७ ॥

सकलीकृत्य संप्रोक्ष्य विशेषार्घ्यजलेन च ।
[4]देविदेवीशविघ्नेशान् पूजयेत्तु यथाक्रमम् ॥ ३८ ॥

(सर्वातोद्यसमायुक्तं वेदघोषसमन्वितम् ।)
परिवारघटांश्चैव स्थापयेद्विधिपूर्वकम् ॥
तत्तन्मूर्त्याकृतिं ध्यात्वा बाह्यकुम्भे समर्चयेत् ॥ ३९ ॥

1 हुनेत् 2 मण्डपिकं 3 गत्वा 4 देवदेव्यौ च



मण्डपद्वारपूजादि सर्वं पूर्ववदाचरेत् ।
तत: स्वाध्यायनं कुर्याच्छिन्नभक्तियुतैर्द्विजै: ॥ ४० ॥

शिवसंकल्पदीपैश्च [1]तत: श्रीरुद्रसूक्तकै: ।
स्कन्दसूक्तञ्च चमकं पूर्वभागे यजेत्सुधी: ॥ ४१ ॥

शिवसूक्तं पावमानं शान्तिद्वयं च दक्षिणे ।
त्र्यम्बकं विष्णुसूक्तञ्च वारुणं चैव पश्चिमे ॥ ४२ ॥

उत्तरे तु हिरण्यञ्च [2]बृहत्सामेति मन्त्रत: ।
षडक्षरेण मन्त्रेण कोणेषु च जपेत् बुध: ॥ ४३ ॥

आचार्यो मूर्तिपै: सार्धं ततो होमं समाचरेत् ।
समिधाज्यचरून् लाजं सर्षपं च यवं तिलम् । ४४ ॥

होमद्रव्याणि सप्तैतान्यथावज्जुहुयात्क्रमात् ।
पालाशखादिराश्वत्थबिल्वान् पूर्वादिदिक्षु च ॥ ४५ ॥

शमीखादिरमायूरा वटाश्चेति विदिक्षु च ।
प्रधानस्य पलाश: स्यात् समिध: परिकीर्तिता: ॥ ४६ ॥

स्कन्दस्य मूलमन्त्रेण तत: षण्मूर्तिमन्त्रत: ।
होमद्रव्याणि जुहुयात् प्रत्येकं तु षडाहुति: ॥ ४७ ॥

सद्यादिना शिरोऽन्तेन मन्त्रेण जुहुयात्तत: ।
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ॥ ४८ ॥

1 ततो मारुद्रसूक्तकम् 2 रथन्तरम्

पूर्णाहुतिं च शिरसा स्विष्टमग्नेति होमयेत् ।
जयादिरभ्याधानश्च राष्ट्रभृच्च हुनेत्क्रमात् ॥ ४९ ॥

नेत्रोन्मीलादिकं सर्वं नवबेरस्य कारयेत् ।
तत्प्रतिष्ठा विधानेन शेषं कर्म समाचरेत् ॥ ५० ॥

पुनरावर्तने[1] विद्वान् [2]मूलबेरं प्रगृह्य च ।
बालबेरं समावाह्य पुनर्मूले प्रवेशयेत् ॥ ५१ ॥

अनावर्ते तु यद्धाम चण्डालादिप्रदूषिते ।
मृण्मयानि च पात्राणि सर्वाणि परिवर्जयेत् ॥ ५२ ॥

कांस्यपात्राणि सर्वाणि शुद्धिं कृत्वा तु भस्मभिः ।
यथायोग्यं यथाकार्यं वस्त्रोपकरणानि च ॥ ५३ ॥

स्कन्दस्यायतनं चैव गोमयेन विलेपयेत् ।
पुण्याहं वाचयित्वाथ शुद्धाद्भिरभिषेचयेत् ॥ ५४ ॥

पञ्चगव्यैश्च संस्नाप्य घर्षयेद्बिल्वपत्रकैः ।
दर्भमूले तु वल्मीकक्षेत्रमृद्ग्राह्य लेपयेत् ॥ ५५ ॥

कौतुकं बन्धयित्वा तु हेम सूत्रेण मन्त्रवित् ।
अर्कपङ्कज बिल्वैश्च मायूराऽशोकपाटलैः ॥ ५६ ॥

गन्धोदैः स्वर्णतोयैश्च बिल्वोदैः स्नापयेद्गुहम् ।
नन्द्यावर्तैर्मल्लिकाभि[3]र्मधूकाशोकपाटलैः ॥ ५७ ॥

1 के 2 रात् 3 पलाशैश्च कदम्बकैः



पुन्नागैः कर्णिकारैश्च कुमुदोत्पलपुष्पकैः ।
बृहतीद्रोणपुष्पैश्च व्याघातैर्जातिचम्पकैः ॥ ५८ ॥

बेरं संपूज्य विधिवत् छादयेद्वा निरन्तरम् ।
आच्छाद्य नववस्त्रैश्च प्रतिबेरं विशेषतः ॥ ५९ ॥

लोहजैः[1] शयनं कार्यमथवाच्छादनं मतम् ।
मण्डपद्वारपूजा [2]च होमकर्म [3]च पूर्ववत् ॥ ६० ॥

प्रभाते देशिकः स्नात्वा मूर्तिपैः सह मन्त्रवित् ।
कुम्भञ्च कर्धनीद्रं च वाहयित्वाथ[4] मूर्तिपैः ॥ ६१ ॥

हर्म्यं प्रदक्षिणं कृत्वा गुहाग्रे स्थण्डिलं न्यसेत् ।
पुत्रभ्रातृकलत्रैश्च यजमानो[5]ऽतिभक्तिमान् ॥ ६२ ॥

शुक्लवासा गुरुः प्रीतो हैमपञ्चाङ्गभूषणैः ।
बिम्बशुद्धिकृतस्तोयं स्कन्दबेरं विशेषतः ॥ ६३ ॥

विन्यसेदक्षरन्यासं ब्रह्माङ्गन्यासमुत्तमम् ।
कुम्भान्मन्त्रं समादाय बेरस्य हृदि विन्यसेत् ॥ ६४ ॥

शक्त्योर्बीजं समादाय शक्त्योरुपरि विन्यसेत् ।
कुम्भोदकैश्च संस्नाप्य देवदेवीर्यथाक्रमम् ॥ ६५ ॥

जयन्ताद्यष्टविद्येशान् क्रमात्पीठे तु विन्यसेत् ।
तत्कुम्भस्थोदकैः स्कन्दं स्नापयेत्तु दशाक्षरैः ॥ ६६ ॥

1 जे 2 दि 3 णि 4 स 5 वजेदतु

परिवारघटाद्भिस्तु स्वस्वस्थाने क्रमाद्बुधः ।
बीजानि विधिवन्न्यस्त्वा गन्धपुष्पादिभिर्यजेत् ॥ ६७ ॥

रक्तपुष्पेण मतिमान् ईशानेनैव पूजयेत् ।
स्नपनं कारयेदन्ते यथावित्तानुसारतः । ६८ ॥

प्रभूतहविषं दद्यात ब्राह्मणान् भोजयेत्ततः ।
उत्सवं कारयेदन्ते यथा वित्तानुसारतः ॥ ६९ ॥

आचार्यं पूजयेत्कर्ता वस्त्रहेमाङ्गुलीयकैः ।
[1]अधमं दशनिष्कन्तु मध्यमं द्विगुणं स्मृतम् ॥ ७० ।

उत्तमं त्रिगुणं प्रोक्तमाचार्यस्य तु दक्षिणा ।
मूर्तिपानां दशांशैश्च दीनानाथांश्च पूजयेत् ॥ ७१ ॥

एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।
पुत्रार्थी लभते पुत्रान् धनार्थी च धनं लभेत् ॥
जयार्थी जयमाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥ ७२ ॥

इति श्रीकुमारतन्त्रे संप्रोक्षणविधिर्नाम त्रयोविंशः पटलः

---

1 कन्यत्तं

## चतुर्विंशः पटलः

अथ प्रतिमालक्षणविधिः

प्रतिमालक्षणं वक्ष्ये शृणुष्व कुशिकात्मज ।
चलं चलाचलं बेरमचलं त्रिविधं भवेत् ॥ १ ॥

शार्करं मृण्मयं [1]बेरमचलं बेर[2]मुच्यते ।
शैलजं दारुजं बेरं चलाचलमिति स्मृतम् ॥ २ ॥

चलमेवं समाख्यातं रक्तं लोहञ्च दारुजम् ।
शिलां वाऽप्यथ दारुं वा कर्म [3]योग्यस्य लक्षणम् ॥ ३ ॥

सुनिमित्तेन संग्राह्य सर्वमङ्गलसंयुतम् ।
स्थपतिर्वास्तुशास्त्रज्ञः स्कन्दबेरं प्रकल्पयेत् ॥ ४ ॥

सर्वेषां मङ्गलार्थाय मानकल्पं वदाम्यहम् ।
गर्भे नवकृते भागे रुद्रमादित्रयं त्रयम् ॥ ५ ॥

पुनर्विंशत्कृते भागे दशांशमधमं भवेत् ।
रुद्रांशं मध्यमं ज्ञेयमुत्तमं द्वादशांशकम् ॥ ६ ॥

वसुगर्ते पुनगर्भे पुनर्मध्यमकल्पिते ।
नवमानं भवेत्तत्र हस्तमानं ततोच्यते ॥ ७ ॥

एकादिनवहस्तान्तं षट्षडङ्गुलवर्धनात् ।
त्रयस्त्रिंशन्मानमुदितं हस्तमानं महामुने ॥ ८ ॥

---

1 सौधं 2 सिध्यते 3 योग्य स

दैर्घ्ये नवकरादूर्ध्वमेकविंशत्करान्तकम् ।
हस्तमानेन कर्तव्यं क्षुद्रहर्म्येण कारयेत् ॥ ९ ॥

एकहस्तोच्छ्रया[1]दूर्ध्वं मूलबेरं न कारयेत् ।
मूलबेरोदयं ह्येवमुत्सवप्रतिमां शृणु ॥ १० ॥

मूलबेरसमोत्तुङ्गं तदर्धं वा तदर्धकम् ।
भूतांशं सप्तभागे तु भूतभागे युगांशकम् ॥ ११ ॥

अन्यांशे द्व्यभागश्च षण्मानं मूलबेरतः ।
गर्भे नवकृते मानं नवधा गर्भमानतः ॥ १२ ॥

मूलद्वारसमोत्तुङ्गं नवांशैकोनमेव च ।
अष्टभागैकहीनं वा त्रिमानं द्वारमानतः ॥ १३ ॥

उत्तमं नवहस्तन्तु पञ्चहस्तन्तु मध्यमम् ।
अधमं त्रयहस्तन्तु गर्भमानमितीरितम् ॥ १४ ॥

सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनम् ।
पञ्चत्रिंशदङ्गुलान्तमङ्गुलत्रयमानकम् ॥ १५ ॥

आदिप्रासादविस्तारं तद्बाह्यं कल्पमानतः ।
तदर्धमुत्तमं ज्ञेयं तदर्धं मध्यमं स्मृतम् ॥ १६ ॥

तस्यार्धमधमं विद्धि त्रिमानं हर्म्यमानतः ।
व्रातेरुत्तरसीमान्तं स्तम्भमानं तदुत्तमम् ॥ १७ ॥

1 दून



मध्यमं तु[1] नवांशोन[2]मस्तांशोनं तथा[3]धमम् ।
मूलबेराधिकोत्तुङ्गं स्थास्पनादिषु योग्यकम् ॥ १८ ॥

परिवारादिके योग्यमधिकोच्छ्रायमीरितम् ।
लब्धमानेन मतिमान् [4]काम्यं संयोजयेत्ततः ॥ १९ ॥

वेदाशीतिद्विषष्ठी च चतुर्विंशाच्च षोडशी ।
भागं कृत्वैकभागं तु जात्यंशं ब्राह्मणादिषु ॥ २० ॥

[5]यजमानांङ्गुलैर्भक्त्वा शुभायादीनि लक्षयेत् ।
हीनं चेदङ्गुलेप्यत्र परिपूर्य समीक्षयेत् ॥ २१ ॥

आयं वसुद्वादशभिर्व्ययं[6]चत्वारि पङ्क्तिभिः ।
[7]संयोगरहिताष्टाभिर्नक्षत्रं [8]वसुमक्षकैः ॥ २२ ॥

द्वारश्च नन्दमुनिभिरंशको वेदनन्दतः ।
हृत्वा विभेद्य तच्छेषमायादिगणयेत्सुधीः ॥ २३ ॥

आयाधिक्ये धनं प्रोक्तं व्ययाधिक्ये धनक्षयम् ।
नक्षत्रेषु शुभा प्रोक्ता विपत्प्रत्यरनैधना ॥ २४ ॥

ध्वजसिंहो वृषो नन्दी[9] शुभदा अश्वयोनिषु ।
वारे शुभार्कसौराशाः शुभयोगे शुभप्रदाः ॥ २५ ॥

1 तन्नवांशोनं 2 अष्टांशोनं 3 मतम्
4 जात्यशं 5 युञ्ज 6 द्वार
7 योनिरग्निभि 8 ऋक्षकैः 9 दन्ती

अंशके तस्करक्लीबा धनप्रेक्ष्यस्तथा शुभाः ।
एवं परीक्ष्य बहुधा कारयेल्लक्षणान्वितम् ॥ २६ ॥

स्वतः प्रधाने कर्तव्यं दश[1]धा चोत्तमेन तु ।
मध्यमं दशतालेन देव्यौ च परिकल्पयेत् ॥ २७ ॥

लोहजं चेन्मधूच्छिष्टं वह्नितार्प्यं च पात्रके ।
वस्त्रेण शोध्य मतिमान् मण्डले[2] स्थण्डिलोपरि ॥ २८ ॥

फलकोर्ध्वे सुलग्ने तु स्थपतिः स्थापकाज्ञया ।
[3]मूलादिपादपर्यन्तं कल्पयेत्कल्पवित्तमः ॥ २९ ॥

षण्मानमत्र कथितमायमानमितीरितम् ।
प्रमाणं विपुलं प्रोक्तमुच्चमुन्मानमेव च ॥ ३० ॥

परिमाणं तु तन्नाहं तीव्रं स्यादुपमानके ।
लम्बसूत्रं लम्बमानं षण्मानमिदमीरितम् ॥ ३१ ॥

[4]लम्बोत्सेधं प्रकुर्यात्तु चतुर्विंशच्छतं बुधः ।
तेष्वेकं तु समं मूले त्रितस्याष्टांशसंभवे ॥ ३२ ॥

अङ्गुलं मात्रमित्युक्तं द्व्यङ्गुलं कोलकं स्मृतम् ।
त्र्यङ्गुलं तु कला ज्ञेया भागं स्याच्चतुरङ्गुलम् ॥ ३३ ॥

1 तालो 2 पे 3 मूर्धा 4 लब्धो



तदूद्वयं वाचकं चैव मुखं तदूद्वदशाङ्गुलम् ।
मुखं तालद्विपञ्चैव तस्याः पर्यायवाचकाः ॥ ३४ ॥

उष्णीषं त्र्यवैकांशः [1]केशास्तिस्रोंऽशकं तथा ।
भागमन्यवमक्ष्यन्तं समं नासापुटान्तकम् ॥ ३५ ॥

हन्वन्तं तत्समं ज्ञेयं तस्मा दूर्ध्वं शताङ्गुलम् ।
कलासप्तयवं कण्ठं मुखं रुद्रयवं च हृत् ॥ ३६ ॥

तत्समं नाभिपर्यन्तं नाभेर्मेढ्रान्तकं समम् ।
नक्षत्रांशमधश्चोरु युगांशं जानुदैर्घ्यकम् ॥ ३७ ॥

अधश्चोरुसमं जङ्घा जानु[3]गुह्यपदोन्नतम् ।
उष्णीषात्पूर्वकेशान्तं नवांशं परिकीर्तितम् ॥ ३८ ॥

उष्णीषाद्[4]ब्रह्मकेशान्तमारभ्याङ्गुलमुदाहृतम् ।
द्वयोः कर्णान्तरं पूर्वे एकविंशतिमात्रकम् ॥ ३९ ॥

द्व्यङ्गुलं कर्णविस्तारमायामं वसुमात्रकम् ।
भ्रूसूत्रसममेवोक्तं श्रोत्रांशं मुनिपुङ्गव ॥ ४० ॥

तत्पृष्ठकर्णयोर्मध्ये त्रयोदशांशमीरितम् ।
पिप्पल्यन्तादधः कुर्यात्भागं [5]तालावलम्बनम् ॥ ४१ ॥

1 केशान्तं त्र्यंशकं तथ 2 दर्धांशकं गलं 3 तुल्यं
4 पृष्ठ 5 नालत्रिलम्बनं

तालान्तं च [1]समात्रं तत् घनं त्रियवं भवेत् ।
पिप्पलीचार्धमूलं[2] च सुषिरं तस्य मानकम् ॥ ४२ ॥

नक्रकुण्डलसंयुक्तं शेषमात्राविलम्बनम् ।
शक्तिकाकारवत्कर्णनालाकृतिरुदाहृता । ४३ ॥

द्वियवं कर्णपालिश्च तत्समं कर्णपट्टिका ।
मात्रार्धं कर्णपालीस्यादङ्गुला कर्णपालिका ॥ ४४ ॥
लकारीव तयोर्मध्ये चञ्च्वक्षी कर्णचूलिका ।
अपाङ्गात्कर्णमूलं तु सप्तमात्रं प्रचक्षते ॥ ४५ ॥

कोलकद्वयसाधिक्यान्नेत्रायाममुदाहृतम् ।
षड्यवं नेत्रविस्तारमायामं तु त्रिधा भवेत् ॥ ४६ ॥
कृष्णमण्डलमंशांशं मध्ये न्यसितमण्डलम् ।
कृष्णमण्डलमध्ये तु ज्योति[3]र्युक्तप्रमाणतः ॥ ४७ ॥
करवीरोपमं रक्तं नयनस्य च मूलके ।
कनीनिका यवाद्दीर्घात् त्रिवर्णैर्लोचनं स्मृतम् ॥ ४८ ॥
ऊर्ध्वहर्म्यस्य यानं तु द्वियवार्धं यथाभवेत् ।
नवती पक्ष्मरोमाणि कृष्णाञ्जननिभानि च ॥ ४९ ॥

भ्रूरेखायाश्चक्षुरेखा कोलकद्वयवाधिरम् ।
भ्रूरेखा मूलकेशान्तं तत्समं परिकीर्तितम् ॥ ५० ॥

1 नालान्तरंवर्धं 2 मात्रं 3 यूका



भ्रूदीर्घसममात्रन्तु विस्तारं यवमेव च ।
आरोपचापाकृतिवत् मूलादग्रे क्रमात्कृशम् ॥ ५१ ॥

द्व्यङ्गुलं त्रियवं प्रोक्तं द्वयोः कर्णान्तरं स्मृतम् ।
मूलनासार्धमात्रं स्यादग्रनासा शराङ्गुला ॥ ५२ ॥

पुटमर्धाङ्गुलं तारं तत्तुङ्गं पञ्चभिर्यवैः ।
सुषिरं त्रियवं तिर्यक् बाह्ये चार्धयवं घनम् ॥ ५३ ॥
पुटान्तं त्रियवं चैव गोजिमानं चतुर्यवम् ।
गोज्याश्च नासिकोत्सेधं कोलकं त्रियवाधिकम् ॥ ५४ ॥
द्व्यंशस्यैव तु विस्तारमङ्गुलं चेति कीर्तितम् ।
पुष्करन्तु यवोत्सेधं पुरस्तात् षड्यवं ततः ॥ ५५ ॥
द्वियवं चार्धमेकं तु पुष्करन्तु विधीयते ।
तिलपुष्पाकृतिर्नासापुटनिष्पावबीजवत् ॥ ५६ ॥

पुटान्तादधरोष्ठान्तं कोलकं द्वियवाधिकम् ।
दन्तं दृश्यमदृश्यं हि [1]द्वित्रयं परिकीर्तितम् ॥ ५७ ॥

द्वियवं तस्य विस्तारमुत्सेधं तत्समं भवेत् ।
ऊर्ध्वे षोडश मन्तव्या अधस्तात्तु तथैव च ॥ ५८ ॥

अधोदन्तस्य विस्तारं यवार्धं सममुच्छ्रयम् ।
जिह्वायामन्तु षण्मात्रं विस्तारं स्यात्तदर्धकम् ॥ ५९ ॥

1 द्वात्रिंशत्

अधरोष्ठस्य विस्तारमङ्गुलं स्याद्यवाधिकम् ।
मुनिरन्तश्च विस्तारमायामः स्याद्द्विमात्रकम् ॥ ६० ॥

भागं च त्रियवाधिक्यमास्यविस्तारमीरितम् ।
ग्रीवामूलस्य विस्तारं नवमात्रं च षड्यवम् ॥ ६१ ॥

ग्रीवात्तु गलपर्यन्तं कला [1]च द्वियवाधिकम् ।
तद्गल(द्ध)नुपर्यन्तंमङ्गुलं चेति कीर्तितम् ॥ ६२ ॥

ग्रीवं सुवृत्तमुदितं द्विरेखा परिवेष्टितम् ।
सूत्रान् क्रमेण चोद्भागं कोलकं चाङ्गुलं भवेत् ॥ ६३ ॥
+हिक्कासूत्रान् क्रमेणोच्चं भागं कोलकमङ्गुलम् ॥

अर्धाङ्गुलं क्रमात् क्षीणं बाहुपर्यन्तमेव च ।
वक्षःस्थलस्य विस्तारं दशभागं चतुर्यवम् ॥ ६४ ॥

हिक्कासूत्रादधो बाहुः सप्तविंशतिमात्रकम् ।
कोलकं कूर्परायामं त्रिसप्तांशप्रकोष्ठकम् ॥ ६५ ॥

तस्मान्मध्याङ्गुलस्याग्रं सार्धत्रयोदशाङ्गुलम् ।
सप्त.ङ्गुलतलायामं शेषं मध्याङ्गुलायतम् ॥ ६६ ॥

पाणेस्तलस्य विस्तारं षण्मात्रं च चतुर्यवम् ।
तत्तुल्योऽप्यष्टभागैकं हीनमग्रस्य चाग्रतः ॥ ६७ ॥

1 वत्



सार्धकोलकमात्रेण तलमूले घनं भवेत् ।
षड्यवैकांशमुदितं तलस्याग्रघनं मुने ॥ ६८ ॥

पञ्चाशद्द्वियवोपेतं तर्जन्य.नामिकाङ्गुली ।
द्वियवोपेतभागं स्यादङ्गुष्ठस्य तु दैर्घ्यकम् ॥ ६९ ॥

[1]यवादिकाष्टमो भागो कनिष्ठाङ्गुलदैर्घ्यकम् ।
रसदृक् गन्धदिक्पंक्तियवतारं [2]व्यतारकम् ॥ ७० ॥

अंगुष्ठादेस्तदग्रे स्यादष्टभागैकहीनकम् ।
अंगुल्यग्रं त्रिधा कृत्वा द्विभागं नवविस्तृतम् ॥ ७१ ॥

तत्तारेण यवोपेतं नखायामं प्रकीर्तितम् ।
अंगुष्ठन्तु द्विपर्वं स्यादन्यांगुल्यस्त्रिपर्वयुक् ॥ ७२ ॥

तस्याग्रे द्व्यङ्गुलं हित्वा द्विद्विरेखान्तरं नयेत् ।
मूलादूर्ध्वगरेखा तु मध्यमांगुलरेखयुक् ॥ ७३ ॥

[3]मूलयुग्मनिबद्धस्य भागमेकं प्रकीर्तितम् ।
प्रकोष्ठमध्यविस्तारं भागमेकं प्रकीर्तितम् ॥ ७४ ॥

बाहुमध्यमविस्तारं [4]द्वियावकमथोच्यते ।
बाहुमूलस्य विस्तारं नवमात्रार्धमिष्यते ॥ ७५ ॥

1 यवाधिकेन भागेन  2 कनिष्ठिका  3 मणिबन्धस्य-विस्तारं  4 अर्धे

हिक्कासूत्रं तु कक्षान्तं नवमात्रार्धमुच्यते ।
कारयेत्तु द्विबाहुं च मूलतारं गुणांगुलम् ॥ ७६ ॥

स्तनयोरन्तरं तद्वच्चूचुकं तु यवान्तरम् ।
द्वियवस्तस्य विस्तारं मण्डलं तु द्विमात्रकम् ॥ ७७ ॥

हृत्प्रदेशस्य विस्तारं सार्धं स्मृत्यंगुलं भवेत् ।
उदरस्य तु विस्तारं सार्धत्रयोदशांगुलम् । ७८ ॥

यवद्वयं तु हीनं[1] स्याद् विस्तारं षड्यवं भवेत् ।
नाभिप्रदक्षिणावर्तं श्रोणिश्चाष्टादशांशकम् ॥ ७९ ॥

कटिप्रदेशविस्तारं द्वाविंशत्यङ्गुलं भवेत् ।
शरीरे गोमुखाकारं कट्याश्चोर्ध्वं प्रशस्यते ॥ ८० ॥

शरमात्रं यवोपेतं मेढ्रायाममुदाहृतम् ।
वेदाङ्गुलं समुद्दिष्टं मुष्कं विस्तारदैर्घिकम् ॥ ८१ ॥

पक्षाङ्गुलप्रमाणेन चैकैकं वृषणं स्मृतम् ।
[2]शेषं शीर्षांगुलायामं तारं दशयवं भवेत ॥ ८२ ॥

क्षयमग्रेषु भागैकं [3]मूलं चोत्पलवद्भवेत् ।
ऊरुमूलस्य विस्तारं सार्धत्रयोदशाङ्गुलम् ॥ ८३ ॥

तन्मध्ये चैकविस्तारं यवमर्धांगुलाधिकम् ।
ऊर्ध्वाग्रस्य तु विस्तारं वाग्रन्ध्रांगुलकं भवेत् ॥ ८४ ॥

1 निम्नं 2 शेफः 3 मुकुलो



जानुमण्डलविस्तारं वसुमात्रार्धमिष्यते ।
[1]यवेनाष्टांगुलं प्रोक्तं जङ्घामूलस्य विस्तृतम् ॥ ८५ ॥

तन्मध्ये तस्य विस्तारं सप्तमात्रं यवाधिकम् ।
नलकायास्तु विस्तारं [2]वर्धयेदङ्गुलं भवेत् ॥ ८६ ॥

अथ गुल्फद्वयोर्मध्ये विस्तारन्तु शराङ्गुलम् ।
तलमध्यस्य विस्तारं सार्धं भूतांगुलं भवेत् ॥ ८७ ॥

तलाग्रस्य तु विस्तारं रसाङ्गुलमिति स्मृतम् ।
अक्षान् पाष्ण्यन्तरं भागं पाष्ण्योत्सेधस्य तत्समम् ॥ ८८ ॥

अक्षादङ्गुलमूलान्तं नवमात्रार्धमिष्यते ।
पादाङ्गुष्ठायतं भागं तत्तारं [3]तद्यवाङ्गुलम् ॥ ८९ ॥

त्रितयेन चतुर्मात्रं देशिन्यायाममिष्यते ।
यवेन मात्रविस्तारं देशिन्यास्तु विधीयते ॥ ९० ॥

अंगुष्ठतर्जनीमध्ये रन्ध्रं तत् त्र्यकं भवेत् ।
मध्यायामं त्रिमात्रार्धं चतुरर्धयवेन च ॥ ९१ ॥

पादांगुष्ठात् कनिष्ठान्तं नखविस्तृतमीरितम् ।
विस्तारसममायामं नखानां वृत्तमाकृतिः ॥ ९२ ॥

षट्सप्तत्यंगुले तस्य ऊर्वोर्भागं महामुने ।
नाभिदेशस्य नाहन्तु त्रिचत्वारिंशदङ्गुलम् ॥ ९३ ॥

1 यवोन 2 सार्धवेद 3 षट्

श्रोणिदेशस्य नाहन्तु पञ्चाशन्मात्रमीरितम् ।
अन्येषां चैव सर्वेषां नाहमानं विधीयते ॥ ९४ ॥

तत्तारं त्रिगुणीकृत्य तन्मध्यांशं भवेत्पुनः ।
त्रिगुणीकृततारेण तदेका[1]दश योजयेत् ॥ ९५ ॥

तदेव समवृत्तानां नाहमित्यभिधीयते ।
उष्णीषात्पृष्ठ[2]देशान्तं सार्धत्रयोदशांगुलम् ॥ ९६ ॥

ग्रीवायामं तु भागं स्यात् तत्सम[3]श्चाङ्कुरं भवेत् ।
ककुदः कटिसन्धेश्च सप्तविंशतिमात्रतः ॥ ९७ ॥

गण्डप्रदेशस्तस्याधः सार्धत्रयोदशांगुलम् ।
तस्याधः पृष्ठ कसमं सार्धवेदांगुलं भवेत् ॥ ९८ ॥

ऊर्वायामन्तु तस्याधः सार्धद्वाविंशदंगुलम् ।
जान्वा[5]यामान्तभागं स्यात् जङ्घात्रिनवमानकम् ॥ ९९ ॥

पार्ष्ण्यायामन्तु भागं स्यात् पृष्ठयामं प्रकीर्तितम् ।
कर्णयोरन्तरं पृष्ठे द्वादशांगुलमुच्यते ॥ १०० ॥

कक्षयोरन्तरं पृष्ठे सप्तविंशतिमात्रकम् ।
पृष्ठावधिसमारभ्य तस्योर्ध्वे दशमात्रकम् ॥ १०१ ॥

---

1 कांशञ्च  2 केशान्तं  3 तु ककुद्  4 काया॥
5 यामन्तु



स्फिक्पिण्डं कारयेदूर्ध्वे [1]मूलं तद्वत्समुन्नतम् ।
उपमानं ततो वक्ष्ये शृणु कौशिक सुव्रत ॥ १०२ ॥

ऊरुमूलान्तरं मात्रं जानुमध्ये कलान्तरम्[2] ।
सार्धपक्षांगुलेनैव जङ्घान्तरमिति स्मृतम् ॥ १०३ ॥

[3]नलकाधरमंगुल्यभागं पार्ष्ण्यन्तरं भवेत् ।
अंगुष्ठाग्रद्वयोर्मध्ये यावकं चेति कीर्तितम् ॥ १०४ ॥

सार्धपक्षांगुलं मध्ये श्रोणिप्रकोष्ठमूलयोः ।
पार्श्वमध्यमबाह्वोश्च मध्यमे कौशिकांगुलम् ॥ १०५ ॥

कर्तर्यनामिका बाह्वोरन्तरं दशमात्रकम् ।
मणिबन्धकबाह्वोश्च द्व्यन्तरं तु यमं भवेत् ॥ १०६ ॥

पताकाग्रं स्तनान्तं स्यात् तयोर्मध्येऽन्तरं यमम् ।
वरदं चेत्तु तत्पृष्ठं नाभेस्तु सममुच्यते ॥ १०७ ॥

कटिकाधः प्रदेशन्तु मेढ्रमूलसमं भवेत् ।
[4]अव्यक्तमन्यताग्राह्यं कल्पयेत्कलगवित्तमः ॥ १०८ ॥

केशान्तं मकुटोत्तुङ्गं मुखमात्रं प्रचक्षते ।
सत्रिपादमुखं वाऽपि द्विमुखं वाऽथ कल्पयेत् । १०९ ॥

आयुधं मुखमात्रोच्चं सर्वलक्षणसंयुतम् ।
मानहीने महाव्याधिरधिके शत्रुवर्धनम् ॥ ११० ॥

---

1 मूलाद्भागं  2 र्धकम्  3 नलान्तरं शराङ्गुल्य  4 अनुक्त

तस्मात्सर्वप्रयत्नेन कारयेल्लक्षणान्वितम् ।
चतुर्भुजं द्विबाहुश्च शान्तं सिद्धिप्रदं स्मृतम् ॥ १११ ॥

द्विभुजश्च चतुर्बाहुः षड्भुजोऽष्टभुजः पुनः ।
द्विषड्भुजः पञ्चभेदा एतेषां लक्षणं शृणु ॥ ११२ ॥

द्विहस्ते पञ्चभेदोऽस्ति कटिबद्धाभयन्तु वा ।
पद्मधृक्[1]सकबद्धं वा दण्डेन कटिबद्धकम् ॥ ११३ ॥

शक्तिवज्रधरं वाऽपि शक्तिकुक्कुटमेव च ।
चतुर्भुजः सप्तभेदं वज्रशक्तिवराभयम् ॥ ११४ ॥

अभयं वरदं पश्चादक्षमाला कमण्डलुम् ।
ततो वै कुण्डिकाक्षस्रक् कटिबन्धाभयान्वितम् ॥ ११५ ॥

पश्चादभीतिवरदं शक्तिकुक्कुटसंयुतम् ।
ततोऽभयश्च शक्तिश्च कुक्कुटं चाक्षमालिकाम् ॥ ११६ ॥

शक्तिं कमण्डलुं पश्चात् कटिबद्धाभयन्तु वा ।
पश्चात् कुक्कुटशक्तिभ्यामसिखेटसमायुतम् ॥ ११७ ॥

एवंविधानां बेराणां [2]सूत्रमूर्तिरुदीरितम् ।
ललाटाद्घ्राण[3]भ्रूमध्ये श्रोणिमध्ये तथा पुनः ॥ ११८ ॥

मेढ्रमूलस्य मध्ये तु स्वातपादद्वयमध्यमे ।
अङ्गुष्ठमूलयोर्मध्ये स्थितं स्याच्छिवसूत्रकम् ॥ ११९ ।

1 कटि 2 एकवक्त्रमु 3 हृद्



उष्णीषात्तु ककुद्वंशं खण्डस्फिक्पादमध्यगम् ।
ऋजुस्थितिरिति ख्याता लम्बसूत्रं प्रलम्बयेत् ॥ १२० ॥

षड्भुजे त्वभयं खड्गं शक्तिं दक्षिणपाणिषु ।
खेटकं चाक्षमालाञ्च कुक्कुटं वामपाणिषु ॥ १२१ ॥

अष्टबाहुं ततो वक्ष्ये वराभिर्वज्रशक्तयः ।
खड्गखेटशरश्चापं द्विषड्भुजमथ शृणु ॥ १२२ ॥

द्विषड्भुजेति षड्भेदं तद्भेदं वदाम्यहम् ।
सव्ये शक्तिधरं खड्गं ध्वजं चैव गदाभयम् ॥ १२३ ॥

वामे वज्रं धनुः खेटं पद्मं शूलं वरः पुनः ।
शक्तिं बाणञ्च खड्गञ्च चक्रं पाशं प्रसारितम् ॥ १२४ ॥

सव्ये वामेऽपि चक्रञ्च शङ्खं वै कुक्कुटं ततः ।
धनुर्दण्डं हलं चैव विश्वामित्र महामुने ॥ १२५ ॥

शक्तिञ्च मुसलं खड्गं चक्रं पाशं तथा[1]भयम् ।
वज्रं धनुर्ध्वजं खेटमङ्कुशं वरदं तथा ॥ १२६ ॥

शक्तिं खड्गं ध्वजं पद्मं कुक्कुटं प्रासदण्डके ।
वराभयधनुर्बाणं टङ्कमेतैर्युतन्तु वा ॥ १२७ ॥

वज्रं शक्तिश्च दण्डश्च चक्रं पाशाङ्कुशं गदाम् ।
शूलं च चक्रपद्मे च वरदाभयसंयुतम् ॥ १२८ ॥

1 अङ्कुशं

तस्मात्सर्वप्रयत्नेन कारयेल्लक्षणान्वितम् ।
चतुर्भुजंद्विबाहुश्च शान्तं सिद्धिप्रदं स्मृतम् ॥ १११ ॥

द्विभुजश्च चतुर्बाहुः षड्भुजोऽष्टभुजः पुनः ।
द्विषट्भुजः पञ्चभेदा एतेषां लक्षणं शृणु ॥ ११२ ॥

द्विहस्ते पञ्चभेदोऽस्ति कटिबद्धाभयन्तु वा ।
पद्मधृक्[1]सकबद्धं वा दण्डेन कटिबद्धकम् ॥ ११३ ॥

शक्तिवज्रधरं वाऽपि शक्तिकुक्कुटमेव च ।
चतुर्भुजः सप्तभेदं वज्रशक्तिवराभयम् ॥ ११४ ॥

अभयं वरदं पश्चादक्षमाला कमण्डलुम् ।
ततो वै कुण्डिकाक्षस्रक् कटिबन्धाभयान्वितम् ॥ ११५ ॥

पश्चादभीतिवरदं शक्तिकुक्कुटसंयुतम् ।
ततोऽभयश्च शक्तिश्च कुक्कुटं चाक्षमालिकाम् ॥ ११६ ॥

शक्तिं कमण्डलुं पश्चात् कटिबद्धाभयन्तु वा ।
पश्चात् कुक्कुटशक्तिभ्यामसिखेटसमायुतम् ॥ ११७ ॥

एवंविधानां बेराणां [2]सूत्रमूर्तिरुदीरितम् ।
ललाटाद्घ्राण[3]भ्रूमध्ये श्रोणिमध्ये तथा पुनः ॥ ११८ ॥

मेढ्रमूलस्य मध्ये तु स्वातपादद्वयमध्यमे ।
अङ्गुष्ठमूलयोर्मध्ये स्थितं स्याच्छिव्रसूत्रकम् ॥ ११९ ।

1 कटि 2 एकवक्त्रमु 3 हृद्



उष्णीषात्तु ककुद्वंशं खण्डस्फिक्पादमध्यगम् ।
ऋजुस्थितिरिति ख्याता लम्बसूत्रं प्रलम्बयेत् ॥ १२० ॥

षड्भुजे त्वभयं खड्गं शक्तिं दक्षिणपाणिषु ।
खेटकं चाक्षमालञ्च कुक्कुटं वामपाणिषु ॥ १२१ ॥

अष्टबाहुं ततो वक्ष्ये वराभिर्वज्रशक्तयः ।
खड्गखेटशरश्चापं द्विषड्भुजमथ शृणु ॥ १२२ ॥

द्विषड्भुजेति षड्भेदं तत्तद्भेदं वदाम्यहम् ।
सव्ये शक्तिधरं खड्गं ध्वजं चैव गदाभयम् ॥ १२३ ॥

वामे वज्रं धनुः खेटं पद्मं शूलं वरः पुनः ।
शक्तिं बाणश्च खड्गश्च चक्रं पाशं प्रसारितम् ॥ १२४ ॥

सव्ये वामेऽपि चक्रश्च शङ्खं वै कुक्कुटं ततः ।
धनुर्दण्डं हलं चैव विश्वामित्र महामुने ॥ १२५ ॥

शक्तिश्च मुसलं खड्गं चक्रं पाशं तथा[1]भयम् ।
वज्रं धनुर्ध्वजं खेटमङ्कुशं वरदं तथा ॥ १२६ ॥

शक्तिं खड्गं ध्वजं पद्मं कुक्कुटं प्रासदण्डके ।
वराभयधनुर्बाणं टङ्कमेतैर्युतन्तु वा ॥ १२७ ॥

वज्रं शक्तिश्च दण्डश्च चक्रं पाशाङ्कुशं गदाम् ।
शूलं च चक्रपद्मे च वरदाभयसंयुतम् ॥ १२८ ॥

1 अङ्कुशं

शक्तिं चर्ममसिं शूलं विशिखाभीतिकार्मुकम् ।
चक्रं पाशं कुक्कुटञ्च वरदं द्वादशैः करैः ॥ १२९ ॥

दधानं षण्मुखं शान्तं प्रतिवक्त्रं त्रिलोचनम् ।
एवं विधानं षड्वक्त्रमेकास्यं वाऽथ कल्पयेत् ॥ १३० ॥

कुङ्कुमाभं द्वादशाक्षं सर्वाभरणभूषितम् ।
लम्बसूत्रं ततो वक्ष्ये ललाटोष्णीष मध्यमे । १३१ ॥

नासादक्षिपुटे पार्श्वे हिक्काहृस्तनसव्यके ।
नाभेर्दक्षेऽ[1]थवान्तर्ये मेढ्रदक्षिणपार्श्वके ॥ १३२ ॥

शयिताङ्घ्रेश्च पार्ष्ण्यन्ते लम्बपादस्य पार्ष्ण्यके ।
किंचिद् भङ्गयुतं सव्य मयूरारूढके ततः ॥ १३३ ॥

मयूरे शयितं वामे सव्यपादविलम्बितम् ।
नागेन्द्रोपरि संस्थञ्च तत्पादं कारयेत्ततः ॥ १३४ ॥

मयूरपार्श्वयोः स्थित्वा समदेहं प्रकल्पयेत् ।
गजारूढं तथा कार्यं पार्श्वयोः स्थितरूपकम् ॥ १३५ ॥

एककण्ठाकृतिर्वाऽथ षट्कण्ठाकृतिरेव वा ।
एकास्यैककर्णन्तु षट्कर्णं रसवक्त्रके ॥ १३६ ॥

एकास्ये तु शिरश्चक्रं कल्पयेत्कल्पवित्तमः ।
आसनं स्थानकं वाऽपि ध्यानकं त्रिविधं स्मृतम् ॥ १३७ ॥

1 ववा



आसनं द्विविधं प्रोक्तं स्थानकन्तु चतुर्भुजम् ।
द्विषड्भुजं चाष्टबाहुं षड्बाहुं ध्यानरूपकम् ॥ १३८ ॥

योगं भोगञ्च यानञ्च बेरन्तु त्रिविधं पुनः ।
आसनं योगबेरं स्यात् स्थानकं भोगबेरकम् ॥ १३९ ॥

ध्यानकं यानबेरं स्यात् नागरादिक्रमं तथा ।
सात्त्विकं द्विभुजं बेरं राजसं स्याच्चतुर्भुजम् ॥ १४० ॥

तामसं द्वादशभुजमेवं स्यादर्चनाविधौ ।
पीतं वा रक्तवर्णं वा श्यामं वर्णमथापि वा ॥ १४१ ॥

स्कन्दं पद्मासनस्थं वा मयूरारूढमेव वा ।
गजेन्द्र[1]यानकं वाऽपि शक्त्येका सहितन्तु वा ॥ १४२ ॥

शक्तिं विनाऽपि कर्तव्यं सोपवीतं सुयौवनम् ।
छन्नवीरसमायुक्तं पादनूपुरसंयुतम् ॥ १४३ ॥

पत्रकर्णयुतं कान्तं नानाकुण्डलकं तथा ।
मन्दस्मितं बालवेषं शोभनाङ्गं शुभेक्षणम् ॥ १४४ ॥

करण्डमकुटोपेतं सर्वलक्षणसंयुतम् ।
शक्तिद्वययुतं वाऽपि शक्त्येकसहितन्तु वा ॥ १४५ ॥

शक्तिं विनाऽपि कर्तव्यं योगबेरं तदीरितम् ।
देव्योरुत्सेधमद्यैव शृणु कौशिक सुव्रत ॥ १४६ ॥

1 वाहनं

कर्णान्तं[1] वाऽथ[2] सीमान्तं[3] हन्वन्तं बाहुतुङ्गकम् ।
हिक्कान्तं वा स्तनान्तं वा कल्पयेदुत्तमानि च ॥ १४७ ॥

मध्यमं दशतालेन देव्यौ च परिकल्पयेत् ।
महावल्ल्याकृतिं वक्ष्ये श्यामं मन्दस्मिताननम् ॥ १४८ ॥

स्थितं वै सव्यपादं तु वामपादं तु कुञ्चितम् ।
पद्मधृद्वामहस्तञ्च सव्यहस्तं प्रलम्बितम् ॥ १४९ ॥

देवसेनाकृतिं वक्ष्ये रक्तं मन्दस्मिताननम् ।
स्थितं वै वामपादन्तु दक्षपादं तु कुञ्चितम् ॥ १५० ॥

उत्पलं सव्यहस्ते च वामहस्तं प्रलम्बितम् ।
अङ्गाङ्गकायमनयोर्लम्बे सूत्रमथोच्यते ॥ १५१ ॥

उष्णीषाद्वामनेत्रान्ते वामनासापुटान्तके ।
वामहिक्कान्तरे वाम [4]आचाभ्यन्तरपार्श्वके ॥ १५२ ॥

नाभेर्दक्षिणपार्श्वे तु स्थितं वा जानुदक्षिणे ।
पार्श्वे कुञ्चितपादस्य वामस्थायां तु सूत्रके ॥ १५३ ॥

वल्ल्यायस्थतरे पार्श्वे लम्बसूत्रं प्रकल्पितम् ।
पीठस्य लक्षणं वक्ष्ये शृणु कौशिक सुव्रत ॥ १५४ ॥

बेरयामत्रिभागैकमासने पीठतुङ्गकम् ।
बेरायुगाङ्गं पीठोच्चं स्थानकस्य तु पीठके ॥ १५५ ॥

1 न्ता  2 चास्य  3 मन्तं  4 कु



+बेरायामयुगांशैकं पीठोच्चं स्थानकस्य तु ।
पीठोच्चसममायामं पादाधिकमथापि वा ।
तदर्धं वा प्रकर्तव्यं चतुरस्रं समंततः ॥ १५६ ॥

उत्सेधद्विगुणं वाऽपि सार्धद्विगुणमेव वा ।
पादेन द्विगुणं वाऽपि विस्तारं पूर्ववद्भवेत् ॥ १५७ ॥

सप्तभागं चतुःस्थानमथवा निर्गमं भवेत् ।
आयताश्रं समाख्यातं निर्गमेन युतं दृढम् ॥ १५८ ॥

आयामन्तु त्रिधा कृत्वा भागं वा निर्गमं भवेत् ।
सप्तभागं चतुर्भागं अथवा निर्गमं भवेत् ॥ १५९ ॥

पीठोत्सेधं परिग्राह्य तिथ्यंशं विभजेत्ततः ।
ज[1]मव्योमांशमुदितं युगांशं जगती भवेत् ॥ १६० ॥

वेदांशं कुमुदं ज्ञेयं व्योमांशं पट्टिका भवेत् ।
पक्षांशं स्कन्धमुदितं पट्टिकांशैकमुच्यते ॥ १६१ ॥

महापट्टिद्विभागेन भद्रपीठं महामुने ।
उत्सेधं पूर्ववद्ग्राह्य जन्मव्योमांशमेव च ॥ १६२ ॥

जगती चतुरंशेन विप्र कन्यांशकं भवेत् ।
व्योमांशं पट्टिका ज्ञेया कन्धरन्तु द्विमात्रकम् ॥ १६३ ॥

1 मन्न्यंशकं

एकेन पट्टिकां कुर्यात् महापट्टी तदंशकम् ।
व्योमांशमूर्ध्वपट्टी च पीठं श्रीकरसंज्ञकम् ॥ १६४ ॥

स्मृत्यंशं भज्य तद्दैर्घ्यमुपानत्वेकमुच्यते ।
एकांशेनैव कल्पं तु पद्ममेकं न कारयेत् ॥ १६५ ॥

कल्पमेकेन कर्तव्यं जगती च युगांशकम् ।
रुद्राक्षांशेन वप्रं स्यात् पट्टमेकेन कारयेत् ॥ १६६ ॥

पक्षांशेनैव कण्ठन्तु कल्पमेकेन कारयेत् ।
ऊर्ध्वपद्म[1] द्वयांशेन महापट्टिद्विमात्रतः ॥ १६७ ॥

एतत्सौन्दर्यमाख्यातं दैर्घ्यं मन्वंशकं भवेत् ।
जन्मैकांशमथा[2]न्यंशं पद्ममेकेन पट्टिका ॥ १६८ ॥

चतुरंशेन कण्ठन्तु व्योमांशेनैव कम्प[3]कम् ।
ऊर्ध्वपद्मं [4]नवांशेन महापट्टिद्विमात्रकम् ॥ १६९ ॥

व्योमांशेनोर्ध्वपट्टी च पद्मपीठमिदं भवेत् ।
चतुर्विंशत्पञ्चविंशत् षड्विंशद्भागसंयुतम् ॥ १७० ॥

पीठभागं भजेत्तस्मिन् एकवंशेन निर्गमम् ।
पंक्तित्रययुतं वाऽपि भूतपङ्क्तियुतन्तु वा ॥ १७१ ॥

मुनिपङ्क्तियुतं वाऽपि कण्ठभागन्तु कारयेत् ।
स्वतः प्रधाने कर्तव्यमेकं स्यान्मूलबेरकम् ॥ १७२ ॥

1 मथा  2 न्यंशं  3 ल्पकम्  4 अथ



मयूरारूढमुदितं वाहनेन विनाऽथवा ।
मयूरलक्षणं वक्ष्ये शृणु कौशिक सुव्रत ॥ १७३ ॥

पादादेर्मस्तकान्तश्च मयूरोत्तुङ्गमीरितम् ।
बेरोच्चमर्धमर्धार्धमुत्तमं मध्यमाधमम् ॥ १७४ ॥

पादा[1]दिमस्तकान्तश्च गृह्य तत्पञ्चधा भवेत् ।
द्विभागश्चरणोत्तुङ्गं कायमेकांशमेव च ॥ १७५ ॥

शेषांशं स्याद्गलोत्तुङ्गमर्धांशं नासिका भवेत् ।
उरसः पुच्छपर्यन्तन्तत्पादाधिकमेव च ॥ १७६ ॥

अर्धाधिकं त्रिपादं वा उत्तमे मध्यमेऽधमे ।
विस्तारस्य त्रिभागैकं पृष्ठतारं प्रकीर्तितम् ॥ १७७ ॥

तन्नाहं गलमूलन्तु तदर्धन्तु गलाग्रकम् ।
त्रिपुच्छाग्रशिखीपिञ्छं गलं पादद्वयं सुधीः ॥ १७८ ॥

पिञ्छपुच्छमलंकृत्य चास्यं नागेप्रलम्बितम् ।
सर्वालङ्कारसंयुक्तमङ्गोपाङ्गैश्च शोभितम् ।
यथाशोभं तथा सर्वं युक्त्या युञ्जीत बुद्धिमान् ॥ १७९ ॥

इति श्रीकुमारतन्त्रे प्रतिमालक्षणविधिर्नाम चतुर्विंशः पटलः

———

1 द्या

# पञ्चविंश पटलः

## अथ शूलस्थापन विधिः

अथ कौशिक वक्ष्येऽहं शूलस्थापनमुत्तमम् ।
चन्दनस्तिन्दुकस्तालशिशरीषं सोमवल्कलम् ॥ १ ॥

राजादनः सप्तपर्णः स्तम्बको रक्तचन्दनम् ।
आसनं खादिरो देवदार्वेते शूलबेरयोः ॥ २ ॥

उत्कृष्टभूमिसंजाता [1]भिन्नसारास्युरुत्तमाः ।
रूक्षसारा मध्यमा स्युः फल्गुसाराश्च निन्दिताः ॥ ३ ॥

वक्रं त्वशनिना भग्नं स्वयं शुष्कं परित्यजेत् ।
स्त्रीपुन्नपुंसकं ज्ञात्वा त्यजेद्वृक्षं नपुंसकम् ॥ ४ ॥

स्यात्स्त्रीवृक्षं पुमान् पुंसी कर्तव्यं फलकाङ्क्षिभिः ।
प्रशस्तपक्षनक्षत्रे सुमुहूर्ते सुलग्नके ॥ ५ ॥

स्थपतिर्विधिना ग्राह्यं कल्पयेत्स्थापकाज्ञया ।
यावद्बेरोच्चमधुना तावच्छूलस्य दैर्घ्यकम् ॥ ६ ॥

चतुर्भागैकविस्तारं मध्योदरविशालकम् ।
अष्टश्रं चतुरश्रं वा हिक्कान्तास्यन्तमीरितम् ॥ ७ ॥

1 स्निग्ध



शेषाण्यङ्गानि वृत्तानि कारयेन्मुनिपुङ्गव ।
पञ्चभागैकहीनेन बाहुपर्यन्तविस्तरम् ॥ ८ ॥

वक्षो[1]दण्डवनं तस्य भूतभागैकविस्तरम् ।
कटिविस्तारं पञ्चांशहीनेन कटिदण्डकम् ॥ ९ ।

हस्तौ पादावंगुलीश्च तथैव परिकल्पयेत् ।
मानो [2]ज्ञानप्रमाणेन प्रतिमां कारयेद्बुधः ॥ १० ॥

मानहीने महाव्याधिरधिके रिपुवर्धनम् ।
तस्मात्सर्वप्रयत्नेन कारयेल्लक्षणान्वितम् ॥ ११ ॥

उक्तस्थानं प्रकर्तव्यं रत्नन्यसन्तु पूर्वके ।
बीजानि सर्वरत्नानि धातुगन्धौषधीरपि ॥ १२ ॥

पात्रे निधाय पूर्वादितत्तद्दिक्पतिमन्त्रतः ।
देशिकः स्थाप्य तत्पश्चात् शूलस्थापनमाचरेत् ॥ १३ ॥

इति श्रीकुमारतन्त्रे शूलस्थापनविधिर्नाम पञ्चविंशः पटलः

———

1 दण्डायतं 2 जानु

## षड्त्रिंशः पटलः

अथ अचलस्थापनविधिः

अचलस्थापनं वक्ष्ये शृणुष्व मुनिपुङ्गव ।
सर्वलोकहितं पुण्यं सर्वरोगविनाशनम् ॥ १ ॥

श्रीप्रदं विजयं [1]सौम्यं सर्वदोषनिकृन्तनम् ।
कुशब्दः कुत्सितो ज्ञेयो मारशब्दस्तु मारणम् ॥ २ ॥

कुत्सितार्थं मृतं येन कुमारो नाम विद्यते ।
आदिशक्तेः [2]समानांशो महासेनोपजायते ॥ ३ ॥

पद्माख्यां षण्मुखीं मुद्रां षण्मुखप्रीतये शृणु ।
सहितौ मणिबन्धौ द्वौ कनिष्ठौ सङ्गतौ तथा ॥ ४ ॥

अंगुष्ठौ सङ्गतौ द्वौ च शेषाः प्रविरला स्मृताः ।
पद्ममुद्रेति विख्याता सर्वसिद्धिप्रदायिनी ॥ ५ ॥

अंगुष्ठौ द्वावधो युक्तौ कनिष्ठाग्रपरस्परौ ।
तर्जन्यौ मध्यमालग्नावनामिकांगुली तथा ॥ ६ ॥

तेषां मध्ये प्रविरलावूर्ध्वगौ मध्यमांगुलौ ।
मुद्रेयं षण्मुखी प्रोक्ता विधिरन्योऽस्ति तं शृणु ॥ ७ ॥

शेषांगुलीनामन्योन्यं मणिबन्धं च संयुतौ ।
तिर्यक्कनिष्ठिकाग्रे च उदयावपि षण्मुखी ॥ ८ ॥

1 सौख्य    2 सहस्रांशो



षण्मुखी द्विविधा ज्ञेया भुक्तिमुक्तिप्रदायिनी ।
प्रतिमां कारयेद्धीमान् प्रतिमालक्षणोक्तवत् ॥ ९ ॥

उत्तरायणकाले स्यान्न कुर्याद्दक्षिणायने ।
शुक्लपक्षेऽपि रिक्ता च प्रतिपच्चाष्टमी तिथौ ॥ १० ॥

पञ्चदश्यां शुभं ज्ञयं गुर्विन्दुज्ञसितश्शुभाः ।
अशुभा रविसौराराः शुभयोगे शुभप्रदाः ॥ ११ ॥

ज्येष्ठादिपूर्वनैर्ऋत्यमाश्लेषाश्विश्च वारुणम् ।
श्रविष्ठार्द्रा विशाखा च नेष्ट स्थापनकर्मणि ॥ १२ ॥

चरराशयधतस्त्रस्तु धनुर्नेष्टास्तु राशिषु ।
शुभग्रहाणां होराश्च द्रेक्काणादेः शुभं न च ॥ १३ ॥

पापग्रहसमायुक्ता मुक्तिकाङ्क्षी तमन्धकम् ।
षण्डस्थूणव्यतीपातं वृष्टिके रणसंक्रमम् ॥ १४ ॥

कण्टकं ब्रह्मदण्डश्च विद्धमुत्पातकन्तथा ।
ग्रहणं वेधनक्षत्रं शूलर्क्षं भूमिकम्पनम् ॥ १५ ॥

ध्वजं चैव विशेषेण वर्जयेत्तु प्रयत्नतः ।
गुरुशुक्रास्तमनयोः प्रतिष्ठां वर्जयेत्ततः ॥ १६ ॥

एवं परीक्ष्य कर्तव्यमचलस्थापनं मुने ।
अचलानां मूलबेरमचलं परिकीर्तितम् ॥ १७ ॥

शिखरे पर्वते वाऽपि पर्वतस्यान्तिकेऽपि वा ।
नदीतीरेऽप्युपवने पुण्यक्षेत्रे चतुष्पथे ॥ १८ ॥

ग्रामे च नगरे चैव पत्तने खेटकेऽपि वा ।
राजधान्यां वीथिमध्ये वीथ्यग्रे सर्वदिक्षु च । १९ ॥

पूर्वास्यं पश्चिमास्यं वा दक्षिणास्यमुदङ्मुखम् ।
परिवारामरैर्युक्तं स्थापयेच्छरसम्भवम् ॥ २० ॥

द्विहस्तो यज्ञसूत्राङ्गः सशिखः सत्रिमेखलः ।
कौपीनदण्डधृक् सव्यपाणितुर्याश्रितोऽपरान् ॥ २१ ॥

स्थापयेद्दैकतं स्कन्दं पर्वतेषु वनेषु च ।
द्विभुजश्च द्विनेत्रश्च सुब्रह्मण्यः सुसुन्दरः ॥ २२ ॥

पद्मधृक् सव्यपाणिस्तु इतरेतरधृक्करः ।
बालरूपं प्रतिष्ठाप्य ग्रामस्यैवाभिवृद्धये ॥ २३ ॥

चतुर्भुजो द्विनेत्रश्च कर्णयोः पत्रपिण्डधृक् ।
नक्रकुण्डलसंयुक्तश्चक्रशक्तिवराभयः ॥ २४ ॥

शक्तिद्वयसमायुक्तो शक्त्येकसहितोऽथवा ।
द्विनेत्रे द्विभुजे शान्ते पद्मचारुकराम्बुजे ॥ २५ ॥

लम्बमानकरे चैव श्यामरक्तकरप्रभे ।
महावल्लीं देवसेनां सव्यवामस्थिते उभे ॥ २६ ॥



एवं लक्षणधृक् स्थाप्यो ग्रामे वा नगरेऽपि वा ।
षडाननश्च षड्बाहुरर्कश्रोत्रेक्षणान्वितः ॥ २७ ॥

षट्कण्ठस्त्वेककण्ठो वा प्रतिमौलिभिरन्वितः ।
सशक्तिस्साभयस्सासिः साक्षमालस्सकुक्कुटः ॥ २८ ॥

सखेटकस्त्वयं स्थाप्यो वृद्धये पत्तनादिषु ।
रक्ताम्बरसमायुक्तो बालचन्द्रसमप्रभः ॥ २९ ॥

करण्डमकुटोपेतो हस्तद्वादशकस्तु वा ।
शक्तिश्च मुसलं खड्गं चक्रं पाशाभये वहन् ॥ ३० ॥

दक्षिणे दक्षिणे वज्रं कार्मुकं खेटकन्तथा ।
मयूरश्च ध्वजं वाऽपि साङ्कुशं वरमावहन् ॥ ३१ ॥

सोपवीतो मयूरस्थः शक्तिद्वयसमन्वितः ।
ग्रामादौ स्थापयेद्देवं प्रासादादौ च सिद्धये ॥ ३२ ॥

एवं पञ्चविधं प्रोक्तं विभागस्थानभेदतः ।
स्वतः प्रधाने वक्त्रैकं मूलबेरन्तु पूर्तिदम् ॥ ३३ ॥

मोक्षार्थं षण्मुखं बेरं मूलबेरं प्रतिष्ठितम् ।
प्रतिष्ठादिवसात्पूर्वं सप्तमे पञ्चमेऽह्नि वा ॥ ३४ ॥

त्रि[1]दिने तद्दिने वाऽपि कारयेदंकुरार्पणम् ।
मण्डपं कारयेद् विद्वान् प्रासादाग्रे द्विपार्श्वयोः ॥ ३५ ॥

---

1 तृतीये

द्वात्रिंशद्धस्तविस्तारमुत्तमं मण्डपं स्मृतम् ।
अष्टाष्टस्तम्भसंयुक्तं पङ्क्तिनालमथोच्छ्रयम् ॥ ३६ ॥

मण्डपस्यैव मध्ये तु चतुस्तम्भैर्विराजयेत् ।
विंशत्करसमायुक्तं मध्यमं मण्डपं स्मृतम् ॥ ३७ ॥

षट्त्रिंशद्गात्रसंयुक्तं नवतालसमुच्छ्रयम् ।
पूर्ववत्संत्यजेत्स्तम्भान् रविहस्तायतन्ततः ॥ ३८ ॥

षोडशस्तम्भसंयुक्तमष्टतालं समुच्छ्रयम् ।
कन्यसं मण्डपं ज्ञेयं विश्वामित्र महामुने ॥ ३९ ॥

उत्तमादिषु बेरेषु तत्तद्योग्यं प्रकल्पयेत् ।
कूटं वाऽपि प्रपां वाऽपि मण्डपं सम्यगाचरेत् ॥ ४० ॥

एकाशीतिपदं कृत्वा मध्यवेदी नवांशतः ।
रत्निमात्रं समुत्सेधं दर्पणोदरसन्निभम् ॥ ४१ ॥

सुधयेष्टिकया वाऽपि मृदा निर्दोषयाऽपि वा ।
तत्प्रदेशं खनित्वाऽथ पूरयेच्छुद्धवालुकैः ॥ ४२ ॥

तदूर्ध्वे वेदिकाञ्चैव कुण्डानि च प्रकल्पयेत् ।
परितश्चोपवेदीञ्च युगांगुलसुविस्तृतम् ॥ ४३ ॥

तदूर्ध्वोच्छ्रयसंयुक्तां निम्नोन्नतविवर्जिताम् ।
द्विद्व्यंगुलं तथाधिक्यं मध्यमोत्तममण्डपे ॥ ४४ ॥



वेदिकायास्तु परितः कुण्डानि परिकल्पयेत् ।
उत्तमे मण्डपे चैव द्वात्रिंशत्कुण्डमीरितम् ॥ ४५ ॥

चतुर्विंशतिकुण्डानि कुर्यान्मध्यममण्डपे ।
नवकुण्डानि कर्तव्या कन्यसे मण्डपे द्विज ॥ ४६ ॥

अश्रं योन्यर्धचन्द्राभं गुणाश्रं वर्तुलाकृतिम् ।
षडश्रं पद्ममष्टाश्रं कुर्यात्पूर्वादिदिक्षु च ॥ ४७ ॥

षडश्रन्तु प्रधानं स्यान्मध्ये शांकरवज्रिणोः ।
एवमभ्यन्तरे कुर्यात् बाह्ये सर्वयुगाश्रकम् ॥ ४८ ॥

सर्वलक्षणसंयुक्तं पूर्वोक्तविधिनाऽचरेत् ।
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥ ४९ ॥

वितानैरपि सञ्छाद्यमष्टदिग्गजसंयुतम् ।
हेमशूलारुणा रक्ता कृष्णनीलसितारुणा ॥ ५० ॥

एकहस्तविशालोच्चं तदर्धार्धशिरोऽन्वितम् ।
ध्वजायामसमायामं पुच्छद्वयसमन्वितम् ॥ ५१ ॥

वज्रं त्रिशूलपर्यन्तं ध्वजेष्टसु लेखयेत् ।
प्रपादिषु क्रमादेवं लम्बयेत्तु प्रदक्षिणम् ॥ ५२ ॥

रम्भा पनसपूगाम्रनालिकेरफलैरपि ।
चूतवृक्षांस्तु ताम्बूललताभिश्च विभूषयेत् ॥ ५३ ॥

मुक्ताः स्रग्दामविविधैर्दर्भमालाभिरावृतम् ।
गात्रवेष्टनसंयुक्तं मङ्गलाङ्कुरशोभितम् ॥ ५४ ॥

अष्टमङ्गलसंयुक्तं घृतदीपसमन्वितम् ।
कुण्डगेहसमायुक्तं मण्डपं भूषयेत्ततः ॥ ५५ ॥

मण्डपस्योत्तरे कुर्यात्तदर्धेनैव मण्डपम् ।
तन्मध्ये स्नानवेदीश्च वेद्यूर्ध्वे च विशालतः ॥ ५६ ॥

नालावटसमायुक्तं जलमार्गसमायुतम् ।
बाहुमात्रायताघातं श्वभ्रं तस्यैव वामतः ॥ ५७ ॥

गोमयालेपनं कृत्वा रजांसि विनिपातयेत् ।
शैलजं मृण्मयं बेरमचलं द्विविधं भवेत् ॥ ५८ ॥

मृण्मयं चलकर्म स्याद् रत्नन्यासं तटाद्यके ।
शैलजे रत्नविन्यासं प्रतिष्ठाकालपूर्वतः ॥ ५९ ॥

उक्तस्थाने गर्भगेहे रत्नन्यासं समाचरेत् ।
वज्रं मरकतं नीलं पुष्यरागं प्रवालकम् ॥ ६० ॥

मौक्तिकं चैव वैडूर्यं स्फटिकञ्च महामणिम् ।
इन्द्रादि मध्यपर्यन्तं स्कन्दमूलेन विन्यसेत् ॥ ६१ ॥

सुवर्णं रजतं ताम्रमायसं त्रपुसीसकम् ।
आरकूटञ्च विदुषा देवलोहं क्रमान्न्यसेत् ॥ ६२ ॥



हरितालकमञ्चैव गन्धश्चागरुचन्दनम् ।
सौराष्टं गैरिकञ्चैव माक्षिकं प्राग्विदिक्षु च ॥ ६३ ॥

वैष्णवं वज्रपाणिश्च वृषभध्वजमेव च ।
लक्ष्मीश्च सहदेवीश्च शङ्खपुष्पं सुवर्चलम् ॥ ६४ ॥

दूर्वाश्च श्रीमुखञ्चैव विन्यसेत्तु क्रमेण तु ।
यवगोधूमनीवारं शालिवैणवकानि च ॥ ६५ ॥

प्रियङ्गुतिलमुद्गानि निष्पावश्च क्रमान्न्यसेत् ।
चन्दनं कुङ्कुमञ्चैव लोहपात्रं फलत्रयम् ॥ ६६ ॥

कर्पूरमुशिरञ्चैव पूर्वाद्याशासु विन्यसेत् ।
पृथिवीं शातकुम्भेन समुद्ररजतेन तु ॥ ६७ ॥

कृत्वा मयूरं ताम्रेण तोमरं चामरं गजम् ।
श्रीवत्सं कलशं भेरीं दर्पणं पद्मपुष्पकम् ॥ ६८ ॥

महामेरुसुवर्णेन कृत्वा रन्ध्रावटे न्यसेत् ।
देव्योस्तद्दक्षिणे वामे हेमाब्जानि न्यसेद्बुधः ॥ ६९ ॥

मध्यमे दक्षिणे सौम्ये त्ववटेषु क्रमान्न्यसेत् ।
पद्ममुद्राश्च मुकुलीं शोधनीश्च प्रदर्शयेत् ॥ ७० ॥

पूजयित्वा तु रत्नानि गन्धपुष्पादिभिस्तथा ।
पांसुना चानुलिप्याथ पीठन्यासक्रमान्न्यसेत् ॥ ७१ ॥

सर्वालङ्कारसंयुक्ते मण्डले स्थण्डिलोपरि ।
नयनोन्मीलनं कृत्वा नेत्रयुग्मयुते दिने ॥ ७२ ॥

मृण्मये गर्भगेहे तु नेत्रमोक्षणमाचरेत् ।
स्नातश्शुद्धशिल्पवेषो भस्माभरणवस्त्रयुक् ॥ ७३ ॥

पीतोऽक्षिमोक्षणं कुर्यात् हेमसूचिकया सुधीः ।
देवदेव्योर्मयूरश्च कुक्कुटश्च क्रमेण तु ॥ ७४ ॥

पक्ष्मरेखान्ततो लिख्य ततो वै कृष्णमण्डलम् ।
ज्योतिर्मण्डलमालिख्य पश्चाच्छिल्पि विसर्जयेत् ॥ ७५ ॥

तस्याग्रे स्थण्डिलं कृत्वा बिम्बं तस्योपरिन्यसेत् ।
पुण्याहं वाचयेत्तत्र प्रोक्षयेदस्त्रमन्त्रतः ॥ ७६ ॥

सूत्रैकादिसमायुक्तानष्टकुम्भान् न्यसेत्क्रमात् ।
बेरस्य परितोऽभ्यर्च्य लोकेशान् स्वस्वमन्त्रतः ॥ ७७ ॥

हेमसूच्या गुरुर्लिख्य नेत्रमन्त्रमनुस्मरन् ।
मधु वाताऋतायेति मधुपात्रं प्रदर्शयेत् ॥ ७८ ॥

घृतं मिमिक्षेति मन्त्रेण घृतपात्रं प्रदर्शयेत् ।
आप्यायस्वेति मन्त्रेण क्षीरपात्रं प्रदर्शयेत् ॥ ७९ ॥

सुवर्णं रजतं कांस्यं पात्रं मध्वादिना ततः ।
सुवर्णदूर्वया नेत्रं मध्वाज्यक्षीरमर्पयेत ॥ ८० ॥



सुवर्णरेखा संयुक्तं सूर्यसोमाग्निदैवतम् ॥
तर्जनीमध्यमाधिक्यां न्यसेन्नेत्रमनुस्मरन् ॥ ८१ ॥

धेनुगव्येति मन्त्रेण सवत्सां गां प्रदर्शयेत् ।
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान्दर्शयेत्ततः ॥ ८२ ॥

जगद्भुवादिमन्त्रेण स्वस्तिमङ्गलवाचकैः ।
प्रच्छन्नपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत् ॥ ८३ ॥

पञ्चगव्येन संस्नाप्य पञ्चब्रह्मषडङ्गकैः ।
कलशाद्भिस्तु संस्नाप्य ततः पञ्चामृतादिभिः ॥ ८४ ॥

अष्टमृत्सलिलेनैव स्नापयेत्तु षडक्षरैः ।
पर्वताग्रे नदीतीरे वल्मीके कर्कटावटे ॥ ८५ ॥

दन्ति दन्ते वृषे शृङ्गे गवां गोष्ठे चतुष्पथे ।
मृदमष्टविधं ग्राह्य प्रकुर्याद्बिम्बशुद्धिकम् ॥ ८६ ॥

स्नापयेद्बिल्वतोयैश्च पञ्चत्वक्सलिलैरपि ।
गन्धाद्भिश्शुद्धतोयैश्च स्कन्दसूक्तेनमन्त्रतः ॥ ८७ ॥

नमकं चमकञ्चैव पुरुषसूक्तमतः परम् ।
पञ्चशान्ति जपित्वाथ स्नापयेच्छरसम्भवम् ॥ ८८ ॥

गन्धपुष्पादिभिर्विद्वान् पूजयेद्धृदयेन तु ।
सर्वालङ्कारसंयुक्तं सर्वातोद्यसमन्वितम् ॥ ८९ ॥

वितानध्वजसंयुक्तं छत्रचामरभूषितम् ।
नानाभक्तजनैस्साधं नानादीपैस्समायुतम् ॥ ९० ॥

रथे वा शिबिकायां वा कुर्याद्ग्रामप्रदक्षिणम् ।
जलतीरं समाच्छाद्य शुद्धिं कृत्वा भुवस्थलम् ॥ ९१ ॥

तस्मिन् बेरं समानीय वस्त्रादीनि व्यपोह्य च ।
नववस्त्रेण संवेष्ट्य लम्बकूर्चेन संयुतम् ॥ ९२ ॥

चतुर्गात्रयुतं कृत्वा जलमध्ये प्रपान्ततः ।
तन्मध्ये विन्यसेत्पीठं चतुर्गात्रयुतं दृढम् ॥ ९३ ॥

तदूर्ध्वे फलकां क्षिप्त्वा नाभिदघ्नेऽधिवासयेत् ।
अष्टकुम्भान् न्यसेद्दिक्षु दिग्देवान् पूजयेत्ततः ॥ ९४ ॥

पञ्चरात्रं त्रिरात्रं वाऽप्येकरात्रं जलोषितम् ।
चतुर्वेदैश्चतुर्दिक्षु कुर्यादध्ययनं द्विजैः ॥ ९५ ॥

पुण्याहं वाचयित्वाऽथ प्रोक्षयेद्यागमण्डपम् ।
वास्तुहोमं ततः कुर्यात् समीरिणपदे बुधः ॥ ९६ ॥

पर्यग्निकरणं तेन वह्निनाऽत्रैव कारयेत् ।
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैस्तु शालिभिः ॥ ९७ ॥

तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ।
तन्मध्ये नलिनं लिख्य साष्टपत्रं सकर्णिकम् ॥ ९८ ॥



दर्भैर्लाजैस्सपुष्पैश्च परिस्तीर्य यथाविधि ।
शयनं कल्पयेत्तत्र चर्मजाद्यैरनुक्रमात् ॥ ९९ ॥

जलादुत्तीर्य देवेशं स्नानवेद्योपरि न्यसेत् ।
व्यपोह्य वस्त्रकूर्चादीन् गव्यैश्चैवाभिषेचयेत् ॥ १०० ॥

स्कन्दसूक्तं जपित्वाऽथ पवमानमुदीरयन् ।
अयंकुमारमन्त्रेण मालामन्त्रेण देशिकः ॥ १०१ ॥

[1]शुभाम्भसा तु संस्नाप्य रक्तवस्त्रेण वेष्टयेत् ।
गन्धपुष्पादिभिः पूज्य हृदयेन तु मन्त्रतः ॥ १०२ ॥

कौतुकं बन्धयेत्तत्र स्कन्दशक्तिं गुरूत्तमः
पद्ममुद्रां नमस्कार षण्मुखीं दर्शये त्ततः ॥ १०३ ॥

नैवेद्यं दापयित्वाऽथ ताम्बूलञ्च निवेदयेत् ।
मण्डपं विकिरान् क्षिप्त्वा प्रोक्षयेदर्घ्यवारिणा ॥ १०४ ॥

शयने शाययेद्देवं प्राक्शिरश्चोर्ध्ववक्त्रकम् ।
शक्तिद्वयं द्विपार्श्वे तु शाययित्वा यथाविधि ॥ १०५ ॥

वस्त्रेणाच्छादये[3]च्छक्ति[4]द्वयञ्चैव पृथक्पृथक् ।
भूतशुद्धिं ततः कृत्वाऽप्यन्तर्यजनमाचरेत् ॥ १०६ ॥

अयंकुमारमन्त्रेण गन्धपुष्पादिनार्चयेत् ।
आसनं मूर्तिमूलञ्च ब्रह्माङ्गञ्च[5]प्रपूरयेत् ॥ १०७ ॥

---

1 शुद्धां 2 सुधीः 3 स्कन्दं 4 शक्तिद्वयं 5 प्रपूजयेत्

सर्वलक्षणसंयुक्तान् कुम्भान्[1]संगृह्य देशिकः ।
चतुर्विंशत्प्रस्थतोयैः पूरितं निष्कलं[2]गुहम ॥ १०८ ॥

पक्वबिम्बफलोपम्यं निर्दोषञ्च घनस्वनम् ।
स्कन्दकुम्भमिति प्रोक्तं शक्तिवज्रधरं न्यसेत् ॥ १०९ ॥

[स्कन्दकुम्भमिति प्रोक्तं द्रोणतोयेन पूरितम् ।
समृद्धां लक्षणोपेतां गृहीत्वा शक्तिवर्धनीम् ॥ ११० ॥

त्रिवृत्सत्रेण संवेष्ट्य प्रादक्षिण्याद्यवान्तरम् ।
द्रोणतोयेन सम्पूर्णान् कुम्भान्सर्वान्सलक्षणान् ॥ १११ ॥

तन्तुनावेष्ट्य कुशलो गवाक्षसदृशान्तरम् ।
अस्त्रेण क्षाल्य च प्रोक्ष्य वस्त्रपूतैर्जलैश्शुभैः ॥ ११२ ॥

सर्वगन्धयुतैःपूर्य रक्तवस्त्रद्वयेन च ।
स्कन्दकुम्भं समावेक्ष्य वद्धन्यौ च पृथक्पृथक् ॥ ११३ ॥

स्कन्दबेरशिरो भागे कल्पयेदासनन्ततः ।
स्कन्दकुम्भन्तु विन्यस्य स्कन्दाद्यैस्सम्यगर्चयेत् ॥ ११४ ॥

पञ्चरत्नानि विन्यस्य न्यसेदुत्तमकूर्चकम् ।
स्कन्दकुम्भं न्यसेन्मध्ये स्कन्दमन्त्रं सबीजयुक् ॥ ११५ ॥

आधाराख्यमनन्तञ्च धर्मादीन् कल्पकल्पवित् ।
अष्टशक्तिश्शकुन्याद्यां आसनमूर्तिमेव च ॥ ११६ ॥

---

1 संप्राह्य 2 ककम्



सङ्कल्प्य च प्रसन्नात्मा सपुष्पांजलिहस्तवान् ।
प्रभामण्डलमध्यस्थं प्रद्योदिनदिशामुखम् ॥ ११७ ॥

सहस्रादित्यसङ्काशं रत्नकुण्डलभूषितम् ।
करण्डमकुटोपेतं शुद्धयज्ञोपवीतिनम् ॥ ११८ ॥

रक्तवर्णाम्बरालेपं माल्यादिभिरलंकृतम् ।
छन्नवीरकटीसूत्रपादनूपुरसंयुतम् ॥ ११९ ॥

मन्दस्मितं बालवेषं सुप्रसन्नं शुभेक्षणम् ।
यादृशं प्रतिमाकारं तादृशं भाव्य बुद्धिमान् । १२० ॥

स्कन्दस्य मूलमन्त्रेण स्कन्दं पद्मस्थमावहेत् ।
स्वागतं सद्यमन्त्रेण स्थापनं वामदेवतः ॥ १२१ ॥

अघोरेण निरोधन्तु सान्निध्यमीशमन्त्रतः ।
सम्मुखं पुरुषेणैव पाद्यमाचमनार्घ्यकम् ॥ १२२ ॥

गन्धपुष्पं हृदा दद्यात् धूपन्धूरसि मन्त्रतः ।
दीपं उद्दीप्यमन्त्रेण नैवेद्यश्चान्नसूक्तकम् ॥ १२३ ॥

ताम्बूलं हृदयेनैव तेनैवाचमनन्ददेत् ।
पद्ममुद्रां षण्मुखोश्च नमस्कारान्प्रदर्शयेत् ॥ १२४ ॥

आवाह्य हृदयेनैव दिग्बन्धेदस्त्रमन्त्रतः ।
महावल्लीं देवसेनां श्यामरत्न समप्रभाम् ॥ १२५ ॥

सौम्यवक्त्रे पद्महस्ते वर्धन्यौ स्वस्वबीजतः ।
आवाह्य दक्षिणे वामे पद्ममुद्रां प्रदर्शयेत् ॥ १२६ ॥

परितश्चाष्टकुम्भांश्च पूर्वादिषु क्रमान्न्यसेत् ।
जयन्ताख्यमग्निशिखं कृत्तिका पुत्रसंज्ञकम् ॥ १२७ ॥

अनलं तु भूतपतिं सेनान्यं गुहसंज्ञकम् ।
हेमशूलं विशालाक्षं शक्तिवज्रधरं न्यसेत् ॥ २२८ ॥]

स्वनामाद्यक्षरैश्चैव नमोऽन्तैर्नामभिः[1] क्रमात् ।
शक्तिञ्चैवाक्षमालाञ्च कमण्डलुधनुर्धरान् ॥ १२९ ॥

वज्रं कृत्वा सुवर्णेन स्कन्दकुम्भे न्यसेत्पृथक् ।
स्वर्णेन रचितं पद्मं वर्धन्योर्विन्यसेत्ततः ॥ १३० ॥

रजतात्स्वस्तिकं कृत्वा कुम्भेष्वष्टसु विन्यसेत् ।
नैवेद्यञ्चैव पानीयं ताम्बूलञ्च हृदा ददेत् ॥ १३१ ॥

आत्मविद्या शिवाख्यञ्च जानुकण्ठशिरोऽवधि ।
तत्वत्रयं साधिपतिं मूर्तिमूर्तीश्वरान्न्यसेत् ॥ १३२ ॥

[2]मूर्तयः क्ष्मादयस्तत्र कार्तिकेयादिमूर्तिपाः ।
पञ्चैकचतुरस्त्रीणि पञ्चत्रिचतुरत्रयः ॥ १३३ ॥

अनेन विधिना कुम्भान् पूर्वाद्याशासु विन्यसेत् ।
सुवर्णं सर्वकुम्भेषु न्यस्तव्यं फलकांक्षिभिः ॥ १३४ ॥

1 बारान् 2 मूर्तिपः



पश्चिमद्वारबाह्यान्ते[1] नित्य[2]द्वारं समर्चयेत् ।
शान्तिभूतिबलारोग्यं चतुर्दिक्षु[3] सतोरणैः ॥ १३५ ॥

शान्तिं सुदेहं सुमुखमिन्द्रं पूर्वे समर्चयेत् ।
इन्द्राग्निमध्यमे भानुं वह्निकोणे हुताशनम् ॥ १३६ ॥

याम्ये विद्यां महावल्लीं ततः सेनापतिं यमम् ।
निर्ऋतिञ्च महाविष्णुं लक्ष्मीं निर्ऋतिगोचरे ॥ १३७ ॥

आप्ये निवृत्तिं शिखिनं गजं वरुणमस्त्रकम् ।
वायुं गणेशं [4]क्षेत्रज्ञं वायव्यां दिशि पूजयेत् ॥ १३८ ॥

प्रतिष्ठां देवसेनाञ्च सुमित्रं सोममुत्तरे ।
ईशानञ्च चतुर्वक्त्रं गुरुमीशानगोचरे ॥ १३९ ॥

तत्तत्स्वनाममन्त्रेण सर्वकुम्भान्समर्चयेत् ।
दशायुधानि संपूज्य हुंफडन्तं स्वनामतः ॥ १४० ॥

भो भो शक्र त्वया स्वस्यां दिशि विघ्नप्रशान्तये ।
सावधानेन यागान्तं यावत्स्थेयं गुहाज्ञया ॥ १४१ ॥

इत्येवं दशलोकेशान् प्रत्येकं श्रावयेद्गुरुः ।
दर्पणं पूर्णकुम्भञ्च मयूरं युग्मचामरम् ॥ १४२ ॥

श्रीवत्सं स्वस्तिकं शङ्खं दीपो देवाष्टमङ्गलम् ।
तेषु संपूजयेन्मन्त्री गङ्गाद्यष्टनदीः क्रमात् ॥ १४३ ॥

1 स्थो 2 वद्द्वारमर्चयेत् 3 क तोरणे यजेत् 4 क्षेत्रेशं

गङ्गाञ्च यमुनाञ्चैव नर्मदाञ्च सरस्वतीम् ।
सिन्धुं गोदावरीञ्चैव कावेरीं कुमरीं ततः ॥ १४४ ॥

तृणबन्धांश्च कम्पाञ्च वंशे स्तम्भे यथाक्रमम् ।
पृथिव्यादीनि तत्त्वानि पूजयेन्मण्डपे सुधीः ॥ १४५ ॥

मण्डपञ्च गुहव्याप्तं निर्विघ्नं भाव्य तत्परः ।
ऋग्वेदं पूर्वदिग्भागे यजुर्वेदन्तु दक्षिणे ॥ १४६ ॥

पश्चिमे सामवेदञ्च उदीच्यां दिश्यथर्वणम् ।
मालामन्त्रं स्कन्दसूक्तं गायत्रीं पञ्चशान्तिकम् ॥ १४७ ॥

आग्नेयादिषु कोणेषु जपित्वा मन्त्रवित्तमैः ।
आचार्यो मूर्तिपैस्सार्धं होमकर्म समाचरेत् ॥ १४८ ॥

कार्तिकेयो विशाखश्च गुहश्चैवासुरान्तकः ।
सेनानीः षण्मुखश्चैव मयूरवाहनस्तथा ॥ १४९ ॥

शक्तिपाणिरिति ख्याता एते चैवाष्टमूर्तिपाः ।
स्वनामाद्यक्षरेणैव कुण्डानां दक्षिणे यजेत् ॥ १५० ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तवर्त्मना ।
प्रधाने स्कन्दमावाह्य सब्रह्माङ्गं सलोचनम् ॥ १५१ ॥

तत्वत्रयं साधिपतिं मूर्तिमूर्तीश्वरान्वितम् ।
महावल्लीं देवसेनां सहितं संप्रपूजयेत् ॥ १५२ ॥

1 आचरेत्



पालाशखदिराश्वत्थवटबिल्वशमी तथा ।
प्लक्षः पश्चादपामार्गमुदुम्बरमितीरितम् ॥ १५३ ॥

प्रधानाद्यग्निकुण्डानां समिधो नव कीर्तिताः ।
सार्द्रा सत्वक्सपलाशाश्च सप्ररोहा अनिन्दिताः ॥ १५४ ॥

कनिष्ठांगुलनाहं स्याद्द्वादशांगुलमायताः ।
समिदाज्य चरु लाजं यवं [1]सक्तुश्च सर्षपम् ॥ १५५ ॥

तिलं मुद्गं गुलं [2]वेणु मधु क्षीरं पुनर्दधि ।
[3]द्रव्यं [4]त्रयोदशं प्रोक्तं होमयेत्तु यथाक्रमम् ॥ १५६ ॥

मूल[5]मन्त्रं षडङ्गैश्च समिधादीनि मन्त्रवित् ।
शतमर्धं तदर्धं वा मूलमन्त्रेण देशिकः ॥ १५७ ॥

ब्रह्माङ्गानां दशांशं स्यान्मूलार्धं मूर्तिपाहुतिः ।
मूर्तिपा जुहुयात् दिक्षु [6]सर्वांश्च स्वस्वमन्त्रतः ॥ १५८ ॥

स्कन्दगायत्रिमन्त्रेण प्रतिकुण्डं विशेषतः ।
शतमर्धं तदर्धं वा सर्पिषा जुहुयात्सुधीः ॥ १५९ ॥

द्रव्यान्ते व्याहृतीर्हुत्वा स्पृष्ट्वा स्पृष्ट्वा च बेरकम् ।
स्कन्दसूक्तै[7]श्च मन्त्रैश्च षड्भिः षड्वारमाज्यतः ॥ १६० ॥

1 वेणुं 2 चैव 3 द्रव्याणि 4 द्वादशैतानि 5 ब्रह्म
6 विदिक्षु 7 स्तस्य

जगद्भुवादिषण्मूर्तिमन्त्रैश्चैव हुनेत्सुधीः ।
अयंकुमारमन्त्रेण होमयेत् षोडशाहुतीः ॥ १६१ ॥

मालामन्त्रेण मन्त्रज्ञो जुहुयाच्छिरसाहुतिम् ।
[1]कृत्वैवं सर्वकुण्डेषु [2]कुर्यात्तु शिरसा हुनेत् ॥ १६२ ॥

सर्वद्रव्यसमायुक्तं हव्यवाहेन होमयेत् ।
[3]दृढद्रव्यं [4]करेणैव द्रवद्रव्यं स्रुवेण च ॥ १६३ ॥

बीजानि कर्षयेच्चैव लाजमंजलिना हुनेत्
उपोष्यतो गुरुस्त्वैवं रात्रिशेषं व्यपोह्य च ॥ १६४ ॥

मूर्तिपैस्सह संस्नात्वा नित्यकर्मकृतो गुरुः ।
सोष्णीषस्सोत्तरीयश्च हैमपञ्चाङ्गभूषणः ॥ १६५ ॥

शिवद्विजकुलोद्भूतः शिवशास्त्रविशारदः ।
सामान्यार्घ्यं विशेषार्घ्यं पञ्चगव्यानि साधयेत् ॥ १६६ ॥

पूर्ववद्द्वारपूजादि[2]दिग्देवांस्तु समर्चयेत् ।
आसनावरणानान्तु हुत्वाऽप्येकैकमाहुतिम् ॥ १६७ ॥

[स्कन्दमूलेन मन्त्रेण शतमष्टोत्तरं हुनेत् ।
जयादिरभ्याधानञ्चराष्ट्रभृच्च हुनेत्क्रमात् ।

प्रायश्चित्तमघोरेण होमयेत् षोडशाहुतिः ।
पूर्णाहुतिं ततः कृत्वा धूपदीपादिकान्ददेत् ॥

1 हु 2 पूर्णान्तु 3 समिधो 4 मुष्टिना हुत्वा



प्रार्थयित्वा नमस्कृत्वा बलिमन्तर्बलिं क्षिपेत् ।
बहिर्बलिं ततः कुर्यात् ज्ञानखड्गधरो गुरुः ॥]

पूर्णाहुतिं ततः कृत्वा ज्ञानखड्गधरो गुरुः ।
देशिकं तोषयेद्देवं संनिधीकरणाय च ॥ १६८ ॥

आचार्यं पूजयेत्कर्ता गोभूमिधनकाञ्चनैः ।
अधमं दशनिष्कन्तु द्विगुणं मध्यमं स्मृतम् ॥ १६९ ॥

उत्तमं त्रिगुणं ज्ञेयं देशिकस्य तु दक्षिणा ।
तस्यैवं पञ्चमांशैकं मूर्तिपानान्तु दक्षिणा ॥ १७० ॥

जापकान्वास्तुहोतारं तदर्धेनैव तोषयेत् ।
दैवज्ञं शिल्पिनञ्चैव तोषयेन्मूर्तिधारिवत् ॥ १७१ ॥

भक्तानां परिचाराणां यथाशक्त्या तु दक्षिणाम् ।
शयनाद्बिम्बमुत्थाप्य स्नानवेद्युपरि न्यसेत् ॥ १७२ ॥

घृतं शिरोर्पणं कुर्यात् हेमदूर्वांकुराक्षतैः ।
पञ्चगव्येन संस्नाप्य पश्चात्पञ्चामृतादिभिः ॥ १७३ ॥

रक्ततोयैस्स्वर्णतोयैः [1]शुभोदैर्गन्धतोयकैः ।
हिरण्यवर्णा ऋग्भिश्च पवमानैश्च मन्त्रतः ॥ १७४ ॥

नमकञ्चमकञ्चैव स्कन्दसूक्तञ्च शान्तिकम् ।
जपित्वा स्नापयेत्स्कन्दं गन्धपुष्पादिनार्चयेत् ॥ १७५ ॥

1 शुद्धो

अर्घ्यपाणिर्गुरुः पश्चात्प्रविशेद्गर्भगेहकम् ।
मानुषे दैविके वाऽपि प्राग्वत्संस्कारसंयुते ॥ १७६ ॥

कुशलो हृदयेनैव रत्नौषधिविगर्हितम् ।
विन्यस्य सुदृढं कृत्वा षण्मुखस्यासनाय च ॥ १७७ ॥

सर्वातोद्यसमायुक्तं वेदघोषसमन्वितम् ।
अर्घ्यपाणिः पुरो[1]गत्वाऽप्याचार्यो मूर्तिपैस्सह ॥ १७८ ॥

सदारपुत्रास्सभ्राता यजमानो व्रजेदनु ।
हर्म्यं प्रदक्षिणं कृत्वा गर्भगेहे गुहं नयेत् ॥ १७९ ॥

सुलग्ने सुमुहूर्ते च यथा द्वारं तथा मुखम् ।
अथ ब्रह्म[2]शिखोपेतं स्थापयेच्छरसंभवम् ॥ १८० ॥

दक्षिणे तु महावल्लीं देवसेनां तथोत्तरे ।
अष्टबन्धं ततः कुर्याद्यथा दृढतरं तथा ॥ १८१ ॥

सर्वातोद्यसमायुक्तं कुम्भानुद्धृत्य देशिकः ।
मूर्तिपैश्शिरसावाह्य कुर्याद्धामप्रदक्षिणम् ॥ १८२ ॥

देवस्याग्रे क्रमेणैव स्थण्डिलोपरि विन्ययेत् ।
प्रच्छन्नपटमानीय भक्त्या परमया [3]पुनः ॥ १८३ ॥

आचार्यस्सुप्रसन्नात्मा [4]दृढचित्तो जितेन्द्रियः ।
मूर्धादिकल्पितस्थानेष्वादिवर्णांल्लिखेत्क्रमात् ॥ १८४ ॥

1 गच्छेत्  2 शिलोपेतं  3 युतः  4 सैक



सैकत्रिंशत्कलान्यासं मकुटादिक्रमान्न्यसेत् ।
जगद्भुवादिषण्मन्त्रैर्वक्त्रस्थानेषु विन्यसेत् ॥ १८५ ॥

शिरोवदनहृन्नाभिगुह्यांघ्रिषु च तान् पुनः ।
मातृकां बिन्दुसहितां देव्योरङ्गे क्रमान्न्यसेत् ॥ १८६ ॥

मुहूर्तं वेक्ष्य दैवज्ञो गुरवे संनिवेदयेत् ।
प्राणात्प्रकृतियोगन्तु ज्ञात्वा स्थापनमा[1]चरेत् ॥ १८७ ॥

यथोत्कृष्ट क्रमात् ज्ञात्वा तथा संस्थापयेद्गुरुः ।
कुम्भाद्बीजं समादाय बेरस्य हृदि विन्यसेत् ॥ १८८ ॥

ब्रह्माङ्गानि सबीजानि मूर्धादिक्रमशो न्यसेत् ।
मुकुलीं पद्ममुद्राञ्च षण्मुखीं धेनुमुद्रिकाम् ॥ १८९ ॥

शक्तिमुद्रां नमस्कारान्दर्शयेत्तु गुहाय वै ।
स्कन्दकुम्भस्थतोयेन स्कन्दं संस्नापयेद्गुरुः ॥ १९० ॥

वर्धन्योर्बीजमादाय देव्योश्चुचुकमध्यमे ।
पूर्वं सव्ये महावल्लीं देवसेनाञ्च वामके ॥ १९१ ॥

विन्यस्य योनिमुद्राञ्च पद्माख्यं दर्शयेत्पृथक् ।
तत्तत्कुम्भस्थतोयेन [2]स्नापयेच्छक्तिकाद्वयम् ॥ १९२ ॥

स्थापने शक्तिरहिते वर्धनीद्वयबीजकम् ।
पीठे पार्श्वद्वये विद्वान् स्थाप्य तत्राभिषेचयेत् ॥ १९३ ॥

1 रभेत्  2 स्थाप

तत्तत्कुम्भस्थतोयेन स्नापयच्छक्तिकाद्वयम् ॥ १९२॥
स्थापने शक्तिरहिते वर्धनीद्वयबीजकम् ।
पीठे पार्श्वद्वये विद्वान् स्थाप्य तत्राभिषेचयेत् ॥ १९३॥
जयन्तादिघटाद्भिस्तु पीठेसंस्थापयेत्क्रमात् ।
गन्धतोयेनसंस्नाप्य गव्यैः पञ्चामृतैःपुनः ॥ १९४॥
स्कन्दसूक्तेनमन्त्रेण जपेत्षोडशवारकम् ।
शुद्धांभसातुसंस्नाप्य मूलब्रह्मषडङ्गकैः ॥ १९५॥
पाद्यंवैसद्यमन्त्रेण वामेनाचमनान्ददेत् ।
अर्घ्यंवैघोरमन्त्रेण वस्त्रंहृदयमन्त्रतः ॥ १९६॥
गन्धन्तत्पुरुषेणैव पुष्पमीशानमन्त्रतः ।
भूषणंकवचेनैव धूपदीपौहृदाददेत् ॥ १९७॥
अभ्यर्च्याधारशक्त्यादि पञ्चवरणसंयुतम् ।
रक्तांबरैरक्तमाल्यै रक्तगन्धैश्चभूषयेत् ॥१९८॥
पञ्चवर्णहविर्दद्यादन्नसूक्तेनमन्त्रतः ।
तांबूलाद्युपचाराणि सर्वाणिसहृदाददेत्॥ १९९॥
स्वसूत्रान्देवदेवीनामुद्वाहंकर्मकारयेत् ।
चतुर्थेदिवसेविप्रे शेषहोमंसमाचरेत् ॥ २००॥
भूदानंदेशिकायैव दद्यात् कर्थायथाबलम् ।
ब्राह्मणान् भोजयेत् पश्चात् दीनानन्धांश्चभुजयेत्॥ २०१॥
तदन्तेस्नपनङ्कुर्यात् वित्तशाठ्यन्न कारयेत् ।
एवंयःकुरुतेमर्त्यस्सपुण्याङ्गतिमाप्नुयात् ॥ २०२॥
आयुःपुत्रकलत्रञ्च वसुविद्यायशोबलम् ।
सौभाग्यंमहतीलक्ष्मीमरोगत्वमनाकुलम् ॥ २०३॥
इहैवलब्ध्वाभूपृष्ठे भुक्त्वाभोगान्यथेप्सितान् ।
कर्ताकारयिताचैव कौमारंलोकमाप्नुयात् ॥ २०४॥
फलंस्कन्दप्रतिष्ठायास्संक्षेपात् शृणुसुव्रत ।
बेरसंवेशवेद्यान्तु यावन्तः वरमाणवः ॥ २०५॥
तावद्वर्षसहस्राणिस्कन्दलोकेमहीयते । २०५॥ 1/2
इत्यचलबेर प्रतिष्ठाविधिष्षड्विंशति पटलः
अथचलबेरप्रतिष्ठाविधिः
चलबेरप्रतिष्ठाञ्च वक्ष्येऽहंश्रृणुकौशिक ।
भुक्तिमुक्तिप्रदंनृणां सर्वकामार्थसाधनम् ॥ १
बालवृद्धिकरंसर्वशत्रुक्षयकरंशुभम् ।
सर्वकामदमान्यत्किं कुमारस्थापनादृते ॥ २॥
मृगादिमासषट्केतु विकुंभेषुशुभावहम् ।
अयनेचोत्तरेश्रेष्ठे दक्षिणेस्यात्ज्वरान्वितम् ॥ ३॥

मार्गशीर्षकमाघौ द्वौ वर्जयेत्तु प्रयत्नतः ।
जीवदृष्टियुते कुम्भे चलस्थापनमुत्तमम् ॥ ४ ॥

प्रशस्तपक्षनक्षत्रे स्थापनं सम्यगाचरेत् ।
प्रतिमां कारयेद्विद्वान् प्रतिमालक्षणोक्तवत् ॥ ५ ॥

गजवल्लीसमायुक्तं प्रतिपश्चोत्सवं तथा ।
शिबिका बलिबेरञ्च स्नपनोत्सव कौतुकम् ॥ ६ ॥

मूर्तिपञ्चविधानेन तत्तन्मूर्तिस्वभावकम् ।
शक्त्येकञ्च समायुक्तं स्नपनं बलिकौतुकम् ॥ ७ ॥

शक्तित्रयसमोपेतमुत्सवं मुनिपुङ्गव ।
शक्तिं विनास्त्रशिबिका पञ्चबेरविधिक्रमम् ॥ ८ ॥

अंकुरानर्पयेद्विद्वान् पूर्वोक्तविधिना मुने ।
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् ॥ ९ ॥

भूतादिनवहस्तान्तं विस्तारं गुरुहस्ततः ।
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भकेन वा ॥ १० ॥

पंक्तितालसमुत्सेधं पंक्तित्रयसमायुतम् ।
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥ ११ ॥

मङ्गला[1]कारसंयुक्तं मङ्गलांकुरशोभितम् ।
विधानध्वजसंयुक्तं दर्भमाला[2]सुशोभितम् ॥ १२ ॥

1 इक 2 भिरावृतम्



गात्रवेष्टनसंयुक्तं फलपल्लवशोभितम् ।
एकाशीतिपदं कृत्वा मध्यवेदिं नवांशतः ।
कुण्डानि परितः कृत्वा महादिक्षु विदिक्षु च ॥ १३ ॥

दिशासु चतुरश्राणि षट्कोणानि विदिक्षु च ।
अथवा विदिशास्वत्र वृत्तानि नलिनानि वा ॥ १४ ॥

षडश्रन्तु प्रधानं स्यान्मध्ये शांकरवज्रिणोः ।
सर्वकुण्डं षडश्रं वा नवकुण्डविधौ मता ॥ १५ ॥

चतुरश्रं चतुर्दिक्षु प्रधानन्तु षडश्रकम् ।
पञ्चकुण्डविधिः प्रोक्तं त्रिमेखलसमायुतम् ॥ १६ ॥

नाभियोनिसमायुक्तं सर्वलक्षणसंयुतम् ।
मण्डपस्योत्तरे भागे स्नानवेदिं प्रकल्पयेत् ॥ १७ ॥

तत्पीठतारद्विगुणं षोडशांगुलमुच्छ्रयम् ।
नालावटसमायुक्तं जलमार्गसमायुतम् ॥ १८ ॥

बाहुमात्रायतात्खातमवटं तस्य वामतः ।
गोमयालेपनं कृत्वा रजांसि विनिपातयेत् ॥ १९ ॥

माणिक्कं पुष्परागञ्च वैडूर्यं नीलमेव च ।
गोमेदकं मौक्तिकञ्च प्रवालं स्फटिकं तथा ॥ २० ॥

इन्द्रादीशानपर्यन्तं विन्यसेत्स्वस्वमन्त्रतः ।
बेरं तस्योपरि न्यस्त्वा सुस्निग्धं सुदृढं भवेत् ॥ २१ ॥

देव्योः पीठेऽष्टकोष्टेषु हेमाब्जानि न्यसेद्धृदा ।
सर्वालङ्कारसंयुक्ते मण्डपे स्थण्डिलोपरि ॥ २२ ॥

नयनोन्मीलनं कुर्यात् नेत्रयुग्मायुते दिने ।
हेमसूचिकया शिल्पी पक्ष्मरेखां समालिखेत् ॥ २३ ॥

कृष्णमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत् ।
[1]उत्तरे स्थण्डिले बेरं स्थाप्य शिल्पि विसर्जयेत् ॥ २४ ॥

नेत्रमन्त्रमनुस्मृत्य हेमसूच्या गुरुर्लिखेत् ।
पुण्याहं वाचयित्वाऽथ प्रोक्षयेदस्त्रमन्त्रतः ॥ २५ ॥

अभितः कलशानष्टौ स्थाप्येन्द्राद्याः समर्चयेत् ।
तर्जनीमध्यमाभ्याञ्च [2]सर्ववर्णौघसंयुतम् ॥ २६ ॥

सूर्यसोमाधिपाभ्याञ्च नेत्रयोः संस्पृशेद्गुरुः ।
सौवर्णदूर्वया नेत्रं मध्वाज्याभ्यान्तु तर्पयेत् ॥

मधुवाता ऋतायेति मधुना तर्पयेद्गुरुः ।
घृतं मिमिक्षेति मन्त्रेण तर्पयेत्तु घृतेन च ॥ २८ ॥

सौवर्णं रजतेनैव पात्रं मध्वाज्ययोर्मतम् ।
गौर्धेनुभावमन्त्रेण सवत्सां गां प्रदर्शयेत् ॥ २९ ॥

ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान् दर्शयेद्गुरुः ।
प्रच्छन्नपटमावर्ज्य जनान्सर्वान् प्रदर्शयेत् ॥ ३० ॥

1 इतरे 2 सुवर्णनख



पञ्चगव्येन संस्नाप्य पञ्चब्रह्मषडङ्गकैः ।
अष्टमृत्सलिलेनैव स्नापयेत्तु षडक्षरैः ॥ ३१ ॥

स्नापयेत्कलशाद्भिस्तु स्कन्दसूक्तेन मन्त्रतः ।
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु ॥ ३२ ॥

सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम् ।
छत्रचामरसंयुक्तं नानाभक्तजनैर्युतम् ॥ ३३ ॥

नानादीपसमायुक्तं विप्रसंघसमायुतम् ।
रथे वा शिबिकायां वा कुर्याद् ग्रामप्रदक्षिणम् ॥ ३४ ॥

जलतीरं समासाद्य शुद्धिं कृत्वा भुवस्थलम् ।
तस्मिन् बेरं [1]समानीय वस्त्रादीनि व्यपोह्य च ॥ ३५ ॥

नववस्त्रेण संवेष्ट्य बध्नीयाल्लम्बकूर्चकम् ।
चतुर्गात्रयुतं कृत्वा जलमध्ये [2]प्रपान्वितम् ॥ ३६ ॥

तन्मध्ये विन्यसेत्पीठं चतुर्गात्रयुतं दृढम् ।
तदूर्ध्वे कण्ठदघ्ने वा नाभिदघ्ने [3]ऽधिवासयेत् ॥ ३७ ॥

अष्टकुम्भान् न्यसेद्दिक्षु दिग्देवान्संप्रपूजयेत् ।
चतुर्वेदं चतुर्दिक्षु कुर्यादध्ययनं द्विजैः ॥ ३८ ॥

पुण्याहं वाचयित्वाऽथ प्रोक्षयेद्यागमण्डपम् ।
वास्तुहोमं ततः कुर्यात्समीरिणपदे गुरुः ॥ ३९ ॥

1 समादाय 2 शुभां 3 अथवा शयेत्

पर्यग्निकरणं तेन वह्निनात्रैव कारयेत् ।
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः ॥ ४० ॥

तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ।
तन्मध्ये नलिनं लिख्य साष्टपत्रं सकर्णिकम् ॥ ४१ ॥

दर्भैर्लाजैश्च पुष्पैश्च परिस्तीर्य यथाविधि ।
शयनं कल्पयेत्तत्र चर्मजाद्यैरनुक्रमात् ॥ ४२ ॥

जलादुत्तीर्य देवेशं स्नानवेद्युपरि न्यसेत् ।
बिम्बशुद्धिं ततः कृत्वा त्वलंकृत्य यथाविधि ॥ ४३ ॥

आलयन्तु प्रविश्याथ पुनः पुण्याहमाचरेत् ।
[ व्यपोह्य वस्त्रकूर्चादीन् मृज्जलैरभिषेचयेत् ]
स्कन्दसूक्तं जपित्वाऽथ पवमानमुदीरयन् ॥ ४४ ॥

अयं कुमारमन्त्रेण मालामन्त्रेण देशिकः ।
शुद्धाम्बुना तु संस्नाप्य रक्तवस्त्रेण वेष्टयेत् ॥ ४५ ॥

गन्धपुष्पादिभिः पूज्य हृदयेन तु मन्त्रतः ।
कौतुकं बन्धयेत्तत्र स्कन्दशक्ति गुरुस्तथा ॥ ४६ ॥

पद्ममुद्रां नमस्कारां षण्मुखीं दर्शयेत्सुधीः ।
नैवेद्यं दापयित्वाऽथ ताम्बूलं दापयेद् गुरुः ॥ ४७ ॥

मण्डपं विकिरान् क्षिप्त्वा प्रोक्षयेदर्घ्यवारिणा ।
शयने शाययेद्बिम्बं प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥ ४८ ॥



शक्तिद्वय[1]ञ्च पार्श्वे तु शाययित्वा यथाविधि ।
वस्त्रेणाच्छादयेत्स्कन्दं शक्तिद्वयं पृथक् पृथक् ॥ ४९ ॥

अयं कुमारमन्त्रेण गन्धपुष्पादिनार्चयेत् ।
सर्वलक्षणसंयुक्तान् कुम्भान् संगृह्य देशिकः ॥ ५० ॥

ससूत्रानुदकोपेतान् सकूर्चान्सापिधानकान् ।
सवस्त्रान्पल्लवोपेतान् द्रोणतोयेन पूरितान् ॥ ५१ ॥

शिरोभागेषु बेराणां कुम्भञ्च वर्धनीद्वयम् ।
पञ्चरत्नं प्रधाने तु वर्धन्योर्हाटकाम्बुजम् ॥ ५२ ॥

[2]सर्वत्र सर्वकुम्भेषु विन्यसेत्तु विचक्षणः ।
यादृशं प्रतिमाकारं तादृशं भाव्य बुद्धिमान् ॥ ५३ ॥

दाडिमीपुष्पसंकाशं करण्डमकुटोज्वलम् ।
छन्नचीरोपवीतोद्यत्कटिसूत्रैरलंकृतम् ॥ ५४ ॥

दिव्यगन्धानुलिप्ताङ्गं दिव्यमालाविभूषितम् ।
रक्ताम्बरधरं देवं पादनूपुरसंयुतम् ॥ ५५ ॥

एवं ध्यात्वा स्कन्दकुम्भे तन्मूलेन समावहेत् ।
सर्वोपचारसंयुक्तमासनावरणैर्यजेत् ॥ ५६ ॥

---

1 द्वि   2 सुवर्णं

महावल्लीं देवसेनां श्यामरक्तसमप्रभे ।
सौम्यवक्त्रे पद्महस्ते वर्धन्योस्स्वस्वबीजकम् ॥ ५७ ॥

परितश्चाष्टकुम्भांश्च पूर्वाद्याशासु विन्यसेत् ।
जयन्ताख्यमग्निशिखं कृत्तिकापुत्रसंज्ञकम् ॥ ५८ ॥

अनन्तरं भूतपतिं सेनान्यं गुहसंज्ञकम् ।
हेमशूलं विशालाक्षं तत्तन्नामभिरर्चयेत् ॥ ५९ ॥

नैवेद्यं चैव पानीयं ताम्बूलञ्च हृदा ददेत् ।
पञ्चैकचतुरस्त्रीणि पञ्चत्रिचतुरस्त्रयः ॥ ६० ॥

अनेन विधिना कुम्भान् पूर्वाद्याशासु विन्यसेत् ।
पूर्वोक्तेन विधानेन सर्वकुम्भान् समर्चयेत् ॥ ६१ ॥

दशायुधानि संस्थाप्य स्वस्वनामभिरर्चयेत् ।
दर्पणं पूर्णकुम्भञ्च मयूरं [1]युग्मचामरम् ॥ ६२ ॥

श्रीवत्सं स्वस्तिकं शंखं दीपो देवोऽष्टमङ्गलम् ।
उपवेद्युपरिन्यस्त्वा गङ्गाद्याः संप्रपूजयेत् ॥ ६३ ॥

तृणबन्धाश्च कम्पाश्च वंशे स्तम्भे यथाक्रमम् ।
पृथिव्यादीनि तत्त्वानि पूजयेन्मण्डपे सुधीः ॥ ६४ ॥

मण्डपञ्च गुहव्याप्तं निर्विघ्नं भाव्य तत्परम् ।
ऋग्वेदं पूर्वदिग्भागे यजुर्वेदन्तु दक्षिणे ॥ ६५ ॥

1 चामरद्वयम्



पश्चिमे सामवेदञ्च उदीच्यां दिश्यथर्वणम् ।
मालामन्त्रं स्कन्दसूक्तं गायत्रीं पञ्चशान्तिकम् ॥ ६६ ॥

आग्नेयादिषु कोणेषु जपित्वा मन्त्रवित्तमैः ।
आचार्यो मूर्तिपैस्सार्धं होमकर्म समारभेत् ॥ ६७ ॥

कार्तिकेयो विशाखश्च गुहश्चैव सुरान्तकः ।
सेनानीः षण्मुखश्चैव मयूरवाहनस्तथा ॥ ६८ ॥

शक्तिपाणिरिति ख्याता एते वै चाष्ट[1] मूर्तयः ।
स्वनामाद्यक्षरेणैव कुण्डानां दक्षिणे यजेत् ॥ ६९ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
पालाशखादिराश्वत्थ वटबिल्वाश्शमी तथा ॥ ७० ॥

प्लक्षः पश्चादपामार्ग औदुम्बर इतीरितः ।
प्राधान्यादग्निकुण्डानां समिधो नव कीर्तिताः ॥ ७१ ॥

समिदाज्यचरुं लाजं यवं [2]सक्तुञ्च सर्षपम् ।
तिलं मुद्गं गुलं [3]वेणुं मधुक्षीरं पुनर्दधि ॥ ७२ ॥

द्रव्याणि द्वादशैतानि होमयेत्तु यथा[4]क्रमम् ।
मूलब्रह्मषडंगैश्च स्कन्दगायत्रिमन्त्रतः ॥ ७३ ॥

शतमर्धं तदर्धं वा प्रत्येकन्तु हुनेत्क्रमात् ।
[5]माते कुमारमन्त्रेण होमयेत्तु रसाहुतिः ॥ ७४ ॥

1 मूर्तिपाः 2 वेणुं 3 चैत्र 4 विधि 5 मालामन्त्रेण मन्त्रश्च

कृत्वैवं सर्वकुण्डेषु पूर्णान्तु शिरसा हुनेत् ।
सर्वद्रव्यसमायुक्तं हव्यवाहे[1]ति [2]षोडश ॥ ७५ ॥

मूलमन्त्रेण मन्त्रैश्च षडभिः षड्वारमाज्यतः ।
जगद्भुवेति षण्मूर्तिमन्त्रेणैव हुनेत्ततः ॥ ७६ ॥

अयं कुमारमन्त्रेण जुहुयादा[3]ज्यहोमकम् ।
उपोषितो गुरुः पश्चाद्रात्रिशेषं व्यपोह्य च ॥ ७७ ॥

मूर्तिपैस्सह[4]संस्नाप्य गुरुर्नियमतत्परः ।
पूर्ववद्द्वारपूजादि यागदेवान्समर्चयेत् ॥ ७८ ॥

आसनावरणानान्तु हुत्वाप्येकैकमाहुतिम् ।
स्कन्दमूलेन मन्त्रेण शतमष्टोत्तरं हुनेत् ॥ ७९ ॥

जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ।
प्रायश्चित्तमघोरेण होमयेत् षोडशाहुतिः ॥ ८० ॥

पूर्णाहुतिं ततः कृत्वा धूपदीपादिकान्ददेत्
प्रार्थयित्वा नमस्कुर्यात् बलिमन्त्रैर्बलिं क्षिपेत् ॥ ८१ ॥

बहिर्बलिं ततः कुर्यात् ज्ञानखड्गधरो गुरुः ।
आचार्यं पूजयेत्कर्ता वस्त्रहेमांगुलीयकैः ॥ ८२ ॥

देशिकं तोषयेद्देवं सन्निधीकरणाय च ।
उत्तमं दशनिष्कन्तु मध्यमं सप्तनिष्ककम् ॥ ८३ ॥

1 न 2 हामयेत् 3 षोडशाहुतिः 4 सा स्नात्वा



अधमं पञ्चनिष्कन्तु देशिकस्य तु दक्षिणा ।
तस्यैवं पञ्चमांशैकं मूर्तिपानान्तु दक्षिणा ॥ ८४ ॥

जापकं वास्तुहोतारं तदर्धेनैव तोषयेत् ।
दैवज्ञं शिल्पिनञ्चैव तोषयेन्मूर्तिधारिवत् ॥ ८५ ॥

भक्तानां परिचाराणां यथाशक्तिस्तु दक्षिणा ।
शयनाद्बिम्बमुत्थाप्य स्नानवेद्युपरिन्यसेत् ॥ ८६ ॥

मृज्जलेनैव संस्नाप्य पश्चात्पञ्चामृतादिभिः ।
रत्नोदकैः स्वर्णतोयैः शुद्धोदैर्गन्धतोयकैः ॥ ८७ ॥

नमकञ्चमकञ्चैव स्कन्दसूक्तञ्च शान्तिकम् ।
जपित्वा स्नापयेत् स्कन्दं गन्धपुष्पादिनार्चयेत् ॥ ८८ ॥

घृतं शिरोऽर्पणं कुर्याद्धेमदूर्वांकुराक्षतैः ।
कल्पितं मण्डपं सम्यगलंकृत्य विशेषतः ॥ ८९ ॥

सर्वातोद्यसमायुक्तं वेदघोषसमन्वितम् ।
अर्घ्यपाणिः पुरोगच्छेदाचार्यो मूर्तिपैः सह ॥ ९० ॥

सदारपुत्रः सभ्राता यजमानो व्रजेदनु ।
हर्म्यप्रदक्षिणं कृत्वा देवं मण्डपमानयेत् ॥ ९१ ॥

उक्तालंकारसंयुक्तान् कुम्भानुद्धृत्य देशिकः ।
मूर्तिपैश्शिरसावाह्य कुर्याद्ग्रामप्रदक्षिणम् । ९२ ॥

देवस्याग्रे क्रमेणैव स्थण्डिलोपरि विन्यसेत् ।
मूर्धादिकल्पिते स्थानेष्वादिवर्णा[1]न्न्यसेद्गुरुः ॥ ९३ ॥

जगद्भुवादिषण्मन्त्रं षडवक्त्रे विन्यसेद्बुधः ।
पञ्चब्रह्मषडङ्गानि तत्तत्स्थानेषु विन्यसेत् ॥ ९४ ॥

मातृकां बिन्दुसहितां देव्योरङ्गेषु विन्यसेत् ।
सैकत्रिंशत्कलान्यासं मकुटादिक्रमान्न्यसेत् ॥ ९५ ॥

मुहूर्तं वीक्ष्य दैवज्ञो गुरवे संनिवेदयेत् ।
प्राणात्प्रकृतियोगं तु ज्ञात्वा स्थापनमा[2]चरेत् ॥ ९६ ॥

यथोक्त[3]ष्टक्रमं ज्ञात्वा तथा संस्थापयेद्गुरुः ।
कुम्भाद्बीजं समादाय बेरस्य हृदि विन्यसेत् ॥ ९७ ॥

तत्कुम्भस्थजलेनैव स्कन्दं संस्नापयेत्ततः ।
वर्धन्योर्बीजमादाय देव्योश्चूचुकमध्यमे ॥ ९८ ॥

विन्यस्य [4]तु जलेनैव स्नापयेच्छक्तिकाद्वयम् ।
मुकुलीं पद्ममुद्रां च षण्मुखीं धेनुमुद्रिकाम् ॥ ९९ ॥

शक्तिमुद्रां नमस्कारां दर्शयेत्तु गुहाय वै ।
जयन्तादी[5]न्यथाभ्यर्च्य पीठे [6]संस्नापयेद्बुधः ॥ १०० ॥

---

1 लिखेत् 2 रमेत् 3 ष्टं कृतं 4 तत्
5 घटाद्भिस्तु 6 स्थापयेत्



गन्धतोयेन संस्नाप्य बिल्वाद्यैः शुद्धतोयकैः ।
अभ्यर्च्याधारशक्त्यादिपञ्चावरणसंयुतम् ॥ १०१ ॥

रक्ताम्बरै रक्तमाल्यै रक्तगन्धैश्च भूषयेत् ।
पञ्चावरणहविर्दद्यात् यथाविभवविस्तरम् ॥ १०२ ॥

ब्राह्मणान्भोजयेत्पश्चात् दीनानाथांश्च पूजयेत् ।
अन्ते महोत्सवं कुर्यात् वित्तशाठ्यं न कारयेत् ॥ १०३ ॥

एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।
फलं स्कन्दप्रतिष्ठायाः संक्षेपाच्छृणु कौशिक ॥ १०४ ॥

बेरसंवेशवेद्यास्तु यावन्तः परमाणवः ।
तावद्वर्षसहस्राणि स्कन्दलोके महीयते ॥ १०५ ॥

इति श्रीकुमारतन्त्रे चलबेरप्रतिष्ठाविधिर्नाम सप्तविंशः पटलः

---

## अष्टाविंशः पटलः

अथ शक्त्यस्त्रस्थापनविधिः

अतः परं प्रवक्ष्यामि शक्त्यस्त्रस्थापनं शृणु ।
असुराणां विनाशाय सुराणां रक्षणाय च ॥ १ ॥

सर्वलोकहितार्थाय सर्वरक्षाकराय च ।
आदिशक्तेः समुद्भूतं शक्त्यस्त्रं विश्ववन्दितम् ॥ २ ॥

पत्रत्रयं विजानीयादिच्छाज्ञानक्रियात्मकम् ।
इच्छाशक्तिरूर्ध्वपत्रं ज्ञानशक्तिस्तु मध्यमम् ॥ ३ ॥

अध:पत्रं क्रियाशक्तिरूपं शक्त्यायुधस्य च ।
त्रयो गुणास्त्रयो देवास्त्रितत्त्वं च त्रयोऽग्नय: ॥ ४ ॥

त्रयो वेदा वसन्त्यत्र शक्तिपत्रत्रये द्विज ।
शक्तित्रयं कथं राज्ञां भवेच्छक्त्यर्चनं विना ॥ ५ ॥

सर्वदेवै: स्थितं साक्षात् सर्वदेवात्मकं परम् ।
सर्वे देवा: प्रियं यान्ति शक्त्यायुधसमर्चनात् ॥ ६ ॥

तस्मात्सर्वप्रयत्नेन शक्तिं संस्थाप्य पूजयेत् ।
स्वर्णराजतताम्रैर्वाऽप्यायसेन[1] शिलाऽपि वा ॥ ७ ॥

गर्भ[2]गेहसमोत्तुङ्गमुत्तमं समुदाहृतम् ।
अष्टभागैकहीनन्तु मध्यमं मुनिपुङ्गव ॥ ८ ॥

सप्तांशहीनमधमं रत्निमात्रादथोच्यते ।
उत्तमं वेदरत्नि स्यात् त्रिरत्निर्मध्यमं भवेत् ॥ ९ ॥

द्विरत्निमात्रमधमं शक्त्युत्सेधं [3]प्रचक्षते ।
[4]शक्तिं कृत्वा तदुत्सेधं पञ्चषणमात्रकावधि ॥ १० ॥

भागैकं योजयेद्धीमान् यावत्तस्य शुभोदयम् ।
लौकिकं चेति शक्त्यस्त्रं द्विविधं च महामुने ॥ ११ ॥

---

1 नापि कारयेत्   2 द्वार:   3 प्रशस्यते   4 ज्ञातं



भूपालवास्तुकर्तॄणामानुकूल्यन्तु यौगिकम् ।
एतेषामेव राष्ट्रस्य चानुकूल्यन्तु लौकिकम् ॥ १२ ॥
[यौगिकं लौकिकं चेति शक्त्यस्त्रं द्विविधं स्मृतम् ]

विमाने यौगिकं कुर्यात् यजेत्सर्वत्र लौकिकम् ।
आयामे भूतभागैकं पत्रायामं प्रशस्यते ॥ १३ ॥

पत्रायामं त्रिधाभज्य पत्रत्रयं [1]प्रकल्पयेत् ।
आयामसदृशव्यासं द्वादशांशोनमेव वा ॥ १४ ॥

नवाष्टांशैकहीनं वा पत्राणि चतुरश्रकम् ।
पार्श्वे कोणानि कर्तव्यमग्रं तीक्ष्णं प्रकल्पयेत् ॥ १५ ॥

पत्रतारे दशांशैकं पत्रस्य घनमीरितम् ।
तद्घनार्धं च पार्श्वञ्च निशितं वा प्रकल्पयेत् ॥ १६ ॥

पत्रतारस्य पञ्चांशं संधितारं द्विजोत्तम ।
उपर्युपरि पत्राणि ऋज्वाकाराणि कल्पयेत् ॥ १७ ॥

मध्यपत्रे द्विपार्श्वे तु षडदलं पद्ममालिखेत् ।
अथवाष्टदलं वाऽपि चतुर्दलमथापि वा ॥ १८ ॥

पत्राणां पादमूले तु कुर्याद्वै कुण्डलीकृतम् ।
तस्याध: फलकां कुर्यात् पत्राणां [2]चापि मात्रत: ॥ १९ ॥

---

1 विकल्पनात्   2 अर्धं

तत्तारं नवधा भज्य व्योमांशं फलकायतम् ।
द्व्यंशेनाब्जन्तु तस्याधः कोणेऽप्यश्वत्थपत्रवत् ॥ २० ॥

कर्तव्या फलकांत्वेवं तदधः कल्पयेद्दलम् ।
फलकायास्तु विस्तारं विभजेत्तु [1]तथांशकम् ॥ २१ ॥

एकांशं दलविस्तारमुत्सेधं तत्समं भवेत् ।
फलकार्धं घटाकारमुत्सेधं स्यात्तदर्धकम् ॥ २२ ॥

तस्यार्धं कण्ठधारेण कुम्भं कुर्याद्द्विजोत्तम ।
पादोनकुम्भधारेण तस्याधस्तटिका भवेत् ॥ २३ ॥

घटवत्तटिकामानं तन्मानं युगभाजिते ।
[2]एकभागं ततः कुर्यात् तत्प्रमाणेन हीरिका ॥ २४ ॥

हीरिकाथ प्रकर्तव्यं मेषदण्डमिहोच्यते ।
तटिकायास्तु विस्तारं चतुर्भागं त्रिभागिकम् ॥ २५ ॥

दारुदण्डस्य विस्तारं तदर्धं लोहदण्डकम् ।
दण्डमूले तु पद्मं स्यात् विस्तारं फलकासमम् ॥ २६ ॥

तदर्धं मानमित्युक्तं तन्मा[3]नस्य गुहात्मके ।
एकांशं पट्टिका ज्ञेया शेषांशेन कुशेशयम् ॥ २७ ॥

वृत्तं वा चतुरश्रं वा कारयेत्तु कुशेशयम् ।
हीरिका सममानेन पद्मोर्ध्वे पट्टिकां सुधीः ॥ २८ ॥

1 दशां 2 भागान्तरं 3 नं गुणभाजिते



दण्डं सर्वत्र वृत्तं स्यात् ऋज्वाकारमनिन्दितम् ।
शूलयोग्येषु वृक्षेषु शक्तिदण्डं प्रगृह्य च ॥ २९ ॥

सर्वलक्षणसंयुक्तं शक्त्यायुधं प्रकल्पयेत् ।
एवं लक्षणमाख्यातं प्रतिष्ठां शृणु सुव्रत ॥ ३० ॥

उत्तरायणकाले तु शुक्लपक्षे शुभेदिने ।
प्रतिष्ठादिनपूर्वे तु कारयेदंकुरार्पणम् ॥ ३१ ॥

चक्षुरुन्मीलनं चोक्तं कुर्यात्कुम्भाभिषेचनम् ।
सर्वातोद्यसमायुक्तं सर्वालङ्कारसंयुतम् ॥ ३२ ॥

शक्त्यायुधमलंकृत्य कुर्याद्ग्रामप्रदक्षिणम् ।
जलमध्ये प्रपां कृत्वा चतुर[1]श्रसमन्विताम् ॥ ३३ ॥

शापयेत्तत्र शक्त्यस्त्रं फलकोपरि बुद्धिमान् ।
परितः कलशानष्टौ न्यस्त्वेन्द्रादीन्समर्चयेत् ॥ ३४ ॥

चतुर्वेदैश्चतुर्दिक्षु कुर्यादध्ययनं ततः ।
प्रासादस्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् ॥ ३५ ॥

षोडशस्तम्भसंयुक्तं चतुर्द्वारसमायुतम् ।
चतुस्तोरणसंयुक्तं दर्भमालाभिरावृतम् ॥ ३६ ॥

मण्डपं नवधा कृत्वा मध्यभागे तु वेदिकाम् ।
कुण्डानि परितः कुर्याद् दिशासु विदिशासु च ॥ ३७ ॥

1 गांत्र

त्र्यश्राणि च षडश्राणि कारयेल्लक्षणैः सह ।
ईशानशक्रयोर्मध्ये प्रधानन्तु षडश्रकम् ॥ ३८ ॥

नवकुण्डविधिः प्रोक्ता पञ्चकुण्डविधिं शृणु ।
त्र्यश्राणि च चतुर्दिक्षु प्रधानन्तु षडश्रकम् ॥ ३९ ॥

पश्चिमे चोत्तरे वाऽपि स्नानश्वभ्रं प्रकल्पयेत् ।
गोमयालेपनं कृत्वा रजांसि विनिपातयेत् ॥ ४० ॥

मण्डपं भूषयमतिमान् पुण्याहं वाचयेत्ततः ।
वास्तुहोमं ततः कुर्यात् पर्यग्निकरणं ततः ॥ ४१ ॥

वेद्यूर्ध्वे स्थण्डिलं कृत्वा [1]चाष्टद्रोणैश्च शालिभिः ।
तन्मध्ये नलिनं लिख्य साष्टपत्रं सकर्णिकम् ॥ ४२ ॥

तदूर्ध्वे शयनं कल्प्य चर्मजायैस्तुकनात् ।
जलादुत्तीर्य शक्त्यस्त्रं स्नान[2]वेद्योपरिन्यसेत् ॥ ४३ ॥

[वस्त्रं नीत्वास्त्रराजानां शुद्धिं कृत्वाष्टमृज्जलैः ।
पञ्चगव्येन संस्नाप्य स्कन्दसूक्तेन मन्त्रतः ॥

गन्धतोयैश्शुद्धतोयैश्शुद्धैरुद्धैरिति ब्रुवन् ।
रक्तवस्त्रेण संवेष्ट्य हृदा गन्धादिभिर्यजेत् ॥]

मध्योर्ध्वपत्रयोर्मध्ये कौतुकं बन्धयेद्धृदा ।
शयने शाययेच्छक्तिं प्राक्शिरश्चोर्ध्ववक्त्रतः ॥ ४४ ॥

1 तिलतण्डुल 2 श्वभ्रो



वचद्भुवेति मन्त्रेण गन्धपुष्पादिनार्चयेत् ।
सर्वलक्षणसंयुक्तान् कुम्भान् द्रोणादपूरितान् ॥ ४५ ॥

ससूत्रान् सापिधानांश्च सवस्त्रान्वारिपूरितान् ।
चतुर्दशघटान् गृह्य हाटकाब्जसमन्वितान् ॥ ४६ ॥

शक्तेर्दक्षिणपार्श्वे तु पूर्वदक्षिणपश्चिमे ।
शक्तेरुत्तरपार्श्वे तु [1]त्रीन् कुम्भान्विन्यसेत्ततः ॥ ४७ ॥

इन्द्राद्याशास्त्वष्टकुम्भानेवं वेद्योपरिन्यसेत् ।
दक्षिणस्थितकुम्भेषु पूर्वकुम्भे शिवं यजेत् ॥ ४८ ॥

विष्णुञ्च मध्यमे कुम्भे ब्रह्माणं पश्चिमे घटे ।
उत्तरस्थानकुम्भेषु स्कन्दं वै मध्यमे यजेत् ॥ ४९ ॥

पश्चिमे तु महावल्लीं देवसेनाञ्च पूर्वके ।
पार्वतीं पूर्वकुम्भे तु आग्नेय्यान्तु सरस्वतीम् ॥ ५० ॥

लक्ष्मीं दक्षिणकुम्भे तु नैऋत्यान्तु विनायकम् ।
शास्ता वारुणदिग्भागे वायव्यां दिशिभास्करम् ॥ ५१ ॥

[2]सोमे च भूमिदेवीं च ऐशान्यान्तु सुमित्रकम् ।
तत्तद्बीजानि विन्यस्य पञ्चमुद्रां प्रदर्शयेत् ॥ ५२ ॥

दिशास्वध्ययनं कुर्याच्चतुर्वेदैर्महामुने ।
स्थापको मूर्तिपैस्साधं ततो होमं [3]समाचरेत् ॥ ५३ ॥

1 तान् 2 भूमिमावाहयेत्सौम्ये 3 समारभेत्

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
अश्वत्थोदुम्बरप्लक्षवटाः पूर्वादिदिक्षु च ॥ ५४ ॥

शमीखादिरबिल्वांश्च मयूरांश्च विदिक्षु च ।
प्रधानस्य पलाशं स्यात् समिधः परिकीर्तिताः ॥ ५५ ॥

समिदाज्यचरूल्लाजान् सक्तुं चैव तिलं तथा ।
सर्षपं मुद्गमाषञ्च पयोदधिमधूनि च ॥ ५६ ॥

मूलब्रह्मषडंगैश्च होमयेत्तु क्रमेण तु ।
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ॥ ५७ ॥

द्रव्यान्ते व्याहृतिं कुर्यात् स्पृष्ट्वा शक्तेस्तु मस्तकम् ।
त्रियम्बकेन मन्त्रेण ब्रह्मजज्ञानमन्त्रतः ॥ ५८ ।

इदं विष्णिवति मन्त्रेण प्रत्येकं षोडशं हुनेत् ।
जगद्भुवेति मन्त्रेण तथैव मुनिसत्तम ॥ ५९ ॥

महावल्लीं देवसेनां पार्वतीञ्च सरस्वतीम् ।
लक्ष्मीं विनायकं शास्ता रविं भूमिं सुमित्रकाम् ॥ ६० ॥

एतेषां मूलमन्त्रेण त्रयाहुतिं हुनेद्बुधः ।
पूर्णाहुतिश्च शिरसा स्विष्टकृतेति होमयेत् ॥ ६१ ॥

प्रातः काले गुरुः स्नात्वा नित्यकर्मविधाय च ।
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ॥ ६२ ॥



आचार्यं पूजयेत्पश्चात् गाभूवस्त्रैर्धनैरपि ।
मुहूर्ते समनुप्राप्ते प्रतिष्ठां सम्यगाचरेत् ॥ ६३ ॥

शयनाच्छक्तिमुद्धृत्य वस्त्रादीनि व्यपोह्य च ।
सर्वातोद्यसमायुक्तं स्नानश्वभ्रोपरि न्यसेत् ॥ ६४ ॥

घृतं शिरोऽर्पणं कृत्वा शुद्धाद्भिः स्नाप्य मूलतः ।
कुम्भानुद्धृत्य शिरसावाह्य धामप्रदक्षिणम् ॥ ६५ ॥

कृत्वा शक्त्यायुधाग्रे तु स्थापयेत्स्थण्डिलोपरि ।
शिवाख्याद्बीजमादाय विन्यसेदूर्ध्वपत्रके ॥ ६६ ।

विष्णुबीजं मध्यपत्रे त्वधः पत्रे चतुर्मुखम् ।
कुम्भमध्ये महासेनं वल्लीं चैव तु दक्षिणे ॥ ६७ ॥

तद्वामे देवसेनाञ्च विन्यसेत्तु विचक्षणः ।
पार्वतीबीजमादाय फलकायान्तु विन्यसेत् ॥ ६८ ॥

वाग्देवीबीजमादाय फलकान्दक्षिणे न्यसेत् ।
लक्ष्मीबीजं समादाय फलकां वामपार्श्वके ॥ ६९ ॥

विघ्नेशबीजमादाय दण्डाग्रे मुनिसत्तम ।
शास्तारं बीजमादाय तद्दिशायान्तु विन्यसेत् ॥ ७० ॥

भास्करं बीजमादाय दण्डमध्ये तु विन्यसेत् ।
भूमिबीजं समादाय न्यसेद्दण्डाग्रपीठके ॥ ७१ ॥

सुमित्रबीजमादाय दण्डमध्ये प्रविन्यसेत् ।
ततः कुम्भजलैश्शक्तिं तत्तस्थाने प्रपूजयेत् ॥ ७२ ॥

स्नपनं कारयेदग्रे यथाविभवविस्तरम् ।
ब्राह्मणान् भोजयेत्पश्चात् दीनानाथांश्च पूजयेत् ।

एवं यः कुरुते मर्त्यः स शत्रून् जयति ध्रुवम् ॥
युद्धारम्भे नृपः कुर्यात् जयमाप्नोत्यसंशयः ॥ ७४ ॥

इति श्रीकुमारतन्त्रे शक्त्यस्त्रस्थापनविधिर्नाम अष्टाविंशः पटलः

## एकोनत्रिंशः पटलः

### अथ गर्भन्यासविधिः

गर्भन्यासविधिं वक्ष्ये शृणुष्व मुनिपुङ्गव ।
प्रासादे मण्डपे चैव प्राकारे गोपुरे तथा ॥ १ ॥

परिवारालये शस्तं विन्यसेत्सपदे सुधीः ।
सर्वत्राद्येष्टकामेव गर्भन्यासमिति स्मृतम् ॥ २ ॥

प्रासादे पादुकोर्ध्वे च पट्टिकोपरि विन्यसेत् ।
मण्डपेषु च सर्वेषु दक्षिणे स्तम्भमूलके ॥ ३ ॥

द्वारदक्षिणभित्तौ वा दक्षिणस्तम्भमूलके ।
सभायामं विशालाय दक्षिणस्तम्भमूलके ॥ ४ ॥



यद्वास्तु गर्भसंयुक्तं वस्तु तत्संपदं पदम् ।
तदधंभाजनं कार्यं सर्वलक्षणसंयुतम् ॥ ५ ॥

सौवर्णं राजतं ताम्रं कांस्यं वा गर्भभाजनम् ।
पदासमन्तु विस्तारं भाजनस्य महामुने ॥ ६ ॥

षट्सप्ताष्टाङ्गुला वाऽपि हीनं मध्यममुत्तमम् ।
चतुर्वर्णं समं कुर्यात् विस्तारेण समोपमम् ॥ ७ ॥

चतुर्भागैकहीनं वा त्रिभागैकविहीनकम् ।
तत्तदन्यंशमानेन विधानं तस्य कारयेत् ॥ ८ ॥

यवमात्रन्तु विस्तारं तयोर्भित्ति समंभवेत् ।
पञ्चविंशतिकोष्ठं वा नवकोष्ठयुतन्तु वा ॥ ९ ॥

कोष्ठभित्तिसमुत्सेधं बाह्यात्पादविहीनकम् ।
तद्विस्तारं तदर्धं स्यात्सर्वदोषविवर्जितम् ॥ १० ॥

गर्भमस्त्रेण संक्षाल्य हृदाभ्युक्ष्य च त[1]त्सुधीः ।
प्रासादाग्रे द्विपार्श्वे च मण्डपं कल्प्य भूषयेत् ॥ ११ ॥

भूतषट्कं मुनिश्रेष्ठ कन्यसादि क्रमेण तु ।
तन्मध्ये वेदिकां कुर्यात् रत्निमात्रसमुच्छ्रयाम् ॥ १२ ॥

चतुर्दिक्षु च कुण्डानि चतुरश्राणि कल्पयेत् ।
स्थण्डिलं वाऽपि सर्वत्र कल्पयेत्कल्पवित्तमः । १३ ॥

---

1 सत्

वेद्यूर्ध्वे स्थण्डिलं कुर्यात्तिलतण्डुलशालिभिः ।
तत्र पद्मं समालिख्य साष्टपत्रं सकर्णिकम् ॥ १४ ॥

विन्यसेद्धृदयेनैव तन्मध्ये गर्भभाजनम् ।
तेषु कोणेषु सर्वेषु मध्ये कूटाक्षरं न्यसेत् ॥ १५ ॥

यकारादिहकारान्तं परितोऽष्टासु विन्यसेत् ।
तद्बाह्यकोष्ठे पूर्वादि विन्यसेत् षोडशस्वरान् ॥ १६ ॥

माणिक्यं स्यान्मरकतं नीले स्फटिकमेव च ।
पूर्वादिषु चतुर्दिक्षु वैडूर्यं मौक्तिकं पुनः ॥ १७ ॥

पुष्परागं प्रवालञ्च वह्निकोणादिषु न्यसेत् ।
पारदं धातुरागञ्च गैरिकञ्च मनः शिलाम् ॥ १८ ॥

अञ्जनं हरितालञ्च माक्षिकञ्चाद्भुतं तथा ।
सौराष्ट्रं विन्यसेत्तेषां पूर्वादिषु गुरूत्तमः ॥ १९ ॥

काञ्चनं रजतं ताम्रमारकूटमपि त्रपु ।
कांस्यं सीसमयश्चैव पित्तलञ्च तथा न्यसेत् ॥ २० ॥

एवं नवसु कोष्ठेषु विन्यस्य च महामुने ।
शालिकोद्रवनीवारप्रियङ्गुतिलसर्षपान् ॥ २१ ॥

यववेणुकुलुत्थञ्च तथा निष्पावमाढकम् ।
गोधूमं माषमुद्गञ्च श्यामकं वुष्ठ षोडश ॥ २२ ॥



पूर्वादिषु क्रमान्न्यस्त्वा पद्ममुत्पलमेव च ।
बदरी मुसलञ्चापि रात्रि ह्रीबेरमेव च ॥ २३ ॥

उशीरञ्च कुशेरुञ्च दिक्षु पूर्वादिषु न्यसेत् ।
विष्णुक्रान्तिं सहादेवीं गोक्षीरं बिल्वमेव च ॥ २४ ॥

शमीपत्रमपामार्गं कदम्बञ्च विदिक्षु च ।
पर्वते च नदीतीरे वल्मीके कर्कटावटे ॥ २५ ॥

दन्तिदन्ते वृषे शृंगे सस्यक्षेत्रे तडागके ।
हलोदुम्बरमूले च दशमृद्ग्राह्य बुद्धिमान् ॥ २६ ॥

पूर्वादिषु च कोष्ठेषु सर्वेष्वत्र क्रमान्न्यसेत् ।
चतुर्दिक्षु स्वस्तिकाक्षमालां शक्तिञ्च कुक्कुटम् ॥ २७ ॥

मयूरं वा सुवर्णेन मध्यमे गजमेव च ।
एवं संपूज्य विधिवत् प्रतिकोष्ठं तदक्षरैः ॥ २८ ॥

विधाय च विधानेन फणीन्द्रं शेषमर्चयेत् ।
रक्तसूत्रं ततो बध्वा नववस्त्रेण वेष्टयेत् ॥

ततो होमं प्रकर्तव्यमग्निकार्योक्तमागतः ।
स्कन्दस्य मूलमन्त्रेण पलाशसमिधा हुनेत् ॥ ३० ॥

आज्यं चरुं तथा लाजं तिलं सर्षपमेव च ।
यवं चैव षडंगेन जुहुयान्मुनिपुङ्गव ॥ ३१ ॥

शतमर्धं तदर्धं वा होमयेन्मन्त्रवित्तमः ।
सर्वद्रव्यावसाने तु तत्तन्मन्त्रेण संस्पृशेत् ॥ ३२ ॥

गर्भभाण्डं द्विजश्रेष्ठ फणीन्द्राय निवेदयेत् ।
हविस्सर्वोपदंशाद्यं पूर्णां मूलेन होमयेत् ॥ ३३ ॥

सुमुहूर्ते सुलग्ने तु शान्तात्मा देशिकः शुचिः ।
सर्वातोद्यसमायुक्तं सर्वमङ्गलसंयुतम् ॥ ३४ ॥

गर्भभाजनमुत्थाप्य प्रोक्तस्थाने [1]समावटे ।
विन्यस्य मूलमन्त्रेण सर्वद्रव्यसमायुतम् ॥ ३५ ॥

शिल्पिना कारयेत्कर्म यथा दृढतरन्तथा ।
अलाभे गर्भगोले तु दक्षिणावर्तशंखकैः ॥ ३६ ॥

दले वा भाजनं सर्वं वस्तु निक्षिप्य कौशिक ।
सर्वकर्म यथा पूर्वं कृत्वा तद्विन्यसेद्बुधः ॥ ३७ ॥

रात्रौ गर्भमहन्येव स्थापयेत्प्रथमेष्टकाम् ।
दक्षिणां गुरवे दद्यात्तोषयेच्छिल्पिना तथा ।
शुभेप्सिभिः प्रकर्तव्यं गर्भन्यासं विधानतः ॥ ३८ ॥

इति श्रीकुमारतन्त्रे गर्भन्यासविधिर्नाम एकोनत्रिंशः पटलः

———

1 महा

## त्रिंशः पटलः

### अथ आद्येष्टकाविधिः

आद्येष्टकाविधिं वक्ष्ये शृणु कौशिक सुव्रत ।
गर्भोपरि निधायात्राऽवटे प्रथमेष्टकाम् ॥ १ ॥

गर्भाधस्तात्तु वा स्थाप्य श्वभ्रे पञ्चद्वयांशके ।
यद्यत्स्थानन्तु गर्भस्य तत्रस्था प्रथमेष्टका ॥ २ ॥

मुद्गश्च धान्यलोहैश्च धातुरत्नौषधादिभिः ।
गन्धैश्च विविधैर्बीजैर्विन्यसेत्प्रथमेष्टकाम् ॥ ३ ॥

शिलामया शिलागेहे इष्टका त्विष्टकागृहे ।
गर्भभाजनभूस्तारा विस्तारद्विगुणा मता ॥ ४ ॥

विस्तारार्धघनामासत् हर्म्येषु चतुरिष्टका ।
अष्टौ च द्वादशस्थाप्य मध्यमेऽप्युत्तरे गृहे ॥ ५ ॥

ऋजुदीर्घाङ्गुलन्यासं द्विसंख्यानसि विन्यसेत् ।
असमांगुलरेखावत् पञ्चरेखा नपुंसकम् ॥ ६ ॥

ऋता तत्र यथापूर्वं तथैव स्थापनेष्टकाम् ।
सर्वलक्षणसंयुक्तां रक्तवर्णां ततः शुभाम् ॥ ७ ॥

इष्टकां क्षालयेदद्भिः प्रोक्षयेदस्त्रमन्त्रतः ।
मण्डपे स्थण्डिलं कल्प्य तिलतण्डुलशालिभिः ॥ ८ ॥

तन्मध्ये पद्ममालिख्य न्यसेत्तस्योपरीष्टकाम् ।
यकारादिवकारान्तं प्रणवेन समन्विताम् ॥ ९ ॥

शालिपिष्टरसेनैव लिखित्वाच्छाद्य वस्त्रतः ।
गन्धपुष्पादिनाभ्यर्च्य मूलमन्त्रेण देशिकः ॥ १० ॥

कुण्डे वा स्थण्डिले वाऽपि होमयेन्मुनिपुङ्गव ।
स्विष्टकृत्स्विष्टमग्नेति पूर्वान्तु शिरसा हुनेत् ॥ ११ ॥

प्रभाते स्थापयेद्विद्वान् गर्भोर्ध्वे प्रथमेष्टकाम् ।
दक्षिणायनकाले तु सुमुहूर्ते सुलग्नके ॥ ११ ॥

वह्निराक्षसवाय्वीशकोणेषु चतुरिष्टकाम् ।
क्रमशः स्थापयेद्विद्वान्सर्वकामार्थसिद्धये ॥ १३ ॥

आलस्येनाथ मोहेन कुर्याच्चेत्तु गृहादिकाम् ।
आद्येष्टकां विना विप्र दारिद्रं तत्र तिष्ठति ।
तस्मात्सर्वप्रयत्नेन कर्तव्या प्रथमेष्टका ॥ १४ ॥

इति श्रीकुमारतन्त्रे आद्येष्टकाविधिर्नाम त्रिंश: पटलः

---

## एकत्रिंशः पटलः

### अथ प्रासादलक्षणविधिः

अतः परं प्रवक्ष्यामि प्रासादस्य तु लक्षणम् ।
हस्तमानेन कर्तव्यं प्रासादं मुनिपुङ्गव ॥ १ ॥

मानमात्रांगुलं मूलं बेरांगुलमिति त्रिधा ।
तेषु मानांगुलं ग्राह्यं ग्रस्ते हस्तं वदाम्यहम् ॥ २ ॥

किष्कुहस्त इति प्रोक्तं तच्चतुर्विंशमंगुलम् ।
प्राजापत्यं पञ्चविंशदङ्गुलं परिकीर्तितम् ॥ ३ ॥

षड्विंशतिधनुर्मुक्तिः सप्तविंशद्धनुर्ग्रहम् ।
चतुर्विंशेषु हस्तेषु प्राजापत्येन हस्ततः ॥ ४ ॥

देवतायतनं कार्यं वास्तुशास्त्रविशारदैः ।
द्विहस्ताद्दशहस्तान्तं भवत्येकतलस्य तु ॥ ५ ॥

भूतादिमनुहस्तान्तं द्वितलस्य विशालतः ।
त्रितलं सप्तहस्तादि षोडशान्तं प्रकीर्तितम् ॥ ६ ॥

तथैवं मुनिशार्दूल त्रयोदशकरादि च ।
द्वाविंशद्धस्तपर्यन्तं चतुर्भूमेरुदाहृतम् ॥ ७ ॥

[1]पञ्चदशकरायामहीनं क्षुद्रविमानकम् ।
तेषां तुङ्गं प्रवक्ष्यामि शृणु कौशिक सुव्रत ॥ ८ ॥

---
1 पञ्चाशत

व्यासे सप्तकृतपंक्तितुङ्गनाम्ना तु शान्तिकम् ।
अत्यर्थं पौष्टिकं ज्ञेयं पञ्चमेऽष्टौ जयप्रदम् ॥ ९ ॥

अद्भुतं सतिपातश्च द्विगुणं सर्वकामिकम् ।
द्विगुणादधिकं पादे अर्धोच्चं सर्वकामिकम् ॥ १० ॥

सप्तपाद्यष्टपंक्त्यादि यावत्सप्त तु हस्ततः ।
द्विद्विहस्तविवृद्ध्यादि सप्तविंशतिभेदकम् ॥ ११ ॥

[1]वेदादिद्वादशान्तानां तालानां धामविस्तृतम् ।
प्रत्येकं त्रित्रिमानं स्यादुत्तमाद्युत्तमक्रमैः ॥ १२ ॥

त्रयोविंशश्चतुर्विंशकराच्छक्तिकरान्तकम् ।
त्रित्रिहस्तविवृद्ध्या तु सप्तविंशतिहस्तकम् ॥ १३ ॥

तेषां ग्रहाणामुत्तुङ्गमुत्तमाद्युत्तमक्रमैः ।
त्रयोदशचतुष्पंक्तिहस्तं षट्षष्टिकावधि ॥ १४ ॥

द्विद्विहस्तविवृद्ध्या तु सप्तविंशत्प्रमाणकम् ।
देवादिद्वादशान्तानां तालानां हर्म्यविस्तृतम् ॥ १५ ॥

सप्तदशाष्टपंक्त्यादि षण्णवत्यन्तहस्तकम् ।
त्रित्रिहस्तविवृद्ध्या तु त्रिनवोत्तुङ्गमीरितम् ॥ १६ ॥

मध्यक्रमे विमानानामुत्तमादित्रयस्त्रयः ।
इदं पंक्तिसमारभ्य द्विद्विहस्तविवर्धनात् ॥ १७ ॥

1 देवादि



षट्पञ्चाशतिहस्तान्तं चतुर्विंशत्प्रमाणकम् ।
भूतादिद्वादशान्तानां तालानां हर्म्यविस्तरम् ॥ १८ ॥

सप्तदशाष्टपंक्त्यादि सप्ताशीतिकरान्तकम् ।
त्रित्रिहस्तविवृद्ध्या तु चतुर्विंशतितुङ्गकम् ॥ १९ ॥

अल्पक्रमे विमानान्तमुत्तमादित्रयं त्रयम् ।
विस्तारं स्तम्भतो बाह्ये जन्मात् स्तूप्यन्तमुत्तमम् ॥ २० ॥

अथवा शिखरान्तं वा विमानानां समुन्नतिम् ।
सप्तत्या हस्तविस्तारात् शतहस्तसमुच्छ्रयात् ॥ २१ ॥

विनष्टत्वंशकं मानं सर्वथापि च वर्जयेत् ।
तेषु तेष्वष्टमानेन गर्भगेहं प्रशस्यते ॥ २२ ॥

व्यासायामं समूहेषु वल्मशुद्ध समीक्षते ।
वसुद्रागाग्निभिर्हत्वा रविपंक्त्याष्टभिर्भवेत् ॥ २३ ॥

आयव्ययश्च योनिस्स्याद् वसुभिर्गुणिते पुनः ।
हत्वा च सप्तविंशद्भिः शेषमक्षफल पुनः ॥ २४ ॥

नाभेः सप्तहृतं पारं त्रिंशद्व्याप्ते तिथिर्वदेत् ।
आयाधिकं शुभैर्युक्तं कल्पयेत्कल्पवित्तमः ॥ २५ ॥

वेश्मतारे त्रिभागैकं पञ्चभागे गुणांशकम् ।
सप्तभागे चतुर्थांशं नवांशे पञ्चभागकम् ॥ २६ ॥

रुद्रांशे सप्तभागश्च त्रयोदशसु सप्त च ।
पक्षपक्षसु भागश्च [1]सप्तदशनधावकम् ॥ २७ ॥

गेहार्धं गर्भगेहस्य उक्तं मध्यविशालकम् ।
गर्भगेहचतुर्थांशं मध्ये द्वारविशालकम् ॥ २८ ॥

विस्तारद्विगुणोत्सेधं यथेष्टं दिशि कल्पयेत् ।
अग्रतो मण्डपं कुर्यात् गर्भगेहसमेन वा ॥ २९ ॥

त्रिपादं वा तदर्धं वा तदेव ह्यर्धमण्डपम् ।
त्रिपादेपादमध्येऽर्धं त्वन्तरालं विधीयते ॥ ३० ॥

महामण्डपमेतेषां समायामं तदग्रतः ।
चतुर्थश्चाथ हीनं वा महामण्डपविस्तृतम् ॥ ३१ ॥

द्वारोत्सेधार्धविस्तारमुत्तमद्वारमुच्यते ।
तदुत्सेधगुणांशैकं हीनं मध्यममुच्यते ॥ ३२ ॥

अधमं द्वादशं हीनं स्याच्छिखागतविस्तरम् ।
ऊर्ध्वोदुम्बरमध्ये तु वामपार्श्वे च दक्षिणे ॥ ३३ ॥

श्रियं सरस्वतीं चैव विघ्नेशं कारयेद् बुधः ।
पार्श्वेषु द्वारदेशेषु द्वारपालौ प्रतिष्ठयेत् ॥ ३४ ॥

प्रासादभित्तिकोष्ठेषु दक्षिणोदङ्प्रतीचिषु ।
सुब्रह्मण्यं गुहं चैव पश्चिमे स्कन्दसंस्थितम् ॥ ३५ ॥

1 दशविभागकम्



स्कन्दस्य मण्डपे पार्श्वे दक्षिणे तु विनायकम् ।
दुर्गां चैवोत्तरे भागे स्थानकासनमेव वा ॥ ३६ ॥

आसमन्तात्तथोपेतं रूपाण्यपि विधीयते ।
एवं मूलतले प्रोक्तमुपर्युपरि वक्ष्यते ॥ ३७ ॥

पुरंदरं न्यसेत्पार्श्वे सुब्रह्मण्यश्च दक्षिणे ।
पश्चिमे वरुणश्चापि स्कन्दं वा विन्यसेद् बुधः ॥ ३८ ॥

उत्तरे तु विधातारं गुहं वा धनदन्तु वा ।
एवं दीर्घतलं पार्श्वे पंक्तितले मरुद्गणान् ॥ ३९ ॥

तलेऽमराः सुरान् सिद्धान् गन्धर्वादिमुनीश्वरान् ।
ग्रीवाधस्ताद् वृतेरूर्ध्वे कोणे कोणेऽपि विन्यसेत् ॥ ४० ॥

नागरं द्राविडं चैव वेसरञ्च कृतामतम् ।
चतुरश्रं साधनाश्रं नागराद्यङ्गमेव च ॥ ४१ ॥

अष्टाश्रञ्च षडश्रञ्च तदायामयुतन्तु वा ।
द्राविडं व्योमनिर्दिष्टमधिवेसरमुच्यते ॥ ४२ ॥

एकञ्च द्व्येकनेत्रैकं तत्तन्मूलार्धकन्धरम ।
प्रस्तरं पादशिष्टानामेकभूतिवितानकम् ॥ ४३ ॥

त्रिपुवत्पञ्चचैकद्वे वेदानर्धैकभागतः ।
अधिष्ठानांघ्रिमञ्चांघ्रिप्रस्तरं वेदिकागलम् ॥ ४४ ॥

शिखरं स्तूपिका कुर्यात् भागमंशे द्विभूमिकम् ।
महर्षे भवने तुङ्गे चतुर्विंशतिभाजिते ॥ ४५ ॥

द्वयवेदिद्विभागैश्च पादोनश्चतुरश्रतः ।
एकार्धं चैकभागैकं सैकभागार्धभागेकम् ॥ ४६ ॥

एकं द्वयर्धैकभागैश्च पादाधाग्श्च पादकम् ।
प्रस्तारं त्रिप्रस्तरश्च पादप्रस्तरवेदिकम् ॥ ४७ ॥

गलश्च शिखरं कुम्भं त्रितले तु यथा क्रमम् ।
एकद्वित्रिचतुःपञ्चषट्पंक्तं तु तले मतम् ॥ ४८ ॥

भूतषट् सप्तभित्तिश्च द्वितले कल्पयेद् बुधः ।
द्वितले सप्तदिग्द्वारदशाङ्गैः कुम्भभित्तयः ॥ ४९ ॥

एवं भित्तिविधं प्रोक्तं युक्त्या युञ्जीत बुद्धिमान् ।
उपपीठादि वर्गाणामलंकाराणि यानि च ॥ ५० ॥

विस्तारश्च पुरा विप्र मया च कथितं तव ।
तन्मार्गेण प्रकर्तव्यं सर्वलक्षणसंयुतम् ॥ ५१ ॥

अधिष्ठानादिवर्गाढ्यं शिलाकूटादिशोभितम् ।
क्षुद्रनाडी महानाडी हंसमालाविमण्डितम् ॥ ५२ ॥

सर्वालंकारसंयुक्तं यथोक्तगतिमैर्युतम् ।
अलंकारैश्च नामानि वक्ष्येऽहं वैजयन्तिकम् ॥ ५३ ॥



श्रीभोगं श्रीविशालञ्च स्वस्तिबन्धन्तथैव च ।
श्रीकरं हस्तिपृष्ठञ्च स्कन्दकूटञ्च केसरम् ॥ ५४ ॥

एवमेव तले नाम द्वितले नाम वक्ष्यते ।
स्वस्तिकञ्चातिसौन्दर्यं कैलासं पर्वतन्तथा ॥ ५५ ॥

स्वस्तिबन्धश्च कल्याणं पद्माधं विष्णुकान्तकम् ।
सुमङ्गलश्च गम्यारं हस्तपृष्ठं मनोहरम् ॥ ५६ ॥

तथैवेश्वरकान्तञ्च वृत्तकौबेरकान्तकम् ।
द्वितलं पक्षनामानि एतानि बहुभूमिषु ॥ ५७ ॥

एतेष्वष्टौ यथायोग्यं प्रासादं कल्पयेद् बुधः ।
सुस्निग्धं सुदृढं कुर्यात् वित्तशाठ्यं न कारयेत् ॥ ५८ ॥

एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।
असौ तु कुरुते पूर्वान् त्रिसप्तकुलजान् ध्रुवम् ॥ ५९ ॥

सर्वान्कामानिह प्राप्य युगानामेकसप्ततिः ।
मोदते चाप्सरगणैर्विमाने सर्वकामिके ॥ ६० ॥

पुण्यभूमिं ततः प्राप्य पुत्रपौत्रविवर्धनम् ।
एकविंशत्कुलं विप्र साम्राज्यं समवाप्नुयात् ॥ ६१ ॥

इति श्रीकुमारतन्त्रे प्रासादलक्षणविधिर्नाम एकत्रिंशः पटलः

---

## द्वात्रिंशः पटलः

### अथ मूर्ध्नेष्टिकाविधिः

शृणुष्व मुनिशार्दूल वक्ष्ये मूर्ध्नेष्टिकाविधिम् ।
प्रासादमूर्ध्ना विधिना प्राप्य मूलेष्टकाः शुभाः ॥ १ ॥

इष्टकास्ताश्चतस्रः स्युस्तासां लक्षणमुच्यते ।
शिलागृहे शिलारूपा इष्टका इष्टकागृहे ॥ २ ॥

इष्टकाभिश्च भूमिश्रे षोडशाङ्गुलमायता ।
तदूर्ध्वे तारसंयुक्ता तस्यार्धघनसंयुता ॥ ३ ॥

इष्टकायाममध्ये वा षोडशाङ्गुलविस्तृताः ।
तदर्धघनसंयुक्ता द्वयार्धार्धाङ्गुलक्षया ॥ ४ ॥

कालमित्रे प्रधानादि ज्ञात्वा तु ग्रहमूलकम् ।
स्तूपिदण्डेन संयुक्तं कुर्यान्मूर्ध्नेष्टकास्तथा ॥ ५ ॥

स्तूपिदण्डोचिता वृक्षा खदिरासनशिंशुपाः ।
सालचन्दनवृक्षाश्च तिन्त्रिणीसारमेव च ॥ ६ ॥

प्रासादपादतुल्यं वा तद्विष्कम्पसमं तु वा ।
तद्वत्तुङ्गगुणांशैकमूले तु चतुरश्रकम् ॥ ७ ॥

तदूर्ध्वांशद्वयं वृत्तं कुर्यादनुकृशं यथा ।
अग्रे व्योमाङ्गुलानाह मेयं कृत्वा तदर्धकम् ॥ ८ ॥



ततः पादं प्रयुञ्जीत तत्तले त्रिगुणायतम् ।
विस्तारार्धघनोपेतं तद्दृढं सुदृढं तथा ॥ ९ ॥

लोहेन कारयेद्विद्वान् स्थूपिदण्डं विशेषतः ।
क्षालयित्वाम्भसा सम्यक् प्रोक्षयेदस्त्रमन्त्रतः ॥ १० ॥

यकारादिवकारान्तमिष्टकासु चतुर्ष्वपि ।
विलिखेद्धातुरागेण पिष्टेनैव सितेन वा ॥ ११ ॥

पुण्याहं वाचयित्वाथ कौतुकं बन्धयेत्सुधीः ।
सुवर्णं रजतं वाऽपि क्षौमं कार्पासकन्तु वा ॥ १२ ॥

मण्डपं चाधिवासार्थं कारयेल्लक्षणान्वितम् ।
कृत्वा नवपदं तत्र तन्मध्ये वेदिकायुतम् ॥ १३ ॥

तालमात्रसमुत्सधात् दर्पणोदरसन्निभम् ।
वेदिकायाश्चतुर्दिक्षु कुण्डे वा स्थण्डिलेऽपि वा ॥ १४ ॥

चतुरश्राणि कुण्डानि सर्वाणि परिकल्पयेत् ।
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥ १५ ॥

आशाध्वजसमायुक्तं वितानैरुपशोभितम् ।
दर्भमालासमायुक्तमष्टमङ्गलसंयुतम् ॥ १६ ॥

मङ्गलांकुरसंयुक्तं बहूपस्कारशोभितम् ।
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः ॥ १७ ॥

वास्तुहोमं प्रकुर्वीत पर्यग्निकरणं ततः ।
तन्मध्ये स्थण्डिलं कृत्वा श्वेततण्डुलशालिभिः ॥ १८ ॥

पद्ममष्टदलं लिख्य दर्भैश्चैव परिस्तरेत् ।
इष्टिकां विन्यसेन्मध्ये वस्त्रेणाच्छाद्य देशिकः ॥ १९ ॥

दण्डोर्ध्वे कूर्चमाबध्वा मूले वस्त्रेण वेष्टयेत् ।
इष्टिकां परितिन्यस्य कान्तेन मधुनार्चयेत् ॥ २० ॥

स्थापयेच्च ततः कुम्भान् सर्वलक्षणसंयुतान् ।
ससूत्रान् सापिधानांश्च सवस्त्रान्वारिपूरितान् ॥ २१ ॥

मध्यादीशानपर्यन्तं विन्यसेन्नवकुम्भकान् ।
तेषु मध्ये गुहं चेष्ट्वा दिक्पालान्परितो यजेत् ॥ २२ ॥

अग्निकार्योक्तमार्गेण होमं कृत्वा विचक्षणः ।
पुरुषं पूर्वकुण्डे च दक्षिणेऽघोरमेव च ॥ २३ ॥

सद्योजातं तु वरुणे वामदेवं तथोत्तरे ।
गन्धाद्यैरर्चयेद्धीमान् तत्तन्मन्त्रमनुस्मरन् ॥ २४ ॥

पलाशखादिराश्वत्थवटाः पूर्वादिदिक्षु च
समिदाज्यचरूंश्चैव लाजसक्तुतिलं तथा ॥ २५ ॥

दधिक्षीरगुलं चैव प्रत्येकन्तु शताहुतिः ।
मूलेन च षडङ्गेन स्कन्दगायत्रिमन्त्रतः ॥ २६ ॥



अयं कुमारमन्त्रेण होमयेन्मुनिपुङ्गव ।
द्रव्यान्ते कीलकं स्पृष्ट्वा व्याहृतिर्जुहुयात्ततः ॥ २७ ॥

आज्येनाघोरमन्त्रेण सर्वत्रापि शताहुतिः ।
ततः कुम्भस्थितानां तु प्रत्येकं षोडशाहुतिः ॥ २८ ॥

रात्रिशेषं व्यपोह्याथ गुरुः प्रातः समुत्थितः ।
कृतनित्यविधिस्तत्र सोष्णीषस्सोत्तरीयकः ॥ २९ ॥

कुम्भानभ्यर्च्य विधिना पूर्णान्तु शिरसा हुनेत् ।
सुमुहूर्ते सुलग्ने तु सर्वदोषविवर्जिते ॥ ३० ॥

पूजितो यजमानेन गोभूमिधनकाञ्चनैः ।
संतुष्टहोतृदैवज्ञशिल्पिभिः सह देशिकः ॥ ३१ ॥

उत्थाप्य चेष्टिकां कीलं यजमानादिभिः सुधीः ।
सर्वातोद्यसमायुक्तं कृत्वा धामप्रदक्षिणम् ॥ ३२ ॥

आरोप्योपरि तन्मूर्ध्नि रन्ध्रं निरन्ध्रकं तथा ।
वैडूर्यं स्फटिकं मुक्ता वज्रं वै पुष्परागकम् ॥ ३३ ॥

मध्यादीशानपर्यन्तं स्कन्दलोकेशबीजकम् ।
विन्यस्यैव शकुन्यादिनवशक्तिर्यजेद्बुधः ॥ ३४ ॥

तस्योर्ध्वे कीलकं न्यस्त्वा शिखरार्धप्रमाणकम् ।
तन्मन्त्रकं समुच्चार्य दत्वा दत्वा तु निश्चलम् ॥ ३५ ॥

स्थापितान् नवकुम्भांश्च समानीय यथाक्रमम् ।
तत्कीलपरितश्चापि प्रोक्षयेत्सर्वमन्त्रतः ।। ३६ ।।

स्तूप्यंशमूर्ध्वतः कृत्वा शेषं तत्र प्रयोजयेत् ।
एवं यः कुरुते मर्त्यः सर्वलोकानवाप्य च ।
देहान्ते गणपो भूत्वा स्कन्दलोके महीयते ।। ३७ ।।

इति श्रीकुमारतन्त्रे मूर्ध्नेष्टिकाविधिर्नाम द्वात्रिंशः पटलः

---

## त्रयस्त्रिंशः पटलः

### अथ प्राकारलक्षणविधिः

परिवारनिवेशार्थं रक्षार्थं शोभनार्थकम् ।
प्राकारं परितः कृत्वा[1] शिल्पेष्टिकयापि वा ।। १ ।।

मूलप्रासादविस्तारं तदर्धं वा विचक्षणः ।
दण्डमित्यत्र संकल्प्य तद्दण्डेनैव कल्पयेत् ।। २ ।।

मूलप्रासादपार्श्वे तु दण्डेनैकेन मानतः ।
अन्तर्निर्मलं कुर्यात् पार्श्वेषु च महामतिः ।। ३

द्विद्विदण्डविवृध्या तु दण्डभारस्य विस्तृतम् ।
तत्पार्श्वेषु त्रिदण्डेन प्रत्याहारं प्रकल्पयेत् ।। ४ ।।

1 कुर्यात्



तस्य पार्श्वेषु मतिमान् चतुर्दण्डेन मानतः ।
महामर्यादिकं कुर्यात् तत्पार्श्वेषु द्विजोत्तम ।। ५ ।।

पञ्चदण्डविवृद्ध्या तु पञ्चप्राकारमुच्यते ।
चतुरश्रक्रमेकेन मुखायाम प्रचक्षते ।। ६ ।।

पादाधिक्यमथात्यर्थपादोनद्विगुणन्तु वा ।
द्विगुणं द्विगुणार्धं वा त्रिगुणं वा चतुर्गुणम् ।। ७ ।।

मुखायाममिति प्रोक्तं प्राकाराणां विशेषतः ।
सालं क्षुद्राल्पहर्म्याणामन्यमानेन कथ्यते ।। ८ ।।

स्तूप्या सार्धं प्रमाणेन प्रथमं सालमीरितम् ।
द्विप्रकारं द्विहस्तैश्च त्रिसालः पञ्चहस्तकः ।। ९ ।।

तस्मात्सप्तकरैरेव चतुर्थं सालमीरितम् ।
नवहस्तन्तु परितः तत्समं पञ्चसालकः ।। १० ।।

मध्यमानं सतारार्थं प्रथमं सालमीरितम् ।
तस्मात्पञ्चकरैरेव द्वितीयं सालमीरितम् ।। ११ ।।

सप्तहस्तं त्रितालं स्यात् नवहस्तैश्चतुर्थकम् ।
रुद्रहस्तेन कर्तव्यं पञ्चमं सालमेव च ।। १२ ।।

उत्तमानां सताराख्ये प्रथमं सालमीरितम् ।
तस्मात्सर्वकरेणैव प्राकारश्च द्वितीयकम् ।। १३ ।।

नवहस्तैस्त्रितालं स्यात् रुद्रहस्तैस्तु तालकम् ।
त्रयोदशकरेणैव पञ्चमं सालमीरितम् ॥ १४ ॥

एवं क्षुद्राल्पमध्यानामुत्तमानां विधीयते ।
एतेन द्विप्रकर्तव्यं पूर्वोक्तेन क्रमेण वा ॥ १५ ॥

प्राकार: परित: कुर्यात् मुखायामञ्च पूर्वकम् ।
भित्यन्तरस्य मानेन भित्तिमध्येन वा पुन: ॥ १६ ॥

बाह्ये तु नवतालं स्यात् मानसे मानवित्तम: ।
अस्य प्राकारभित्तेश्च विष्कम्भं सार्धहस्तकम् ॥ १७ ॥

तस्मात् त्र्यांगुलाधिक्याद्द्विहस्ताञ्च यथाक्रमम् ।
पञ्चानामपि सालानां भित्तिविष्कम्भमीरितम् ॥ १८ ॥

तत्तद्विष्कम्भमानञ्च त्रिगुणा च चतुर्गुणा ।
प्राकारोदयमुद्दिष्टं स्वात्मांशेनाग्रविस्तरम् ॥ १९ ॥

उत्तरार्धोच्छ्रितं वाऽपि कुम्भमध्यं ततोच्छ्रितम् ।
क्षुद्राल्पानां तु सालानां भित्तिहस्तप्रमाणकम् ॥ २० ॥

सार्धहस्तावधिर्यावत् वर्धयेत्पूर्ववत्क्रमात् ।
यथायोग्यमलङ्कारं तथैव परिकल्पयेत् ॥ २१ ॥

ऋजुभित्तियुतं वाऽपि बुद्बुदार्धेन्दुशीर्षकम् ।
छत्राकारधरो वाऽपि प्राकारं परिकल्पयेत् ॥ २२ ॥



भित्तिन्यासससमं वाऽपि पादार्धाधिकमेव वा ।
शीर्षोत्तुङ्गन्तु सालानामेतेषामन्तरालकम् ॥ २३ ॥

एकद्वित्रितलैर्युक्तं कुर्यादावृतिमण्डपम् ।
मानान्तं बाह्यभित्युच्चं यथाक्रमं तलान्तकम् ॥ २४ ॥

मूलसद्मोत्तरार्धं वा प्रस्तारं तत्तथापि वा ।
खण्डहर्म्योत्तरार्धं वा शिखरोन्नतमेव वा ॥ २५ ॥

उभयो: सालरूपं वा कल्पयेत्सालशीर्षके ।
यथेष्टदिक्षु सालेषु द्वारं युक्त्या प्रकल्पयेत् ॥ २६ ॥

गोपुरं तत्र तत्रैव कल्पयेद्विधिपूर्वकम् ।
अन्तर्हारे तथाचान्ये वह्नौ स्याद्धव्यकोष्ठकम् ॥ २७ ॥

प्रासादस्य द्विपार्श्वे तु देवसेना च वल्लिकम् ।
वह्निगोपुरयोर्मध्ये धनधान्यालयं भवेत् ॥ २८ ॥

याम्ये तु भोजनशाला च पुष्पमण्डपमेव च ।
नैर्ऋत्यामस्त्रशाला च वाहनावासमेव च ॥ २९ ॥

वारुणे वायवे चैव शयनस्थानमीरितम् ।
आस्थानमण्डपं सौम्ये तत्र पूर्वकृतालयम् ॥ ३० ॥

ऐशान्ये यागशालां तु वापीकूपं तु तत्र वै ।
ऐशगोपुरयोर्मध्ये वाद्यस्थानं द्विजोत्तम ॥ ३१ ॥

एवं यः कुरुते मर्त्यः सर्वपापैः प्रमुच्यते ।
अथैवं तारयेत्पूर्वान् त्रिसप्तकुलजानपि ॥ ३२ ॥

सर्वान्कामानिह प्राप्य पुत्रपौत्रादिसंयुतः ।
जन्मैकविंशतिं विप्र साम्राज्यं समवाप्नुयात् ।
स्कन्दलोकं ततः प्राप्य स्कन्देन सह मोदते ॥ ३३ ॥

इति श्रीकुमारतन्त्रे प्राकारलक्षणविधिर्नाम त्रयस्त्रिंशः पटलः

---

## चतुस्त्रिंशः पटलः

### अथ परिवारविधिः

परिवारविधिं वक्ष्ये शृणु कौशिक सुव्रत ।
परिवारविमानानां मानं गर्भगृहार्धकम् ॥ १ ॥

[तत्त्रिभागे च मानं वा पादबाह्यं प्रकल्पयेत् ।
त्रिचतुःपञ्चषट्सप्तहस्तैर्वा हर्म्यविस्तरम् ॥]

[1]तत्रभागः प्रकर्तव्यो यथा युक्तिवशाद्बुधैः ।
प्रासादमण्डपसभा शालाकारार्धयोग्यकम् ॥ २ ॥

एकद्वित्रितलं कुर्यात् परिवारालये बुधः ।
परिवारामरोत्सेधाः प्रतिमालक्षणोक्तवत् ॥ ३ ॥

1 सर्वैरंगैः प्रकर्तव्यः



सर्वलक्षणसंयुक्तं स्थानकासनमेव च ।
शिवं विष्णुं विधातारं विघ्नेशं गुहमेव च ॥ ४ ॥

पञ्चमूर्तिं विजानीयादेवमेव विचक्षणः ।
एते सर्वे सुराः प्रोक्ताः सर्वकारणकारणम् ॥ ५ ॥

विश्वरक्षकरा ह्येते तस्मात् सेव्या सुरोत्तमैः ।
एतस्मात् परिवारात्तु सर्वदेवसुरोत्तमाः ॥ ६ ॥

अष्टौ तु द्वादश पुनः परिवारस्तु षोडश ।
द्वात्रिंशत्परिवारांश्च वक्ष्येऽहं शृणु कौशिक ॥ ७ ॥

गेहे नवपदं कृत्वा मध्यभागाद्बहिःक्रमात् ।
प्राङ्मुखे तु गजं स्थाप्य वह्नौ शास्तारमेव च ॥ ८ ॥

यमे पितामहं सप्तमातरो निर्ऋते पुनः ।
ज्येष्ठादेवीं जलेशे च वायौ दुर्गां प्रतिष्ठयेत् ॥ ९ ॥

सोमे वै क्षेत्रकं प्रोक्तमैशान्यान्तु सुमित्रकम् ।
अष्टौ तु परिवारास्स्युरथद्वादश कथ्यते ॥ १० ॥

पञ्चपञ्चपदं कृत्वा मध्ये नवपदाद्बहिः ।
गजं विधिमगस्त्यं च नारदं च चतुर्दिशि ॥ ११ ॥

पश्चात्सूर्यपदे वह्नौ यमे रक्षसि वारुणे ।
वायौ सौम्ये तथैशान्ये क्रमादेतान् प्रतिष्ठयेत् ॥ १२ ॥

सूर्यः शास्ता यमश्चैव मातरो वरुणस्तथा ।
दुर्गाश्रीदसुमित्राश्च द्वादशैते प्रकीर्तिताः ॥ १३ ॥

षट्कषट्कपदं कृत्वा तन्मध्ये षोडशाद्बहिः ।
गजं विधिमगस्त्यञ्च नारदञ्च चतुर्दिशि ॥ १४ ॥

ऐशे जयन्ते भानौ च वह्नौ च विदधे पदे ।
भृङ्गो रूपो नैर्ऋते च शेषो वायुपदे पुनः ॥ १५ ॥

मुख्याश्चाभ्युदिते भागे सुमित्रं शशिभास्करौ ।
शास्तारञ्च महालक्ष्मीं भारतीं सप्तमातरम् ॥ १६ ॥

शुक्रं बृहस्पतिं दुर्गां दितिदेवीं तथादितिम् ।
स्थापयेत्क्रमशो विद्वानेते षोडशदेवताः ॥ १७ ॥

सप्तसप्तपदं कृत्वा मध्ये नवपदाद्बहिः ।
सावित्रेन्द्रजयेरुद्रजये चैवापवत्सकः ॥ १८ ॥

श्रियं भूमिं तथा ज्येष्ठां भारतीं च प्रतिष्ठयेत् ।
आर्ये च वास्त्वधिपते मित्रे चैव तु धारयेत् ॥ १९ ॥

गजेन्द्रं च विधातारमगस्त्यं नारदं मुनिम् ।
ईशे चैव तु पर्जन्ये महेन्द्रे भास्करे पदे ॥ २० ॥

सौम्येऽन्तरिक्षे वह्नौ च पूष्णि पश्चाद् ग्रहक्षते ।
यमे गन्धर्वमृगये पितृदौवारिके पदे ॥ २१ ॥



पुष्पदन्तश्च वरुणे सुरे यक्ष्मे समीरणे ।
नागे भल्लाटके सोमे दितिभागे तथा दितौ ॥ २२ ॥

पदेष्वेतेषु मतिमानीशानं चन्द्रमेव च ।
सुदेहञ्च सुरेशञ्च सुमुखञ्च दिवाकरम् ॥ २३ ॥

बर्हिं बृहस्पतिं चैव शास्तारं यममेव च ।
भृङ्गिणं सप्तमातॄश्च निर्ऋतिं वासुकिं तथा ॥ २४ ॥

अष्टवारं वारुणं च भृङ्गी दक्षप्रजापतिम् ।
वायुं दुर्गां वीरभद्रं धनदञ्च सुमित्रकम् ॥ २५ ॥

शुक्रं च स्थापयेदेतान् द्वात्रिंशत्परिवारकात् ।
त्रिप्रकारे तथा पञ्च प्राकारेऽप्येवमेव हि ॥ २६ ॥

पदमध्ययुतं कुड्यं यूतं वाऽथ प्रकल्पयेत् ।
यत्र द्वारन्तु चत्वारि विजानन्स्थापयेद्बुधः ॥ २७ ॥

ते हर्म्याभिमुखास्सर्वे स्थाप्या दन्तिपदेषु च ।
देवताभिमुखो दन्ति नवाभिमुख एव च ॥ २८ ॥

गजेन्द्रस्याग्रतः कुर्यात् प्रासादार्धप्रमाणतः ।
ध्वजस्थाने तदग्रे तु तन्नीत्वा शक्तिगेहकम् ॥ २९ ॥

देवताभिमुखां शक्तिं कल्पयेत्कल्पवित्तमः ।
एकद्वित्रिकरव्यासोत्सेधः स्याद्बलिपीठकम् ॥ ३० ॥

गोपुरात्तु बहिःपीठं प्रासादार्धेन भागकम् ।
तत्समं वा त्रिपादं वा बलिपीठं प्रकल्पयेत् ॥ ३१ ॥

पीठोत्सेधे षोडशांशे जन्म एकेन कारयेत् ।
चतुरंशेन जगतीं कुमुदश्च त्रिभागतः ॥ ३२ ॥

तस्योर्ध्वे कम्बुमेकेन कुण्डं कुर्यात्त्रिभागतः ।
एकेन चोपकम्पन्तु महापट्टिद्विभागतः ॥ ३३ ॥

ऊर्ध्वे वा जनमेकेन तुङ्गमेवमुदीरितम् ।
वाजनार्धविशालेन महापद्मविशालकम् ॥ ३४ ॥

ऊर्ध्वपद्मं तदर्धेन तत्त्रिभागैकमानतः ।
कर्णिकां तस्य मध्ये तु कल्पयेत्कल्पवित्तमः ॥ ३५ ॥

एते गजाथ सर्वेषां गोपुराभ्यन्तरेऽपि वा ।
बहिर्वा स्थापनीयास्ते मध्ये सूत्रस्य वामतः ॥ ३६ ॥

पञ्चानामपि सालानामग्रे पैशाचपीठकम् ।
द्वारपालं ततो वक्ष्ये श्रृणुष्व मुनिपुङ्गव ॥ ३७ ॥

गुहस्य गर्भगेहस्य चतुर्दिक् द्वाररक्षकाः ।
जयाश्च विजया रक्षा कृपा सत्यविचक्षणाः ॥ ३८ ॥

अभया कामरूपाश्च खड्गखेटकपाणयः ।
रक्तवर्णा विभूषाढ्या रक्तरूपापराधमाः ॥ ३९ ॥



श्यामकुङ्कुमसंकाशौ द्विभुजौ वा चतुर्भुजौ ।
वज्रशक्तिधरौ चैव गदायुधधरौ स्मृतौ ॥ ४० ॥

खड्गखेटकधारौ वा मुद्रा विस्मयसंयुताः ।
महामण्डपिकाद्वास्थौ विजयो जय इत्यपि ॥ ४१ ॥

वीरबाहुर्वीरसेनो वीरश्च वीरकञ्चुकः ।
वीरकेतुर्महावीरो वीरमौलिश्च वीर्यवान् ॥ ४२ ॥

इमे प्रथमसालस्य पूर्वादिद्वारपालकाः ।
पद्मश्चैव महापद्मः सुपद्मः पद्मलोचनः ॥ ४३ ॥

पद्मगः पद्मकेतुश्च पद्माभः पद्मवर्णकः ।
अन्तर्द्वारे चतुर्दिक्षु द्वारपालाष्टका इमे ॥ ४४ ॥

निकुम्भः कुम्भकर्णश्च कुम्भः कुम्भोदरस्तथा ।
कुम्भनासा कुम्भपृष्ठः कुम्भास्यः कुम्भगण्डकः ॥ ४५ ॥

मध्यद्वारचतुर्दिक्षु द्वारपालाष्टका इमे ।
वक्रदन्तो वक्रदृष्टिर्वक्राङ्गो वक्रवर्णकः ॥ ४६ ॥

वक्रनासो वक्रकर्णो वक्रास्यो वक्रशीर्षकः ।
महामध्यादिपूर्वादि द्वारेषु द्वारपालकाः ॥ ४७ ॥

शक्तिवज्रधरास्सर्वे सर्वाभरणभूषिताः ।
श्यामकुङ्कुमसङ्काशा पीतकृष्णा भयङ्कराः ॥ ४८ ॥

द्विभुजौ वा चतुर्बाहु: सर्वे खेटकधारिण: ।
मुद्रा विस्मयहस्ताश्च तुङ्गाश्च विकृतानना: ॥ ४९ ॥

एते सर्वे महाभागा: कुमारगणदेवता: ।
यत्र देवस्य तु मुखं तत्र बुध्वा समर्चयेत् ॥ ५० ॥

परिवारदेवता एते विश्वामित्र महामुने ।
अहं चोमा च शास्ता च वात्सल्यत्वान्महामुने ॥ ५१ ॥

कुमारो यत्र वसति वसामस्तत्र नित्यश: ।
तस्मात्सर्वान् प्रतिष्ठाप्य पूजयेत् षण्मुखालये ।
एवं य: कुरुते मर्त्य: स पुण्यां गतिमाप्नुयात् ॥ ५२ ॥

इति श्रीकुमारतन्त्रे परिवारविधिर्नाम चतुस्त्रिंश: पटल:

———

## पञ्चत्रिंशः पटलः

### अथ करणलक्षणविधि:

वक्ष्येऽहं मुनिशार्दूल करणानां तु लक्षणम् ।
यागांशकानि सर्वाणि करणानि प्रचक्षते ॥ १ ॥

अरणीस्रुक्स्रुवं चैव तोरणं चैव मङ्गलम् ।
दशायुधविधिं पश्चात् कूर्मासनविधिं पुन: ॥ २ ॥



खट्वाया लक्षणं पश्चात् लूखलं मुसलं तथा ।
शिबिकालक्षणं चैव डोलाया लक्षणं परम् ॥ ३ ॥

दीपमालाविधिं पश्चात् पुष्पाधारस्य लक्षणम् ।
भेरीं च समिधं चैव परिधिर्दर्भलक्षणम् ॥ ४ ॥

कूर्चश्च विष्टरं पश्चात् [1]समकूर्चस्य लक्षणम् ।
परिस्तरणमेवन्तु दर्भमालाविधिं पुन: ॥ ५ ॥

प्रोक्षणीं कूर्चमेवन्तु पवित्रस्य तु लक्षणम् ।
पाद्यपात्रविधिं पश्चात् अर्घ्याचमनपात्रकम् ॥ ६ ॥

अर्घ्यपात्रविधिं चैव [2]तत्पात्रस्य तु लक्षणम् ।
पुष्पाद्यार्घ्यपात्रश्च प्रणीतापात्रलक्षणम् ॥ ७ ॥

प्रोक्षणीपात्रमेवन्तु स्कन्दकुम्भस्य लक्षणम् ।
वर्धनीलक्षणं पश्चात् कुम्भानां लक्षणं पुन: ॥ ८ ॥

कलशानां शरावाणां कुण्डिकायाश्च लक्षणम् ।
हवि: पात्रविधिं पश्चादुपदंशस्य पात्रकम् ॥ ९ ॥

विधानलक्षणं दर्वीं स्थालिकायास्तु लक्षणम् ।
वितानञ्च पताकाश्च क्षुद्रध्वजविधानकम् ॥ १० ॥

छत्रपिच्छं चामरञ्च मयूरव्यजनं तथा ।
दुकूलस्य धनं पश्चादुष्णीषं चोत्तरीयकम् ॥ ११ ॥

---

1 लम्ब 2 गन्धपात्रस्य लक्षणम्

वस्त्राणां लक्षणं पश्चाच्छयनानाञ्च लक्षणम् ।
उपधानं ततो कश्चि प्रच्छन्नपटलक्षणम् ॥ १२ ॥

धूपपात्रविधिं चैव धूपघण्टाविधानकम् ।
दीपपात्रविधिं चैव पात्रं नोराजनस्य तु ॥ १३ ॥

महाघण्टादर्पणञ्च क्रमशः शृणु सुव्रत ।
अश्वत्थं वा शमीं वाऽपि गृहीत्वारणिमाचरेत् ॥ १४ ॥

दशपञ्चाङ्गुलायामा चतुरङ्गुलविस्तृता ।
षडङ्गुलघना प्रोक्ता [1]दीर्घाह्रासश्च वारणिः ॥ १५ ॥

प्रथमस्य तरोर्नाहं पञ्चाङ्गुलमुदाहृतम् ।
द्वाविंशदङ्गुलं दैर्घ्यं कीलं स्या[2]दायताग्रके ॥ १६ ॥

युगाङ्गुलेन मूले तु कीलं स्वेनैव कारयेत् ।
प्रथमस्याग्रके मूले त्वधः पट्टेन वेष्टयेत् ॥ १७ ॥

सप्ताङ्गुलं [3]तु विस्तारं तदर्धं घनमुच्यते ।
उभयोः पार्श्वयोश्चैव मुष्टिरष्टाङ्गुलं भवेत् ॥ १८ ॥

पञ्चाङ्गुलपरीणाहं सर्वत्रैव [4]सुदन्तकम् ।
दशपञ्चांगुलायामं त्रिवृत् गोपालरज्जुकम् ॥ १९ ॥

तन्तुना वाथ कर्तव्यं कनिष्ठाङ्गुलिनाहकम् ।
अरणीलक्षणं प्रोक्तं स्रुक्स्रुवस्य विधिं शृणु ॥ २० ॥

---

1 दीर्घाग्रा दृढवारणीः 2 दायता 3 तद् 4 सुवृत्तकम्



अश्वत्थेन तु शम्या वा खादिरेणाथवा पुनः ।
याज्ञिकैर्दारुभिः कुर्यात् स्रुक्स्रुवौ लक्षणान्विमौ ॥ २१ ॥

तस्य सारणितो ग्राह्य द्विधाकृत्वाथ शिल्पिभिः ।
तत्पार्श्वे बिलिमाख्यातं त्वष्टा च निर्वृणं दृढम् ॥ २२ ॥

द्वात्रिंशदङ्गुलायामं सप्ताङ्गुलं सुविस्तृतम् ।
तद्घनं वेदमात्रं स्यात् एव [1]मापाद्य तत्र वै ॥ २३ ॥

मध्यसूत्रं प्रसार्यादौ मुखायामं षडङ्गुलम् ।
अग्रभागं त्रिभागैकं मुखविस्तारमेव च ॥ २४ ॥

यवत्रयप्रमाणेन पट्टिकामुखपार्श्वयोः ।
यवमानेन निम्नं स्यान्मुखं सर्वमशेषतः ॥ २५ ॥

पञ्चाङ्गुले गलायामं विस्तारं भूतमात्रकम् ।
सप्ताङ्गुलायता वेदीं विस्तारं तत्समं भवेत् ॥ २६ ॥

बिलं सुवृत्तं मध्ये स्यादङ्गुलायतमानतः ।
तद्विस्तारसमं गर्तं सुवृत्तं बिलमुच्यते ॥ २७ ॥

षट्टिका बिलबाह्ये तु यवमानघनान्विता ।
बाह्ये वसुदलं पद्मं यवनिम्नं विचित्रकम् ॥ २८ ॥

वेदिकायास्तु परितः पट्टिका त्रियवा घनाः ।
बिलादर्शमुखात् खाता कनिष्ठाङ्गुलमानतः । २९ ॥

---

1 पाद्य

तारेणवाऽथ ताम्रेण नालं कृत्वा तु योजयेत् ।
पक्षांगुलप्रमाणेन पद्मागारन्तु गण्डिका ॥ ३० ॥

गण्डिकैकांगुला वृत्ता तन्नाहश्च द्विमात्रकम् ।
त्र्यंगुलेन दण्डोच्चं तस्यार्धं नाहमुच्यते ॥ ३१ ॥

तन्मूलैकांगुलाकारामंगुलद्वयमात्रतः ।
धर्मांगुलात्तु नाहं स्यात्तस्याधस्तात्तु पादयुक् ॥ ३२ ॥

वेदिकायास्त्वधःपद्मं पद्माकारं सकर्णिकम् ।
गजोष्ठसदृशाकारं तस्य पृष्ठाकृतिर्भवेत् ॥ ३३ ॥

एवं संग्राह्य तच्छेषं परित्यज्य दृढं तथा ।
स्रुग्लक्षणमिदं प्रोक्तं स्रुवो लक्षणमुच्यते ॥ ३४ ॥

द्वाविंशदङ्गुलं दैर्घ्यं दण्डनाहं षडङ्गुलं ।
मूलाद्ग्रीवान्तकं[1] यावत् त्र्यङ्गुलं ग्रीवनाहकम् ॥ ३५ ॥

मूलपञ्चाग्रनाहं स्यात् द्विबिलं नासिकाकृतिः ।
पूरितङ्कर्षकार्धेन बिलमानं प्रचक्षते ॥ ३६ ॥

पुष्कलाधः प्रकर्तव्यो गण्डिका द्वियवोन्नता ।
दक्षिणेन करेणैव या वक्रानामिकाङ्गुलिः ॥ ३७ ॥

अङ्गुष्ठस्य तु पार्श्वोर्ध्वे तर्जनीमध्यमांगुलिः ।
सङ्गताप्युच्छ्रिता बद्धा कनिष्ठांगुलिरुच्छ्रिता ॥ ३८ ॥

1 रं



दक्षिणेन करेणैव स्रुवेणैकेन होमयेत् ।
स्रुक्बिलं सर्पिषा तत्र पूरयित्वा बिलोपरि ॥ ३९ ॥

स्रुवाग्रेण तु मन्त्रेण पुटास्यञ्चविधाय च ।
उत्थानौ तु करौ कृत्वा वेणुग्रन्धन्तु कारयेत् ॥ ४० ॥

उच्छ्रितौ तर्जनीद्वे च कनिष्ठौ द्वौ तथैव च ।
वक्राङ्गुष्ठो स्रुवौ ग्राह्य द्वाभ्यां पूर्णाहुतिं हुनेत् ॥ ४१ ॥

लक्षणं स्रुक्स्रुवस्यैवं शृणु तोरणलक्षणम् ।
ध्वजदण्डार्हकैर्वृक्षैरन्तः सौरस्तु याज्ञिकैः ॥ ४२ ॥

भूतहस्तसमुत्सेधमुत्सेधार्धं विशालकम् ।
करप्रमाणं शूलस्य दीर्घनाहं रसांगुलम् ॥ ४३ ॥

कन्यसं तोरणं प्रोक्तं वक्ष्यतेतः परं क्रमात् ।
भूतहस्तं समारभ्य नवहस्तान्तकं क्रमात् ॥ ४४ ॥

तलमध्यन्तु तद्दैर्घ्यं तेषामर्धैकविस्तृतम् ।
तोरणानाञ्च सर्वेषां शूलं वै हस्तमात्रकम् ॥ ४५ ॥

तस्मातपक्षांगुलाधिक्यात् तेषां नाहं प्रचक्षते ।
नवधा तोरणं प्रोक्तमष्टमङ्गलमुच्यते ॥ ४६ ॥

याज्ञिकं वृक्षमादाय कारयेल्लक्षणान्वितम् ।
षोडशांगुलमायामं विस्तारन्तु तदर्धकम् ॥ ४७ ॥

पद्मासनमधस्तात्तु विस्तारार्धेन कारयेत् ।
श्रीवत्सं चामरं युग्मं दर्पणं स्वस्तिकं गजम् ॥ ४८ ॥

पूर्णकुम्भञ्चमायूरं दीपं स्यादष्टमङ्गलम् ।
मङ्गलाष्टौ द्विधा प्रोक्तमस्त्राणां लक्षणं शृणु ॥ ४९ ॥

वज्रं शक्तिञ्च दण्डञ्च खड्गं पाशं तथांकुशम् ।
गदा त्रिशूलं पद्मञ्च चक्रञ्चेति दशायुधम् ॥ ५० ॥

हैमराजतताम्रैर्वा अयसापादपेन वा ।
एतेष्वेकेन कर्तव्यं सर्वलक्षणसंयुतम् ॥ ५१ ॥

षोडशांगुलमायामं षडंगुलविशालकम् ।
तदर्धं घनमेवोक्तं निर्व्रणं सुदृढं ऋजुम् ॥ ५२ ॥

चतुरंगुलमूलेन मध्यमे गण्डिकात्रयम् ।
गण्डिकायाश्च नाहन्तु प्रत्येकं द्वादशाङ्गुलम् ॥ ५३ ॥

कृत्वाङ्गुलप्रमाणेन कृत्यं कृत्वा तदग्रके ।
अर्धाङ्गुलमाणेन पत्रतारं प्रकीर्तितम् ॥ ५४ ॥

पक्षत्रयद्वयं कुर्यात् अर्धचन्द्राकृतिर्यथा ।
मध्यपत्रमृजुं प्रोक्तं पत्रतारं यवद्वयम् ॥ ५५ ॥

पत्रतारेण मूलेन पादायामं प्रकीर्तितम् ।
द्विगुणं मध्यपादस्य पादायामं महामुने ॥ ५६ ॥



अर्धाङ्गुलप्रमाणेन पत्राणां तु [1]प्रकल्पयेत् ।
शेषं दण्डमिति प्रोक्तं नाहं तस्य नवांगुलम् ॥ ५७ ॥

एवं त्रिशूलं तस्याधस्तद्वच्छूलं प्रकीर्तितम् ।
वज्रस्य लक्षणं प्रोक्तं शक्तिलक्षणमुच्यते ॥ ५८ ॥

द्विकराङ्गुलमायामं विस्तारं चतुरङ्गुलम् ।
तदर्धं तु घनं मध्ये गण्डिका चतुरङ्गुलम् ॥ ५९ ॥

तदूर्ध्वे तदधः कुर्यात् त्र्यङ्गुलं मध्यपत्रवत् ।
शक्तिलक्षणमेवं स्यात् दण्डलक्षणमुच्यते ॥ ६० ॥

कलाङ्गुलसमायामं मूले वेदाङ्गुलेरितम् ।
गण्डिकां कारयेत् तस्य विस्तारं चतुरङ्गुलम् ॥ ६१ ॥

कृत्वाङ्गुलं भवेन्मुष्टि तन्नाहं कौशिकांगुलम् ।
कृत्वांगुलं तु विस्तारं तस्योर्ध्वे गण्डिकाङ्गुलम् ॥ ६२ ॥
ऊर्ध्वं रसांगुलं तारमधस्तात्तु युगांगुलम् ।
क्रमेण कृशतां कुर्यात् विस्तारार्धेन विस्तृतम् ॥ ६३ ॥
नाहन्तु दण्डमेवं स्यात् खड्गलक्षणमुच्यते ।
षोडशांगुलमायाममश्विन्यंगुलविस्तृतम् ॥ ६४ ॥

मध्येनैव तु तन्मध्ये पृष्ठे त्वश्रन्तु कारयेत ।
कञ्चुकन्तु षडंगुल्यं तद्विस्तारं यवद्वयम् ॥ ६५ ॥

1 घनं भवेत

युगांगुलेन कर्णन्तु तस्य नाहं गुणांगुलम् ।
अर्धांगुलन्तु फलका विस्तारं त्रियवं घनम् ॥ ६६ ॥

पुष्पमर्धांगुलं ज्ञेयं शेषं युक्त्या प्रकल्पयेत् ।
खड्गलक्षणमेवं स्यात् पाशलक्षणमुच्यते ॥ ६७ ॥

अयामं पूर्ववत् कृत्वा फलद्वयकृतांगुलिः ।
रसांगुलन्तु विस्तारं परस्परनिरीक्षितौ ॥ ६८ ॥

वेदांगुलन्तु तन्नाहं तदूर्ध्वे द्वादशांगुलम् ।
द्वयमर्धन्तु नाहं स्यात् कुशतः कुशमूलतः ॥ ६९ ॥

पाशस्य लक्षणं प्रोक्तं शृणुष्वांकुशलक्षणम् ।
मूलांगुलसमायामं तन्नाहन्तु षडंगुलम् ॥ ७० ॥

अग्रेऽङ्गुलेन मुकुलं मन्वंगुलप्रमाणकम् ।
तरुणेन्दुसमाकारं मुकुलाधः सुयोजयेत् ॥ ७१ ॥

एवमंकुशमाख्यातं गदालक्षणमुच्यते ।
षोडशांगुलमायाममष्टाश्रन्तु गदाकृतिः ॥ ७२ ॥

गण्डिकैकांगुलं मूले मुष्टिस्तु चतुरंगुलम् ।
तदूर्ध्वे गण्डिकांगुल्यं तदा शेषं प्रकीर्तितम् ॥ ७३ ॥

गदाया लक्षणं प्रोक्तं शृणु शूलस्य लक्षणम् ।
षोडशांगुलमायामं विस्तारन्तु षडङ्गुलम् ॥ ७४ ॥



वेदांगुलघनं प्रोक्तं वज्रशूलविधानतः ।
शूललक्षणमेवं स्यात् शृणु पद्मस्य लक्षणम् ॥ ७५ ॥

षडङ्गुलं तु मुकुलं तन्नालं त्र्यंगुलं भवेत् ।
दलाष्टकसमायुक्तं नालायामं दशांगुलम् ॥ ७६ ॥

रसांगुलं तु तन्नाहमेवं पद्मस्य लक्षणम् ।
चक्रस्य लक्षणं वक्ष्ये शृणु कौशिक सुव्रत ॥ ७७ ॥

आयामं पूर्ववत् प्रोक्तमष्टांगुलसुविस्तृतम् ।
मध्ये नाभसमायुक्तं षोडशारसमायुतम् ॥ ७८ ॥

एकांगुलविशालेन परितः पत्रमुच्यते ।
मूर्ध्नि पार्श्वे तु कर्तव्यं ज्वलतान्तं विशेषतः ॥ ७९ ॥

दण्डं तु शूलवत्कार्यं प्रोक्तं चक्रस्य लक्षणम् ।
एवं दशायुधं प्रोक्तं कूर्मासनविधिं शृणु ॥ ८० ॥

रुद्रांगुलसुविस्तारं तदर्धेनैव कारयेत् ।
श्रुत्यंगुलं घनं प्रोक्तं मूर्ध्नि भूतांगुलं भवेत् ॥ ८१ ॥

सप्तांगुलेन तन्नाहं मातांगुलेन कारयेत् ।
कूर्मासनमिदं प्रोक्तं खट्वाया लक्षणं शृणु ॥ ८२ ॥

चतुर्विंशांगुलं पादं श्रेष्ठं मानांगुलं भवेत् ।
मध्यमं षोडशांगुल्यमधमं द्वादशांगुलम् ॥ ८३ ॥

विंशत्यंगुलमानेन श्रेष्ठं पादस्य नाहकम् ।
मध्यमस्याधमस्यैव द्विद्व्यंगुलविहीनकम् ॥ ८४ ॥

मूलपादस्य विस्तारं शेषं युक्त्या प्रकल्पयेत् ।
शुभाङ्घ्रिकरपादं वा मृगेन्द्राभाङ्घ्रिरेव च ॥ ८५ ॥

षट्त्रिंशदंगुलायामं तारद्विगुणमुत्तमम् ।
कौशिकांगुलविस्तारं गुलिकान्यंगुलायतम् ॥ ८६ ॥

ईलितारं त्रिधा कृत्वा मध्यभागेन पट्टिका ।
कुर्यात्कपोतकं बाह्ये पट्टिका द्वियवेन तु ॥ ८७ ॥

अधः शूलस्य पत्रारै रक्तहारैव पिष्टयेत् ।
ईलिकाभ्यन्तरे चैव विन्यस्ता धातुना गला ॥ ८८ ॥

सुषिरेष्वद्भुतानां तु नाराचं योजयेद्बुधः ।
नाराचैश्च समायुक्तं कक्ष्या सङ्घर्षयेत् पुनः ॥ ८९ ॥

खट्वालक्षणमेवोक्तं लूखलस्य विधिं शृणु ।
विंशत्यंगुलमायाममुत्तमं परिकीर्तितम् ॥ ९० ॥

अष्टादशांगुलं मध्यं कन्यसं तु कलांगुलम् ।
आयामं त्रिगुणं कृत्वा तन्नाहं तु विधीयते ॥ ९१ ॥

चतुर्धा विभजेत्तारं त्रिभागं गर्तमुच्यते
उत्सेधात्यर्धमानेन ग्रीवामूलस्य नाहकम् ॥ ९२ ॥



ओष्ठं पञ्चाङ्गुलं प्रोक्तं मानस्य च विशेषतः ।
पादं पादांगुलाहीनं मध्यमस्याधमस्य तु ॥ ९३ ॥

लूखलस्यैवमाख्यातं मुसलस्य विधिं शृणु ।
सार्धत्रितालमधमं युगतालं तु मध्यमम् ॥ ९४ ॥

ःत्तमं भूततालं तु मुन्यष्टनवमात्रकम् ।
कन्यसादिपरीणाहं वृत्तं स्यात् पर्वतः समम् ॥ ९५ ॥

अधस्सार्धांगुलेनैव वेष्टयेन्मूलके दृढम् ।
एवं तु मुसलं प्रोक्तं शिबिकालक्षणं शृणु ॥ ९६ ॥

दारुसारमयेनैव मानांगुल्येन कारयेत् ।
षट्त्रिंशदंगुलन्तारं कन्यसस्य प्रकीर्तितम् ॥ ९७ ॥

अष्टचत्वारिमध्यं स्यात् षष्ठ्यंगुलमथोत्तमम् ।
विस्तारं द्विगुणं यामं पादोनद्विगुणं तु वा ॥ ९८ ॥

ईलिकायां तु विस्तारं श्रेष्ठस्य द्व्यंगुलं भवेत् ।
अंगुलांगुलहीनेन मध्यमस्य च यस्य तु ॥ ९९ ॥

तस्यार्धं द्विशतं प्रोक्तं मीलिकायां द्विजोत्तम ।
ईलितारं त्रिधा कृत्वा मध्यभागेन पट्टिका ॥ १०० ॥

भागेनैकेन तद्बाह्ये कारयेत्तु कपोतकम् ।
आयाममष्टधा कृत्वा भागं स्याद्भित्तिपादकम् ॥ १०१ ॥

कुम्भश्च वलयं चैव वृत्तकं चारुहीनकम् ।
ईलिकामध्ययोर्मध्ये चतुरश्रं कृतं तथा ॥ १०२ ॥

एकैकांशेन चोर्ध्वाया पट्टिकाद्वयमेव वा ।
मध्यमे तु द्विभागेन फलका चक्रशोभितम् ॥ १०३ ॥

ईलिकैर्जालकैश्चैव फलकैर्गुलकैरपि ।
नानापल्लिसमायुक्तं नानाक्रीडा समायुतम् ॥ १०४ ॥

तत्पूर्वमभितस्तेरुत्सेधाष्टांगुलं भवेत् ।
सिंहद्वयसमायुक्तं तदूर्ध्वे मकरास्यकम् ॥ १०५ ॥

बलाकासदृशं पादं तत्र सप्तांगुलोन्नतम् ।
अधः पट्टैश्च नाराचैर्दृढं कृत्वा द्विधा मतः ॥ १०६ ॥

वेणिकावेष्टनं वाऽपि फलकाबन्धनं नयेत् ।
शिबिकालक्षणं प्रोक्तं डोलालक्षणमुच्यते ॥ १०७ ॥

पादोर्ध्वे विन्यसेद्धीमान् मण्डपाकृतिमेव च ।
अश्वश्चैव मयूरश्च गजसारथ्यकर्मणे ॥ १०८ ॥

नानाचान्यानि सर्वाणि रथवत् कारयेत्क्रमात् ।
डोलाया लक्षणं प्रोक्तं दीपमालाविधिं शृणु ॥ १०९ ॥

अयसा वाऽथ ताम्रेण दारुभिर्दीपमालिका ।
द्वारेष्टं द्वारवत्कुर्यात् कुबेरश्रीप्रभाकृतिः ॥ ११० ॥



कारयेदन्यदेशे तु द्वारमानप्रमाणतः ।
सुस्निग्धान् सुदृढान् कृत्वा स्कन्धान् वेलाङ्गुलायतात् ॥ १११ ॥

त्रिभागैकं न्यसेद्दण्डे भूताङ्गुलमथान्तरम् ।
दीपमालाविधिः प्रोक्तः पुष्पमालाविधिं शृणु ॥ ११२ ॥

अशोकासननिम्बाश्च मधूकपनसासनाः ।
खदिरः शिंशुपाश्चाम्रचन्दनश्चम्पकः शुभाः ॥ ११३ ॥

अष्टतारप्रमाणेन विस्तारद्विगुणायतम् ।
वेदपादसमायुक्तं द्वादशांगुलदैर्ध्यकम् ॥ ११४ ॥

घनमष्टांगुलं प्रोक्तं ह्युत्सेधं कृतांगुलम् ।
दर्पणोदरसंकाशं कुर्यान्मानांगुलेन तु ॥ ११५ ॥

पुष्पाधारमिदं प्रोक्तं भेरिकालक्षणं शृणु ।
आयामं युगतालं स्यात् नाहं भूतयवं भवेत् ॥ ११६ ॥

रव्यंगुलं मुनिश्रेष्ठ मुखतारं प्रचक्षते ।
आरं घातसुवृत्तं स्याद्घनमर्धांगुलं भवेत् ॥ ११७ ॥

उभयोः पार्श्वयोर्वक्रं द्वयपट्टेन वेष्टयेत् ।
सप्तकीलसमायुक्तमाकारेण तु कारयेत् ॥ ११८ ॥

भेरीलक्षणमाख्यातं समिधां लक्षणं शृणु ।
द्वादशांगुलमायामं कनिष्ठाङ्गुलनाहकम् ॥ ११९ ॥

सार्द्रं सत्वसमाच्छेदसप्ररोहमनिन्दितम् ।
अवक्रं निर्व्रणं शुद्धं ब्राह्मणैरावृतं शुभम् ॥ १२० ॥

मूलेन मूलसंयुक्तमग्रेणाग्रसमायुतम् ।
समिधां लक्षणं प्रोक्तं परिधेर्लक्षणं शृणु ॥ १२१ ॥

आयामं परिधीनां तु सवेदांशदशांगुलम् ।
वीथ्यंगुलपरीणाहमपर्णमव्रणं समम् ॥ १२२ ॥

प्रोक्तं तु यत् समित्तेन परिधीध्मानि संग्रहेत् ।
परिधिर्लक्षणं प्रोक्तं दर्भाणां लक्षणं शृणु ॥ १२३ ॥

स्त्रीपुंनपुंसकाकारास्त्रिविधाः समुदाहृताः ।
मृदुः श्यामः स्त्रियः प्रोक्तास्त्रीणां कर्मसु योजयेत् ॥ १२४ ॥

ईषत्पक्षसमायुक्ता स्थिराः पुंलिङ्गका स्मृताः ।
पुंक्रियासु तथा योग्या स्थिराः कोमलवर्जिताः ॥ १२५ ॥

नपुंसका इति ख्याता न ग्राह्याः सर्वकर्मसु ।
सुच्छिन्नाग्रा सुभिन्नाग्रा खण्डिताः परिवर्जयेत् ॥ १२६ ॥

मूलस्थूलं भवेन्नारी अग्रस्थूलं नपुंसकम् ।
समं पुंलिङ्गमित्युक्तं विश्वामित्र महामुने ॥ १२७ ॥

दर्भाणां लक्षणं प्रोक्तं कूर्चानां लक्षणं शृणु ।
उत्तमं नवदर्भैस्तु सप्तदर्भैस्तु मध्यमम् ॥ १२८ ॥



कन्यसं पञ्चदर्भैस्तु ग्रन्थिरेकाङ्गुलं भवेत् ।
दक्षिणावर्तकं ग्रन्थिकूर्चाग्रं चतुरङ्गुलम् ॥ १२९ ॥

ग्रन्थ्यधस्तात्तदायामं रुद्रधर्मं नवाङ्गुलम् ।
कूर्चानां लक्षणं प्रोक्तं विष्टरस्य विधिं शृणु ॥ १३० ॥

सप्तदर्भसमायुक्तं ग्रन्थितं सव्यमार्गतः ।
रत्न्यङ्गुलं भवेन्मूलं ग्रन्थिरेकाङ्गुलं मतम् ॥ १३१ ॥

विष्टरस्य विधिः प्रोक्तो लम्बकूर्चविधिं शृणु ।
एकविंशतिदर्भैश्च ग्रन्थिरेकाङ्गुलं भवेत् ॥ १३२ ॥

ग्रन्थितद्दक्षिणावर्तं कूर्चाग्रं चतुरङ्गुलम् ।
मूर्ध्नादिपादपर्यन्तं लम्बितं यज्ञदायकम् ॥ १३३ ॥

लम्बकूर्चविधिः प्रोक्ता परिस्तरणमुच्यते ।
धर्मदर्भसमायुक्तं ग्रन्थिः पक्षाङ्गुलं भवेत् ॥ १३४ ॥

वेदाङ्गुलं तदग्रं स्यात् षट्त्रिंशदङ्गुलायतम् ।
परिस्तरणमाख्यातं दर्भमालाविधिं शृणु ॥ १३५ ॥

भूतवेदाग्निदर्भैर्वा व्योमहस्तं प्रलम्बितम् ।
कनिष्ठिकाङ्गुला नाहं रज्जुं कुर्यान्मनोरमैः ॥ १३६ ॥

दर्भमालाविधिः प्रोक्ता प्रोक्षणीकूर्चमुच्यते
सप्तविंशतिदर्भैश्च कलाङ्गुलसमायुतम् ॥ १३७ ॥

व्योमांगुलं भवेद्ग्रन्थिरग्रं वेदांगुलं भवत् ।
वेणी वा विष्टरं वाऽथ प्रोक्षणीकूर्चमीरितम् ॥ १३८ ॥

पवित्रलक्षणं वक्ष्ये शृणु कौशिक सुव्रत ।
कुशकाशपटीराश्च सुवर्णैस्त्रिभिरेव वा ॥ १३९ ॥

एकीकृत्याग्रतो दर्भानलूनमग्रमुद्रितम् ।
षोडशांगुलमायाममावर्तं वा समन्ततः ॥ १४० ॥

त्रिगुणीकृत्य रज्ज्वग्रं ग्रन्थिरेकांगुलं भवेत् ।
दक्षिणावर्तं कर्तव्यं तदग्रं चतुरंगुलम् ॥ १४१ ॥

अनामिकाया योक्तव्यमुभयोर्हस्तयोरपि ।
सपवित्रकरेणैव कुर्यादाचमनक्रिया ॥ १४२ ॥

नोच्छिन्नं तत् पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत् ।
सौवर्णं चेत् पवित्रं स्यादाज्येनोत्क्षणेन तु ॥ १४३ ॥

नाभेरनामिकायास्तु कुर्याद् वृत्तं समं यथा ।
पवित्रस्य विधिः प्रोक्ता पाद्यपात्रविधिं शृणु ॥ १४४ ॥

सौवर्णमुत्तमं प्रोक्तं मध्यमं रजतं भवेत् ।
अधमं ताम्रकांस्यं स्यान्मृन्मयंचाधमाधमम् ॥ १४५ ॥

तारे मूलांगुलं ज्ञेयमुत्सेधं तु युगांगुलम् ।
तत्पृष्ठेऽङ्घ्रिसमायुक्तं चतुरंगुलमानतः ॥ १४६ ॥



अर्धेनाधिकया युक्तं वेदांगुलसमायुतम् ।
पाद्यपात्रं समाख्यातं शृण्वाचमनपात्रकम् ॥ १४७ ॥

आदित्यांगुलमानेन कुक्षिविस्तारमुच्यते ।
अष्टत्रिंशतिमात्रेण नाहं कुक्षेस्तु मध्यमम् ॥ १४८ ॥

अग्न्यंगुलं गलोत्सेधं मार्गं व्योमांगुलं भवेत् ।
आस्यतारं त्रिमात्रं तु पार्श्वे घ्राणसमायुतम् ॥ १४९ ॥

पक्षांगुलसमायामं रन्ध्रं कनिष्ठिकासमम् ।
आर्धार्धांगुलमानेन पादं कुर्यात्तु पृष्ठके ॥ १५० ॥

यदाचमनपात्रं तदर्घ्यपात्रमथ शृणु ।
अर्घ्यपात्रं मया प्रोक्तं पालिकालक्षणं शृणु ॥ १५१ ॥

पालिकाष्टादशांगुल्यमुच्चं मात्रांगुलेन तु ।
पालिकामुखविस्तारं षोडशांगुलमुच्यते ॥ १५२ ॥

तदर्धं पादविस्तारं रसभागैककोष्ठकम् ।
विस्तारस्य त्रिभागैकं वर्तितं बिलमुच्यते ॥ १५३ ॥

एवं पात्रक्रमं प्रोक्तं शेषं दण्डं प्रकल्पयेत् ।
विस्तारस्य त्रिभागैकं दण्डविस्तारमुच्यते ॥ १५४ ॥

पालिकालक्षणं प्रोक्तं घटिकालक्षणं शृणु ।
घटिकाघटविस्तारमष्टांगुलमुदाहृतम् ॥ १५५ ॥

पालिकापात्रवत्कुर्यात् दण्डं वै चतुरंगुलम् ।
पञ्चवक्त्रसमायुक्तं घटिकां कारयेद्बुधः ॥ १५६ ॥

घटिकालक्षणं प्रोक्तं शरावमधुनोच्यते ।
शरावमुखविस्तारमादित्यांगुलमुच्यते ॥ १५७ ॥

तदर्धं पादविस्तारमुत्सेधं वसुमात्रकम् ।
नाहं स्यात् पालिकादीनां विस्तारार्धेन वर्धितम् ॥ १५८ ॥

कालं भिन्नं च सुषिरं भेदं छेदं मलीनकम् ।
निर्दग्धं च पुराणं च विशेषेण विवर्जयेत् ॥ १५९ ॥

शरावलक्षणं प्रोक्तं गन्धपात्रं ततः शृणु ।
अष्टांगुलं तद्विस्तारं वेदांगुलसमुच्छ्रयम् ॥ १६० ॥

गन्धपात्रं समाख्यातं पुण्यपात्रमथ शृणु ।
विंशत्यंगुलमायामं वस्वंगुलसमुच्छ्रयम् ॥ १६१ ॥

नालं पञ्चांगुलं कुर्यादुभयोः पार्श्वयोरपि ।
तन्मानं पादविस्तारं पिधानकवचान्वितम् ॥ १६२ ॥

द्रव्यालाभे मुनिश्रेष्ठ वस्त्रेणैव तु कारयेत् ।
पुष्पपात्रं समाख्यातमाज्यपात्रविधिं शृणु ॥ १६३ ॥

वेदांगुलसमुत्सेधं विस्तारन्तुषडंगुलम् ।
अर्धांगुलेन तस्योष्ठमेतद्धि घृतपात्रकम् ॥ १६४ ॥



घृतस्य पात्रमेवं स्यात् प्रणीतापात्रमुच्यते ।
पञ्चावृताङ्गुलन्तारं सार्धाग्न्यङ्गुलमुच्छ्रयम् ॥ १६५ ॥

प्रणीतापात्रमेवं स्यात् प्रोक्षणीपात्रमुच्यते ।
पञ्चाङ्गुलन्तु विस्तारं रुद्राङ्गुलसमुच्छ्रयम् । १६६ ॥

प्रोक्षणीपात्रमेवं स्यात् स्कन्दकुम्भविधिं शृणु ।
त्रीण्यङ्गुलप्रविस्तारं रुद्राङ्गुलसमुन्नतम् ॥ १६७ ॥

आस्यं वेदाङ्गुलं ज्ञेयं कर्णायामं तथाङ्गुलम् ।
व्योममेकाङ्गुलं प्रोक्तमर्धाङ्गुलन्तु निर्गमम् ॥ १६८ ॥

गले त्रिरेखा कर्तव्या पक्वबिम्बफलप्रभम् ।
कलङ्करहितं स्निग्धं सर्वदोषविवर्जितम् ॥ १६९ ॥

स्कन्दकुम्भमिति प्रोक्तं वर्धनीलक्षणं शृणु ।
रन्ध्राङ्गुलप्रविस्तारं वर्धनीजठरस्य तु । १७० ॥

अब्ध्यङ्गुलसमुत्सेधं वक्त्रमग्न्यङ्गुलं मतम् ।
अश्विन्यङ्गुलमोष्ठं स्यात् पार्श्वे नालाङ्कुरायतम् ॥ १७१ ॥

उत्पलाकृतिवत्कार्यं सार्धाङ्गुलप्रमाणतः ।
अर्धाङ्गुलोच्छ्रयं ग्रीवमङ्गुलीयोष्ठनिर्गमम् ॥ १७२ ॥

वर्धनीलक्षणं प्रोक्तं कुम्भानां लक्षणं शृणु ।
रुद्राङ्गुप्रविस्तारमोष्ठं व्योमाङ्गुलं भवेत् ॥ १७३ ॥

सार्धाङ्गुलं गलोत्सेधं त्रियवं तस्य निर्गमम् ।
कुम्भानां लक्षणं प्रोक्तं कलशानां ततः शृणु ॥ १७४ ॥

सप्ताङ्गुलप्रविस्तारमुत्सेधं चतुरङ्गुलम् ।
ग्रीवमर्धाङ्गुलोत्सेधमोष्ठं तत्सममेव तु ॥ १७५ ॥

त्र्यङ्गुलश्चास्यविस्तारं यवमोष्ठस्य निर्गमम् ।
शेषं युक्त्या प्रकर्तव्यं पक्वबिम्बफलोपमम् ॥ १७६ ॥

कलशस्य विधिः प्रोक्ता कुण्डिकालक्षणं शृणु ।
वेदाङ्गुलं तद्विस्तारं दैर्घ्यमन्यङ्गुलं भवेत् ॥ १७७ ॥

सार्धांगुलं तस्य तारं मध्यमर्धांगुलं भवेत् ।
पादांगुलं गलोत्सेधं पार्श्वे घ्राणसमन्वितम् ॥ १७८ ॥

व्योमांगुलप्रमाणेन पादमोष्ठे प्रकल्पयेत् ।
कुण्डिकालक्षणं प्रोक्तं हविःपात्रविधिं शृणु ॥ १७९ ॥

तस्य कुक्षेस्तु विस्तारं धर्मांगुलमुदाहृतम् ।
अष्टांगुलसमुत्सेधं कर्णोत्सेधमथांगुलम् ॥ १८० ॥

कर्णव्योमांगुलं प्रोक्तमास्यतारं रसांगुलम् ।
शेषं युक्त्या प्रकर्तव्यं तत्पचेदाढकं मुने ॥ १८१ ॥

यावत्पचेच्छिवद्रोणं तावन्मात्रं प्रकल्पयेत् ।
हविःपात्रविधिः प्रोक्तं उपदंशस्य पात्रकम् ॥ १८२ ॥



उदरस्य प्रविस्तारमष्टांगुलमुदाहृतम् ।
युगाङ्गुलसमुत्सेधं कण्ठमेकाङ्गुलं भवेत् ॥ १८३ ॥

आस्यतारं षडङ्गुल्यमोष्ठमेकांगुलं भवेत् ।
एतस्यादुपदंशाय पिधानस्य विधिं शृणु ॥ १८४ ॥

पात्रस्य तारं यावत्तु तावत्कुर्यात्पिधानकम् ।
पिधानस्य विधिः प्रोक्ता दर्व्या लक्षणमुच्यते ॥ १८५ ॥

द्वादशांगुलमायामं तद्दैर्घ्यं पञ्चधा भवेत् ।
अत्यर्धांशेन पुच्छांशात् पक्षांशेनाग्रमुच्यते ॥ १८६ ॥

त्र्यङ्गुलं पुच्छतारं वा वक्त्रतारं शरांगुलम् ।
व्योमांगुलप्रमाणेन मध्यतारं विधीयते ॥ १८७ ॥

अर्धाङ्गुलन्तु हीनं स्यान्मध्यमस्य तु चैव हि ।
दर्व्या लक्षणमाख्यातं स्थालिकालक्षणं शृणु ॥ १८८ ॥

कन्यसं कांस्यसंभूतं राजतं मध्यमं भवेत् ।
हैमजं चोत्तमं प्रोक्तं वृत्ताकारं सुशोभनम् ॥ १८९ ॥

द्वादशांगुलमारभ्य द्वित्र्यङ्गुलविवर्धनात् ।
षट्त्रिंशदंगुलान्तं च कन्यसादित्रयं त्रयम् ॥ १९० ॥

तद्द्वयं चोष्ठविस्तारमुत्सेधं तत्समं भवेत् ।
वेत्रं यवद्वये तु स्यात् अधमस्याधमस्य तु ॥ १९१ ॥

यवैकेन विवृद्ध्या तु यावद्दशयवान्तिकम् ।
स्थालिकानां नवानाञ्च वेत्रोत्सेधं प्रकीर्तितम् ॥ १९२ ॥

कांस्यादुक्तं मध्यमानं विंशदूर्ध्वशतं पलम् ।
स्वर्णेन रजतेनैव यथालाभं प्रकल्पयेत् ॥ १९३ ॥

स्थालिकालक्षणं प्रोक्तं त्रिपादीलक्षणं शृणु ।
चतुर्थाच्छङ्खपादी च बलिपादी त्रिपादिका ॥ १९४ ॥

यावन्मानं तु पीठोच्चं तावदुच्चत्रिपादिकं ।
कर्तव्यं स्थालिकापादं लक्षणेन विशेषत: ॥ १९५ ॥

उच्चं युगांगुलं ज्ञेयं तच्चतुर्गुणमायतम् ।
ईषत् त्रिभङ्गिकापादं पक्षांगुलं तु नाहकम् ॥ १९६ ॥

मृगराट्पादवन्मूले वक्त्रपादानि कीर्तिता: ।
शरांगुलन्तु विस्तारमुत्सेधं पर्वतांगुलम् ॥ १९७ ॥

अग्निपादसमायुक्तं त्रिवर्गांगुष्ठनाहकम् ।
शरावाकृतिवन्मूले शेषं युक्त्या प्रकल्पयेत् ॥ १९८ ॥

त्रिपादीलक्षणं प्रोक्तं पाद्याधारविधिं शृणु ।
चतुरंगुलमायामं पत्रद्वयसमन्वितम् ॥ १९९ ॥

तस्याध: सिंहपादं च शेषं युक्त्या प्रकल्पयेत् ।
पात्रं निधाय तस्योर्ध्वे तस्मिन् पात्रादिकं ददेत् ॥ २०० ॥



पाद्यनचमनाधारविधिं शृणु महामुने ।
कलांगुलसमायामं मुखवारसमं भवेत् ॥ २०१ ॥

ओष्ठमेकांगुलम् प्रोक्तं धुत्तूरकुसुमोपमम् ।
ऊर्ध्वकायमिदं प्रोक्तं दण्डायामं नवांगुलम् ॥ २०२ ॥

अग्न्यंगुलं तु विस्तारं द्विगुणं पादविस्तरम् ।
गण्डिकात्रयसंयुक्तं दण्डं कुर्याद्विचक्षण: ॥ २०३ ॥

न वर्जयेत् तले तस्मिन् पात्रे त्वाचमनोदकम् ।
प्रोक्तमाचमनाधारं जलाधारविधिं शृणु ॥ २०४ ॥

चतुर्विंशत् त्रयं तु स्याद्विस्तारमुदरस्य तु ।
विंशदंगुलमुत्सेधमास्यातारं कलाङ्गुलम् ॥ २०५ ॥

ओष्ठं पक्षाङ्गुलं ज्ञेयं तस्याधस्तात् त्रिरेखया ।
यवत्रयप्रमाणेन कुर्यादुदरबन्धनम् ॥ २०६ ॥

विस्तारमुदयं सर्वमेवं क्रमेण कारयेत् ।
पाद्यपात्राणि सर्वाणि कुर्यान्मानाङ्गुलेन तु २०७ ॥

जलधारविधि: प्रोक्ता रङ्गस्य च विधिं शृणु ।
क्षौमपट्टैर्दुकूलैर्वा कुर्यात् कार्पाससाटिभि: ॥ २०८ ॥

दशवक्त्रयुतं वाऽपि रविवक्त्रयुतं तु वा ।
रन्ध्रवक्त्रयुतं वाऽपि चास्यरज्जुसमन्वितम् ॥ २०९ ॥

महावास्तुसमायुक्तं नानारूपसमायुतम् ।
एवं तु रङ्गमाख्यातं स्तम्भवेष्टनमुच्यते ॥ २१० ॥

गात्रमानसमं वस्त्रं पद्माकारे परं मतम् ।
एकवर्णेन युक्तं वा निश्छिद्रं तेन वेष्टयेत् ॥ २११ ॥

स्तम्भवेष्टनमाख्यातं वितानमधुनोच्यते ।
पङ्क्तिमानसमायामं विस्तारमपि तत्समम् ॥ २१२ ॥

पद्माकारं विधातव्यं नानारूपयुतं तु वा ।
दुकूलं पट्टवाङ्गैः कुर्यात् कार्पासकेन वा ॥ २१३ ॥

वितानलक्षणं प्रोक्तं पताकालक्षणं शृणु ।
विंशदंगुलविस्तारमायामं त्रिंशदंगुलम् ॥ २१४ ॥

विस्तारेण समं पुच्छं तस्यार्धं शिखरं भवेत् ।
चतुःपुच्छं त्रिपुच्छं वा पुच्छद्वयमथापि वा ॥ २१५ ॥

पार्श्वे कलियुगायुक्तं पोत्रत्रयसमावृतम् ।
नवाष्टसप्तहस्तं वा शेषं ध्वजवदीरितम् ॥ २१६ ॥

ध्वजलक्षणमाख्यातं क्षुद्रध्वजविधिं शृणु ।
पादांगुलं तु विस्तारं द्वादशांगुलदैर्ध्यकम् ॥ २१७ ॥

वेत्रद्वयसमायुक्तं शेषं कुर्यात्तु केतुवत् ।
शिखरो रज्जुसंयुक्तं वेणुदण्डं प्रलम्बयेत् ॥ २१८ ॥



ध्वजानां लक्षणं प्रोक्तं छत्रलक्षणमुच्यते ।
चतुर्मुखप्रविस्तारं समवृत्तमधोमुखम् ॥ २१९ ॥

आधारं वैणवेनैव तन्तुभिर्वर्धयेत् क्रमात् ।
वस्त्रेण वेष्टयेत्सर्वं मुक्तादामैश्च रत्नकैः ॥ २२० ॥

मकुटैः स्वर्णपट्टैश्च भूषयेद् भूषणार्हकैः ।
उत्तमं रत्नखचितं दुकूलाद्यैस्तु मध्यमम् ॥ २२१ ॥

वस्त्रेणैवाधमं प्रोक्तं तालपत्रं महामुने ।
बाणाग्निरसतालैर्वा नालायामं प्रकीर्तितम् ॥ २२२ ॥

छत्रलक्षणमाख्यातं पिञ्छलक्षणमुच्यते ।
मयूरपिञ्छैः कर्तव्यं विस्तारं त्रियवं भवेत् ॥ २२३ ॥

वस्त्रेण वेष्टयेत् सर्वं पुनः पिञ्छेन वेष्टयेत् ।
आधारमयसा कृत्वा हैमेन मकुटं तथा ॥ २२४ ॥

शेषं युक्त्या प्रकर्तव्यं नालं स्याच्छत्रनालकम् ।
पिञ्छलक्षणमेवोक्तं चामरस्य विधिं शृणु ॥ २२५ ॥

स्वर्णेन रजतेनैव दन्तिदन्तेन दारुणा ।
शुल्बेन वाऽथ मतिमान् दण्डं कुर्यान्महामुने ॥ २२६ ॥

चतुर्विंशदंगुलायामं दण्डनाहं शरांगुलम् ।
नानापङ्क्तिसमायुक्तं नानागण्डिसमायुतम् ॥ २२७ ॥

चमरीवालसंयुक्तं यथाशोभं तु कारयेत् ।
चामरस्य विधिः प्रोक्ता मयूरव्यजनं शृणु ॥ २२८ ॥

दण्डं तु पूर्ववत् प्रोक्तं शिखिपिञ्छं तु योजयेत् ।
अलङ्कारेण मतिमान् शेषं युक्त्या प्रकल्पयेत् ॥ २२९ ॥

मयूरव्यजनं प्रोक्तं दुकूलव्यजनं शृणु ।
षोडशांगुलविस्तारं वेणत्रेनैव वर्तुलम् ॥ २३० ॥

क्षौमदेवाङ्गपटटैर्वा दुकूलेनाथ वेष्टयेत् ।
त्रियंगुलं दण्डनाहं षट्त्रिंशदंगुलायतम् ॥ २३१ ॥

नानातन्तुसमायुक्तं दण्डमात्रं विचित्रयेत् ।
दण्डाग्रं तु यथा कृत्वा शेषं युक्त्या प्रकल्पयेत् ॥ २३२ ॥

दुकूलव्यजनं प्रोक्तं उष्णीषस्य विधिं शृणु ।
सप्तषट्पञ्चहस्तांशं पञ्चपाकैकविस्तृतम् ॥ २३३ ॥

सुश्लक्ष्णं सुदृशं सूक्ष्मं शिरोरोमविवर्जितम् ।
शिरसा चिबुकेनैव कर्णाभ्यामपि वेष्टयेत् ॥ २३४ ॥

पुच्छं वै वामकर्णान्ते वेष्टयेत्तु प्रदक्षिणम् ।
एवं संवेष्ट्य मतिमान् शेषं शिरसि वेष्टयेत् ॥ २३५ ॥

उष्णीषविधिराख्यात उत्तरीयविधिं शृणु ।
बाणहस्तायतं वाऽपि वेदहस्तायतं तु वा ॥ २३६ ॥



तालमात्रं प्रविस्तारं बन्धयेत्तु द्विपुच्छकम् ।
यज्ञोपवीतवद्बद्ध्वा उत्तरीयं विशेषतः ॥ २३७ ॥

यजने स्थापने चाग्निकार्ये शैवोत्सवे जपे ।
उष्णीषमुत्तरीयञ्च धारयेद्देशिकोत्तमः ॥ २३८ ॥

उत्तरीयलक्षणं प्रोक्तं वस्त्रलक्षणमुच्यते ।
देवाङ्गक्षौमकं वाऽपि नेत्रं कार्पासजन्तु वा ॥ २३९ ॥

उत्तमं मनुहस्तं स्याद्रविहस्तन्तु मध्यमम् ।
अधमं दशहस्तं स्यात् पञ्चतालन्तु विस्तृतम् ॥ २४० ॥

उत्तमं रक्तवर्णं स्यादलाभेऽन्यत्प्रगृह्यताम् ।
स्निग्धं सुश्लक्ष्णकं नव्यं सिरारोमविवर्जितम् ॥ २४१ ॥

जीर्णन्तु वह्निदग्धन्तु वर्जयेदाखुदष्टकम् ।
वस्त्रलक्षणमित्येवं स्यात्पञ्चशयनं शृणु ॥ २४२ ॥

चर्मजं रोमजं चैवमुण्डजञ्चाण्डजं पुनः ।
वामजं चैव पञ्चैते शयनं संप्रकल्पयेत् ॥ २४३ ॥

खट्वाया मञ्चविस्तीर्णमायामन्तु सुविस्तृतम् ।
उत्सेधकं हस्तमात्रं प्रावृणीं व्याघ्रचर्मणा ॥ २४४ ॥

पूरितं तूलिकेनैव चर्मजं चेति कीर्तितम् ।
आयामं पूर्ववत्कुर्याद्द्रोमैः कृष्णमृगोद्भवैः ॥ २४५ ॥

संपूरितञ्च यत्तल्पं रोमजं चेति कीर्तितम् ।
पूर्वोक्तलक्षणोपेतं वस्त्रेणावरणं तथा ॥ २४६ ॥

शल्मली तूलसंपूर्णं मुण्डजं चेति कीर्तितम् ।
पूर्वोक्तलक्षणोपेतं देवांगैः पञ्चरं मतम् ॥ २४७ ॥

हंसरोमेण संपूर्णमण्डजं परिकीर्तितम् ।
सुश्लक्ष्णं सुसितं सूक्ष्मं कार्पासेनैव कल्पितम् ॥ २४८ ॥

उपरिस्तरणं यत्तत् वामजं चेतिकीर्तितम् ।
उपर्युपरिकर्तव्यं तत्पञ्चशयनं स्मृतम् ॥ २४९ ॥

आख्यातं पञ्चशयनमुपधानविधिं शृणु ।
षट्त्रिंशदंगुलायामं नाहं तत्त्रिगुणं भवेत् ॥ २५० ॥

हंसरोमेण संपूर्णं देवांगेन तु पञ्चरम् ।
कार्पाससंभवेनैव कुर्यादुपरि वेष्टनम् ॥ २५१ ॥

उपधानं पाणिपद्भ्यां यथायुक्तं प्रकल्पयेत् ।
उपधानविधिः प्रोक्ता कक्ष्या लक्षणमुच्यते ॥ २५२ ॥

अग्न्यङ्गुलन्तु विस्तारमश्विन्यङ्गुलमेव च ।
कार्पासेनैव कर्तव्यं यावत्खट्वा प्रवेष्टनम् ॥ २५३ ॥

कक्ष्या लक्षणमाख्यातं प्रच्छन्नपटमुच्यते ।
द्वारयामसमं दीर्घं विस्तारद्वारविस्तृतम् ॥ २५४ ॥



द्वारमानेन कर्तव्यं पदव्याधारदण्डकम् ।
शक्ति मयूरयूथञ्च लाञ्छनस्य तु चैव हि ॥ २५५ ॥

प्रच्छन्नपटमाख्यातं धूपपात्रविधिं शृणु ।
हैमेन राजतेनैव ताम्रेण त्रपुणाऽथवा ॥ २५६ ॥

वेदांगुलन्तु विस्तारं पात्रोत्सेधं तदर्धकम् ।
ओष्ठमर्धांगुलं प्रोक्तं बाह्ये पद्मदलान्वितम् ॥ २५७ ॥

श्रीवस्यादौ द्विपादन्तु पादायामं द्विमात्रकम् ।
अब्ध्यंगुलसमायामं नाहं पक्षांगुलं भवेत् ॥ २५८ ॥

दण्डपुच्छं पञ्चपादं कारयेदिति पूर्ववत् ।
पक्षांगुलन्तु विस्तारं नानावलिसमन्वितम् ॥ २५९ ॥

अग्न्यंगुलं पिधानोच्चमनेकं सुषिरान्वितम् ।
कारयेन्मुकुलाकारं शेषं बुद्ध्या प्रकल्पयेत् ॥ २६० ॥

धूपपात्रविधिः प्रोक्ता धूपघण्टाविधिं शृणु ।
बाणांगुलन्तु विस्तारमुत्सेधं तत्समं भवेत् ॥ २६१ ॥

त्रियवश्चोष्ठविस्तारं तन्निर्यूहश्चतुर्गुणम् ।
उपपट्टिकया युक्तं मात्रेण शिखरान्वितम् ॥ २६२ ॥

चतुर्यवङ्गलोत्सेधं जिह्वा वेदांगुलायुतम् ।
घण्टायामञ्च तन्नाहं विस्तारेणैव वर्णितम् ॥ २६३ ॥

अग्न्यंगुलेन दण्डोच्चं नाहं तत्सममेव वा ।
दण्डस्याग्रे गजं वाऽपि वज्रं वा शक्तिमेव वा ॥ २६४ ॥

मूलं वा मकुटं वाऽपि नलिनं तस्य कल्पयेत् ।
शेषं युक्त्या प्रकर्तव्यं शुद्धकांस्येन सुव्रत ॥ २६५ ॥

कृत्वा नैवेद्य काले तु बलिकाले विशेषतः ।
धूपदीपप्रदाने च होमकाले च घोषयेत् ॥ २६६ ॥

धूपघण्टाविधिः प्रोक्ता दीपपात्रविधिं शृणु ।
धूपपात्रवदाकारं विशेषात् किञ्चिदस्ति हि ॥ २६७॥

अग्न्यंगुलप्रविस्तारमायामन्तु शरांगुलम् ।
अश्वत्थपत्रवत्कुर्यात् ओष्ठोच्चं त्रियवं भवेत् ॥ २६८ ॥

मध्यं नाभिसमायुक्तं मुकुलं चैव कल्पयेत् ।
तदेकं दीपपात्रं स्यात् पञ्चदीपयुतंतु वा ॥ २६९ ॥

दीपपात्रविधिः प्रोक्ता वक्ष्ये नीराजनस्य तु ।
सौवर्णं राजतं ताम्रं श्रेष्ठं मध्यकनिष्ठकम् ॥ २७० ॥

षट्त्रिंशदङ्गुलायामं वृत्ताकारमनुत्तमम् ।
तस्मात्षडङ्गुलं हीनं मध्यमं पात्रमिष्यते ॥ २७१ ॥

हस्तमात्रप्रविस्तारं कन्यसं पात्रमिष्यते ।
कर्णिकाञ्च त्रिभागैकं तत्पञ्चांशैकमुच्छ्रयम् ॥ २७२ ॥



यवद्वयविशालेन परितः पट्टिका तथा ।
उत्सेधं तत्समं ज्ञेयं तद्बाह्येऽष्टदलं भवेत् ॥ २७३ ॥

ओष्ठन्तु परितः कुर्यात कर्णिकोच्छ्रयमानतः ।
एवं कृत्वा मुनिश्रेष्ठ पूर्णचन्द्रसमप्रभम् ॥ २७४ ॥

युगाङ्गुलसमुत्सेधं दीपाधारं घटोपमम् ।
अश्विन्यङ्गुलमायामं घटवत्तस्य कीर्तितम् ॥ २७५ ॥

प्रोक्तं पक्षाङ्गुलं रन्ध्रं कर्णिकामध्यमं युतम् ।
दीपाधारमथाष्टाश्रं योजयेत्तु दलं प्रति ॥ २७६ ॥

रन्ध्राधारशताधारमेकाधारमथापि वा
मध्ये चैव महेशास्युर्दीपाधाराणि कल्पयेत् ॥ २७७ ॥

अग्न्यङ्गुलोच्चमानेन पृष्ठे पादं प्रकल्पयेत् ।
पात्रं नीराजनायेदं महाघण्टाविधिं शृणु ॥ २७८ ॥

शुद्धकांस्येन कर्तव्यं विस्तारं पर्वताङ्गुलम् ।
सुषिरेण समायुक्तं चतुर्वर्णसमायुतम् ॥ २७९ ॥

तारार्धवर्धनं नाहं जिह्वारन्ध्राङ्गुलायतम् ।
शिखरं वलयोपेतं शेषं युक्त्या प्रकल्पयेत् ॥ २८० ॥

महाघण्टाविधिः प्रोक्ता दर्पणस्य विधिं शृणु ।
त्रिद्व्यङ्गुलप्रविस्तारं पूर्णचन्द्राकृतिर्भवेत् ॥ २८१ ॥

नालं वस्वङ्गुलं ज्ञेयं पादं वेदाङ्गुलं भवेत् ।
नानापट्टिकसंयुक्तं शुद्धकांस्येन कारयेत् ॥ २८२ ॥

एतद् विस्तारमुदितं विस्तारार्धेन वर्धयेत् ।
उत्तमं दर्पणस्यैवमर्धपञ्चाङ्गुलान्तकम् ॥ २८३ ॥

नवमानं प्रकर्तव्यमुत्तमादित्रयं त्रयम् ।
दर्पणस्य विधिः प्रोक्ता विश्वामित्र महामुने ॥ २८४ ॥

इति श्रीकुमारतन्त्रे करणलक्षणविधिर्नाम पञ्चत्रिंशः पटलः

---

## षट्त्रिंशः पटलः

### अथ पादुकाप्रोक्षणविधिः

पादुकाप्रोक्षणं वक्ष्ये शृणु कौशिक सुव्रत ।
अनुग्रहाय मर्त्यानां पापनाशार्थमेव च ॥ १ ॥

[1]भजनोत्सेधयात्रायां पूजनार्थं प्रवक्ष्यते ।
ध्रुवं च स्नपनं चैव बलिबेरञ्च कौतुकम्

उत्सवं यानबेरञ्च चलबेरञ्च पञ्चधा ।
एतेषां पादमानेषु यदिष्टं तत्प्रगृह्यताम् ॥ ३ ॥

त्रिमात्राद्यर्धवृद्धया तु सप्तांगुलसमावधि ।
नवमानमिदं प्रोक्तं कन्यसादित्रयं त्रयम् ॥ ४ ॥

1 भजनोत्सव



आयामस्यार्धमुदितं पादुकाग्रस्य विस्तरम् ।
षडष्टांशेन मध्यान्तमायामं युगभागकैः ॥ ५ ॥

एकभागं भवेदष्टगुणांशे द्व्यंशकं घनम् ।
शेषमूर्ध्वदलं प्रोक्तं युक्त्यैव परिकल्पयेत् ॥ ६ ॥

अंगुष्ठोच्चतलोत्थस्य चतुर्भागं त्रिभागकम् ।
चतुरंशे युगांशं तु नालशेषं तु पूर्ववत् ॥ ७ ॥

अंगुष्ठोच्चसमं पुष्पं विस्तारं मुकुलान्वितम् ।
पुष्पोन्नते त्रिभागैकं मुकुलञ्चारयेद् द्विज ॥ ८ ॥

उत्तमं काञ्चनेनैव मध्यमं रजतेन तु ।
ताम्रेणैवाधमं प्रोक्तं कांसाद्येनाधमाधमम् ॥ ९ ॥

पादुकाञ्च यथाशोभं तथा युक्त्या प्रकल्पयेत् ।
एवं लक्षणमाख्यातं प्रोक्षणञ्च ततः शृणु ॥ १० ॥

पुण्यर्क्षतिथिवारे च मण्डपस्यैव मध्यमे ।
पुण्याहं वाचयेत्तत्र प्रोक्षयित्वास्त्रमन्त्रतः ॥ ११ ॥

स्थण्डिलं कल्पयेद्विद्वान् तिलतण्डुलशालिभिः ।
नववस्त्रमथास्तीर्य पादुकां पञ्चगव्यकैः ॥ १२ ॥

क्षालयित्वाष्टमृद्भिस्तु शुद्धोदैः स्कन्दमन्त्रतः ।
परिस्तीर्य तथा दर्भैर्हृदयेन तु मन्त्रतः ॥ १३ ॥

1 तलोच्चस्य

वस्त्रोपरिन्यसेद्धीमान् पादुकां वर्ममन्त्रतः ।
नववस्त्रेण संछाद्य पादुकाग्रे यथाविधि ॥ १४ ॥

मयूरकुम्भं संस्थाप्य परितोऽष्टघटान्न्यसेत् ।
ससूत्रान् सापिधानांश्च सवस्त्रान् वारिपूरितान् ॥ १५ ॥

सकूर्चान् सहिरण्यांश्च कल्पयेत्कल्पवित्तमः ।
मयूरबीजमावाह्य मध्यकुम्भे समर्पयेत् ॥ १६ ॥

इन्द्रादिलोकपालांश्च पूर्वाद्यष्टघटे यजेत् ।
धेनुमुद्रां प्रदर्श्याथ तत्पृष्ठे सिकतैः कृतैः ॥ १७ ॥

स्थण्डिलं विधिवत्कृत्वा होमद्रव्याणि गृह्य च ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ १८ ॥

समिदाज्यचरून् लाजान् तिलान्सद्यादिमन्त्रतः ।
होमयेत्तु विशेषेण प्रत्येकं पञ्चविंशतिः ॥ १९ ॥

मयूरमूलमन्त्रेण घृतेनाष्टोत्तरं शतम् ।
सर्वद्रव्यसमायुक्तं हव्यवाहे च होमयेत् ॥ २० ॥

प्रभाते सुमुहूर्ते तु कुम्भान्यभ्यर्च्य मन्त्रवित् ।
जयादिरभ्याधानञ्च राष्टभृच्च क्रमाद्धुनेत् ॥ २१ ॥

आचार्यं पूजयेत्कर्ता वस्त्रभूषणकाञ्चनैः ।
मयूरबीजमन्त्रेण कुम्भान्तात पादुकाद्वये ॥ २२ ॥



न्यसेदिन्द्रादिबीजानि तयोः पूर्वादिषु न्यसेत् ।
तत्तत्कुम्भस्थतोयेन तत्तद्देशेऽभिषेचयेत् ॥ २३ ॥

मयूरमन्त्रादभ्यर्च्य मुद्गान्तं दापयेत्सुधीः ।
एवं यः कुरुते मर्त्यः सर्वान्कामानवाप्नुयात् ॥ २४ ॥

इति श्रीकुमारतन्त्रे पादुकाप्रोक्षणविधिर्नाम षट्त्रिंशः पटलः

---

## सप्तत्रिंशः पटलः

### आत्मार्थयजनविधिः

आत्मार्थयजनं वक्ष्ये शृणुष्व मुनिपुङ्गव ।
ये ये ग्रहाः समुच्चानि तेषामिष्टप्रदं शुभम् ॥ १ ॥

धर्मार्थकाममोक्षार्थमात्मार्थयजनं स्मृतम् ।
स्कन्दपूजां विना पुंसां पुत्रवृद्धिः कथं भवेत् ॥ २ ॥

प्रतिमां तु पटे वाऽपि मण्डले स्थण्डिलेऽपि वा ।
जले वा हृदये वाऽपि नित्यं संपूजयेद्गुहम् ॥ ३ ॥

एकांगुलादिभूतान्तमात्मार्थमिति कीर्तितम् ।
मात्रांगुलेन कर्तव्यं यजमानं चरस्य तु ॥ ४ ॥

आयादिशुभवर्गाणि यवैर्वाथ परीक्षयेत् ।
उत्तमं काञ्चनेनैव मध्यमं रजतेन तु ॥ ५ ॥

शिलाया वाऽथ ताम्रेण कन्यसं परिकीर्तितम् ।
मृन्मयं दारुजं चैव न ग्राह्यन्तु गृहार्चने ॥ ६ ॥

आसनं स्थानकं वाऽपि वाहनादिकमेव च ।
प्रतिमालक्षणोक्तेन मार्गेणैव प्रकल्पयेत् ॥ ७ ॥

शिल्पिहस्तात्समादाय सम्यग्बिम्बं परीक्षयेत् ।
समदृष्टिप्रसन्नास्यं स्वस्वरूपं शुभावहम् ॥ ८ ॥

ऊर्ध्वदृष्टिमधोदृष्टिं तिर्यग्दृष्टिं विवर्जयेत् ।
ऊर्ध्वदृष्टिः प्रजानाशमधोदृष्टिर्धनक्षयम् ॥ ९ ॥

तिर्यग्दृष्टिर्यशोनाशं तस्मात् [1]भाग्यं समेक्षणम् ।
अप्रतिष्ठितबेरस्य पूजनं सर्वदोषकृत् ॥ १० ॥

बिम्बं मन्त्रमयं कृत्वा तस्मि[2]न्नेवं प्रपूजयेत् ।
स्नपनं शान्तिके यस्य अग्रे.........मतम् ॥ ११ ॥

उत्तरायणकाले तु [3]कृष्णपक्षे विशेषतः ।
पुण्यर्क्षतिथिवारेषु पुण्यलग्ने सुशोभने ॥ १२ ॥

प्राप्तये सर्वकामानां प्रतिष्ठोत्सव[4]मुच्यते ।
प्रतिष्ठादिवसात्पूर्वं पञ्चमे सप्तमेऽपि वा ॥ १३ ॥

स्वसूत्रोक्तप्रकारेण कारयेदंकुरार्पणम् ।
प्रतिष्ठादिवसात्पूर्वे सायाह्ने नियतः शुचिः ॥ १४ ॥

1 ग्राह्यम् 2 देवम् 3 शुक्ल 4 माचरेत्



मन्त्रेण सा प्रकर्तव्या रत्नन्यासविधानतः ।
नयनोन्मीलनं कुर्यात् नेत्रयुग्मयुते दिने ॥ १५ ॥

पञ्चगव्यैश्च मतिमान् पञ्चत्वक्सलिलैरपि ।
अष्टमृत्सलिलैश्चैव क्षालयेत् पवमानतः ॥ १६ ॥

पञ्चब्रह्मषडङ्गैश्च बिम्बशुद्धिं समाचरेत् ।
तीर्थदेशं नयेद्देवं स्वस्तिसूक्तमुदीरयन् ॥ १७ ॥

लम्बकूर्चं ततो बध्वा वस्त्रयुग्मेन वेष्टयेत् ।
जलाधिवासनं कुर्यात् प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥ १८ ॥

दारुपीठे जलान्तस्थे स्कन्दगायत्रिमन्त्रतः ।
रक्षार्थं लोकपालांश्च पूर्वादिक्रमशोऽर्चयेत् ॥ १९ ॥

श्रीरुद्रं चमकं चैव पञ्चशान्तिं तथैव च ।
स्कन्दसूक्तं चतुर्दिक्षु कुर्यादध्ययनं तथा ॥ २० ॥

जलाद्बिम्बं समुद्धृत्य प्रतिष्ठास्थानमाचरेत् ।
पुण्याहं वाचयित्वैव गव्यैः प्रोक्ष्य भुविस्थलम् ॥ २१ ॥

स्थण्डिलं तत्र संकल्प्य तिलतण्डुलशालिभिः ।
पलाशोदुम्बराश्वत्थपत्रैर्दर्भैः परिस्तरेत् ॥ २२ ॥

बेरञ्च कौतुकं बध्वा नैवेद्यमपि दापयेत ।
बिम्बञ्च नववस्त्रेण प्रत्येकं परिवेष्ट्य च ॥ २३ ॥

शयने शाययेद्देवं प्राक्शिरश्चोर्ध्ववक्त्रकम् ।
देवसेनामहावल्लीं शाययित्वा यथाविधि ॥ २४ ॥

मातृकां बिन्दुसहितं मूर्धादिक्रमशो न्यसेत्
नैर्ऋते वास्तुनाथेभ्यो नमस्कृत्य लिखेद्बुधः ॥ २५ ॥

प्रक्षिप्य विष्टरान् पश्चात्सामान्यार्घ्यं प्रकल्पयेत् ।
द्वाराणि द्वारपालांश्च लोकेशानायुधानि च । २६ ॥

प्रतिष्ठोक्तविधानेन तत्तद्दिक्षु समर्चयेत् ।
वेदिका दक्षिणे भागेऽप्युत्तरामुखमास्थितः ॥ २७ ॥

भूतशुद्धिं ततः कुर्यादन्तर्यजनमाचरेत् ।
विशेषार्घ्यं प्रकल्प्यात्र संभारान् प्रोक्षयेऽस्त्रतः ॥ २८ ॥

आम्रपल्लवकूर्चाढ्यं द्रोणोदपरिपूरितम् ।
सापिधानं सरत्नं च सर्वलक्षणसंयुतम् ॥ २९ ॥

कुम्भं देवशिरोभागे धान्यासने प्रकल्पयेत् ।
वर्धनीद्वितये न्यस्य तस्य दक्षिणवामयोः ॥ ३० ॥

परितः कलशानष्टौ स्थापयित्वा यथाविधि ।
सुब्रह्मण्यं ततो मध्ये पार्श्वयोः शक्तिकाद्वयम् ॥ ३१ ॥

जयन्ताद्यष्टविद्येशान् पूर्वादिकलशेषु च ।
पूर्वोक्तविधिनावाह्य समभ्यर्च्य यथाविधि ॥ ३२ ॥



तत्पूर्वे स्थण्डिलं कृत्वा होमद्रव्याणि गृह्य च ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ ३३ ॥

पलाशसमिधानाज्यं लाजक्षीरगुलैरपि ।
स्कन्दस्य मूलमन्त्रेण होमयेत्पञ्चविंशतिः ॥ ३४ ॥

पञ्चब्रह्मसर्ववक्त्रयुतैः षण्मूर्तिमन्त्रतः ।
प्रतिद्रव्यं ततो हुत्वा द्रव्यान्ते व्याहृतिं हुनेत् ॥ ३५ ।

जगद्भुवादिषण्मन्त्रैः स्कन्दगायत्रिमन्त्रतः ।
तत आचारमानेति द्रव्यं प्रतिहुनेत्ततः ॥ ३६ ॥

शक्तिद्वयस्य मूलेन सर्पिषा पञ्चविंशतिः ।
सर्वद्रव्यसमायुक्तं तस्य मूलेन होमयेत् ॥ ३७ ॥

रात्रिशेषं व्यपोह्याथ प्रातः स्नात्वा गुरूत्तमः ।
अनुष्ठानविधिं ज्ञात्वा प्रतिष्ठास्थानमेत्य च ॥ ३८ ॥

द्वारपूजादिकं कृत्वा कुम्भान्यभ्यर्च्य मन्त्रवित् ।
प्रायश्चित्तार्थमस्त्रेण घृतेनैव शतं हुनेत् ॥ ३९ ॥

जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्ततः ।
शयनाद्बिम्बमुत्थाप्य गव्यैः पञ्चामृतैरपि ॥ ४० ॥

शुद्धाद्भिरभिषिच्याशु भूषयेद्भूषणार्हकैः ।
शिरोवदनहृत्कुक्षिगुह्यपादद्वयेप्रदः ॥ ४१ ॥

पञ्चब्रह्मसर्ववक्त्रयुक्तः षण्मूर्तिमेव च ।
विन्यस्य च षडङ्गानि स्वस्वदेशेषु विन्यसेत् ॥ ४२ ॥

न्यस्त्वाथ मातृकान्यासं मूर्धादिक्रमशो बुधः ।
कुम्भबीजं समादाय बेरस्य हृदि विन्यसेत् ॥ ४३ ॥

मूलमन्त्रेण मतिमान् कुम्भाद्भिरभिषेचयेत् ।
वर्धन्योर्बीजमादाय न्यसेत् स्वस्वस्तनाग्रके ॥ ४४ ॥

तत्तत्करकतोयेन स्वबीजेनाभिषेचयेत् ।
विद्येशकुम्भान् पूर्वादिपद्मपीठेऽभिषेचयेत् ॥ ४५ ॥

वस्त्राभरणमाल्याद्यैरर्चयेत्तु हृदा बुधः ।
महाहविर्निवेद्याथ ताम्बूलमपि दापयेत् ॥ ४६ ॥

प्रार्थयित्वा नमस्कृत्य ब्राह्मणान् भोजयेत्ततः ।
आचार्यं पूजयेत्तत्र वित्तशाठ्यं न कारयेत् ॥ ४७ ॥

प्रतिष्ठाविधिरित्युक्तं पूजाविधिमथ शृणु ।
आचार्यहस्तमादाय बेरकर्ता प्रपूजयेत् ॥ ४८ ॥

एककालं द्विकालं वा त्रिकालं वा दिनं प्रति ।
पूजास्थानं नवेनैव गोमयेनानुलिप्य च ॥ ४९ ॥

गन्धपुष्पजलादीनि पूजाद्रव्याणि गृह्य च ।
सौरपूजां पुरा कृत्वा चोत्तराभिमुखस्थितः ॥ ५० ॥



भस्मनिक्षिप्य विधिना रुद्राक्षमपि धारयेत् ।
षण्मूर्तिहितं पञ्चब्रह्मभिः पञ्चमन्त्रकः ॥ ५१ ॥

शिरोवदनहृत्कुक्षिगुह्यपादद्वये न्यसेत् ।
अङ्गान्यंगेषु विन्यस्य प्रणवार्घ्यं प्रकल्पयेत् ॥ ५२ ॥

विस्तीर्णपीठे मतिमान् पूर्वास्यः परमानयेत् ।
पूर्वद्वारं तु सञ्चिन्त्य द्वारदेवान् प्रपूजयेत् ॥ ५३ ॥

वास्तुनाथं च नैर्ऋत्यामैशान्यां स्वगुरून् यजेत् ।
आत्मशुद्धिं ततः कुर्यादन्तर्यजनमारभेत् ॥ ५४ ॥

विशेषार्घ्यं प्रकल्प्याथ द्रव्यशुद्धिं समाचरेत् ।
स्कन्दमन्त्रैः समावाह्य सोऽहंभावेन पूजयेत् ॥ ५५ ॥

पूजापर्युषितं सर्वं सुमित्राय प्रदापयेत् ।
पूजापीठे दलास्तीर्णं वामहस्ततलेऽपि वा ॥ ५६ ॥

बेरं निवेश्य शुद्धाद्भिः स्नापयेदस्त्रमन्त्रतः ।
आधाराख्यमनन्तं च धर्माद्यांघ्रिचतुष्टयम् ॥ ५७ ॥

अधर्मादिचतुष्पादमथोर्ध्वच्छदनद्वयम् ।
कन्दादीनि शक्त्यादि मण्डलत्रितयं यजेत् ॥ ५८ ॥

पृथिव्यादिप्रकृत्यन्तं सुब्रह्मण्यासनं यजेत् ।
भानुमध्ये तु शिवयोर्मध्यगं संस्मरन् बुधः ॥ ५९ ॥

तस्मिन् मूर्तिं समादाय मूलेनावाहयेत्सुधी: ।
स्थापनं चीशमन्त्रेण सन्निधानं तु पूरुषात् ॥ ६० ॥

सन्निरोधमघोरेण स्वागतं वाममन्त्रत: ।
दिग्बन्धमस्त्रमन्त्रेण कवचेनावकुण्ठनम् ॥ ६१ ॥

अमृतीकरणं सद्योजातेनैव तु मन्त्रत: ।
स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम् ॥ ६२ ॥

तावत्त्वं प्रीतिभावेन बिम्बेऽस्मिन् संनिधिं कुरु ।
इदं मन्त्रं समुच्चार्य पद्मसुद्रा महाख्यकम् ॥ ६३ ॥

षण्मुखं दर्शयित्वाथ पाद्यमाचमनार्घ्यकम् ।
दत्त्वाभिषेचयेदद्भिरब्धिगैर्न तु मन्त्रत: ॥ ६४ ॥

तत: कुमारमानेति चण्डापि स्कन्दसूक्तत:
मूलब्रह्मषडङ्गैश्च गायत्र्याचाभिषेचयेत् ॥ ६५ ॥

सूक्ष्मवस्त्रं ततो दत्वा भूषयेद्भूषणार्हकै: ।
मनोरथार्घ्यं दत्वाथ दण्डभङ्गी समुच्चरेत् ॥ ६६ ॥

वक्त्रभङ्गीमपोह्याथ पञ्चावरणमर्चयेत् ।
धेनुपद्मत्रिशूलं च मकरस्रङ्नमस्कृताम् ॥ ६७ ॥

प्रदर्शयेद्धूपदीपं नैवेद्यमपि दापयेत् ।
पानीयमपि ताम्बूलमुखवाससमन्वितम् ॥ ६८ ॥



धूपं धूरसि मन्त्रेण दीपमुद्दीप्य मन्त्रत: ।
श्रियै जातेति मन्त्रेण नीराजनमत: परम् ॥ ६९ ॥

बृहत्सामेति मन्त्रेण भस्मं दत्वा गुहाय च ।
जगद्भुवेति मन्त्रेण पुष्पाञ्जलिमत: परम् ॥ ७० ॥

मूलमन्त्रं शतं जप्त्वा ब्रह्माङ्गानां दशांशकम् ।
स्तोत्रप्रदक्षिणाभीष्टप्रार्थनां चैव कारयेत् ॥ ७१ ॥

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।
तत्सर्वं देवदेवेश गृहाणाराधनं परम् ॥ ७२ ॥

मन्त्रेणानेन देवाय दापयेच्चुलुकोदकम् ।
न्यूनातिरिक्तं यत् कर्म तत्क्षमस्व मया कृतम् ॥ ७३ ॥

प्रियाभीष्टो हि भगवान् पुनरागमनाय च ।
पश्चात्सुमित्रपूजां च कुर्यादपि विशेषत: ॥
एवं य: कुरुते मर्त्य: स्कन्दसामीप्यमाप्नुयात् । ७४ ॥

इति श्रीकुमारतन्त्रे आत्मार्थयजनविधिर्नाम सप्तत्रिंश: पटल: ॥

---

## अष्टत्रिंशः पटलः

### अथ तैलाभ्यङ्गविधिः

तैलाभ्यङ्गं प्रवक्ष्यामि शृणु कौशिक सुव्रत ।
सर्वरोगविनाशार्थं गुहं तैलेन लेपयेत् ॥ १ ॥

सर्वकालेषु कर्तव्यमेके वा नित्यपूजने ।
मासादौ पञ्चदश्यां वा सोमाङ्गारकवारके ॥ २ ॥

कृत्तिकायां विशाखायां प्रोक्षणे नैमित्तिके पुनः ।
उत्सवाद्यन्तकाले च काम्ये नैमित्तिके पुनः ॥ ३ ॥

एवमादिषु कार्येषु तैलाभ्यङ्गं प्रचक्षते ।
शैलजे मृण्मये चैव दारुजेऽभ्यङ्गमुत्तमम् ॥ ४ ॥

स्वर्णबेरे भित्तिचित्रे दर्पणेन विचक्षणः ।
रत्नजे लोहजे कुर्यात्प्रोक्षयेद्दारुमूर्धनि ॥ ५ ॥

नवीनतिलतैलञ्च पुष्पगन्धैः सुयोजयेत् ।
स्वर्णपात्रे तु रजते कांसपात्रे च मृण्मये ॥ ६ ॥

शुद्धपात्रेण गृह्णीयात् तैलं वस्त्रेण शोधितम् ।
निरीक्ष्य मूलमन्त्रेण प्रोक्ष्य चास्त्रेण मन्त्रतः ॥ ७ ॥

तेन मन्त्रेण संताड्य कवचेनावकुण्ठयेत् ।
धेनुमुद्रां हृदा दत्वा विन्यस्य गुहसंनिधौ ॥ ८ ॥



संकल्पमपि पुण्याहं वाचयित्वा विचक्षणः ।
धूपदीपं हृदा दत्वा पाद्यमाचमनं तथा ॥ ९ ॥
तेनैव दन्तकाष्ठञ्च तन्मन्त्रेणैव दर्पणम् ।
ताम्बूलं तेन मन्त्रेण पश्चादभ्यङ्गमाचरेत् ॥ १० ॥
प्रच्छन्नपटमावेष्ट्य वस्त्रादीनि विपोह्य च ।
मूलबिन्दुसमादाय कूर्चेनास्त्रेण मन्त्रतः ॥ ११ ॥
प्रोक्ष्य बेरस्य शिरसि गुरुर्दक्षिणहस्ततः ।
मूर्धादिपादपर्यन्तमभ्यङ्गं च पीठकम् ॥ १२ ॥
तैलं हृदयमन्त्रेण लेपयेच्छुद्धवस्त्रतः
नमस्कृत्वा क्षमस्वेति शक्तिपूर्वं विचिन्तयेत् ॥ १३ ॥
पिष्टं वामेन मन्त्रेण सर्वाङ्गमपि लेपयेत् ।
स्नाप्य पश्चादघोरेण तथैवामलकैर्गुरुः ॥ १४ ॥
हरिद्रं वक्त्रमन्त्रेण शुद्धाद्भिरभिषेचयेत् ।
अर्चनोक्तविधानेन तदूर्ध्वं कर्मकारयेत् ॥ १५ ॥
भक्तेभ्यः परिचारेभ्यो दापयेत् तैलकं क्रमात् ।
ताम्बूलं दापयेत् पश्चादाचार्यमपि तोषयेत् ॥ १६ ॥
अम्लेन लोहबेराणि शुद्धिं कृत्वैवमर्चयेत् ।
एवं यः कुरुते मर्त्यो सर्वान् कामनवाप्नुयात् ॥ १७ ॥

इति श्रीकुमारतन्त्रे तैलाभ्यङ्गविधिर्नामाष्टत्रिंशः पटलः

---

## एकोनचत्वारिंशः पटलः

### अथ मासपूजाविधिः

अतः परं प्रवक्ष्यामि मासपूजाविधिक्रमम् ।
चैत्रे दमनकं प्रोक्तं वैशाखे गन्धपूजनम् ॥ १ ॥

ज्येष्ठमासे फलैः पूजा क्षीरेणाषाढ मासके ।
श्रावणे शर्करापूजा पूर्वैः प्रोष्ठपदेऽर्चना ॥ २ ॥

अश्विन्यामन्नपूजा च कार्तिक्यां दीपरोहणम् ।
घृतेन मार्गशीर्षे च क्षौद्रेण पुष्यमासके ॥ ३ ॥

घृतकम्बलकं माघे फाल्गुने दधिपूजनम् ।
मासपूजां विनान्यैश्च पूजनैर्निष्फलं भवेत् ॥ ४ ॥

प्रजावृद्धिकरं नृणां राज्ञां विजयवर्धनम् ।
न कुर्याच्चेत्तु मोहेन सर्वदोषकरं भवेत् ॥ ५ ॥

तस्मात्सर्वप्रयत्नेन कर्तव्यं मासपूजनम् ।
नित्यपूजावसाने तु नैमित्तिकमथाचरेत् ॥ ६ ॥

### चैत्रमासपूजा

चैत्रेषु षष्ठ्यां सप्तम्यां त्रयोदश्यां तु वार्चयेत् ।

कौशिक उवाच—

न ज्ञातं मदनोत्पत्तिस्तां वदस्व महेश्वर । ७ ॥



ईश्वर उवाच—

पुरा देव्यै मया प्रोक्तं मदनोत्पत्तिकारणम् ।
महर्षे श्रूयतां तेषां श्रोतॄणां पापनाशनम् ॥ ८ ॥

मया पुरा दग्धकामो अन्यैर्यत्र पुनर्ददेत् ।
रतिप्रीतिसमत्वेन गुहेन नयनाम्बुना ॥ ९ ॥

तत्र स्थाने समुत्पन्ना दिव्या दमनमंजरी ।
तत्र तद्गन्धमाघ्राय सिद्धसाध्या दिवौकसः ॥ १० ॥

सर्वे देवाश्च मुनयो हृष्टा नृत्यन्ति सर्वदा ।
परस्परं चिन्तयन्तो ब्रह्माद्या प्रापुरत्र वै ॥ ११ ॥

गुहाय शक्रः प्रणमत् ब्रह्माणमिदमब्रवीत् ।
किमिदं त्वतिसौरभ्यं तद्वदस्व प्रभो ततः ॥ १२ ॥

ततः प्रोवाच हृष्टात्मा ब्रह्मा सुरपतिं प्रति
पुरा दग्धोऽथ देवेन दीप्तो यत्र मनोभवः ॥ १३ ॥

तत्रोत्पन्ना वनाच्चित्रा दमनी कापि कन्दली ।
यथानङ्गस्तथा सा तु जगदानन्ददायिनी ॥ १४ ॥

सर्वेषामपि देवानां हृष्टं दमनपूजनम् ।
ब्रह्मेत्युक्त्वा पुरं प्रायात दिवं सर्वे ययुस्ततः ॥ १५ ॥

कुमारस्य महत्प्रीतिर्दान्तं हि मुनिपुङ्गव ।
पूर्वोक्तायां तिथौ विप्र सुमुहूर्ते सुलग्नके ॥ १६ ॥

गत्वारामं तु दमनं प्रोक्षयेदस्त्रमन्त्रतः ।
हरप्रसादात् संजातो दमनत्वं पुरा किल ॥ १७ ॥

सुब्रह्मण्यार्चनायैव नेतव्योऽसि प्रसीद मे ।
एवं दमनमामन्त्र्य संग्राह्य सदनं व्रजेत् ॥ १८ ॥

देवाग्रे स्थण्डिलं कृत्वा तावत्तद्बद्धमालिकाम् ।
कृतनित्यविधिः पश्चात् कुण्डे वा स्थण्डिलेऽपि वा ॥ १९ ॥

विधिनाग्निं समुत्पाद्य समृद्धे तु हुताशने ।
पलाशसमिधानाज्यलाजान् सक्तुतिलानि च ॥ २० ॥

मूर्तिं चैवाङ्गमन्त्रैश्च स्कन्दसूक्तेन होमयेत् ।
त्रिसप्तकृत्वा संपातां तथैव जुहुयात् गुरुः ॥ २१ ॥

ततो नित्यावसाने तु स्नपनं कल्पयेद्बुधः ।
अभ्यर्च्य गन्धपुष्पाद्यैर्नैवेद्यान्तं क्रमाद्ददेत् ॥ २२ ॥

मुखवासं च ताम्बूलं गुहाय च हृदा ददेत् ।
हिमतोयेन संमिश्रैर्धूपयेत्तु गुरुः पुनः ॥ २३ ॥

ततः पुष्पग्रहं कार्यं नानापुष्पैः सुशोभनैः ।
दमनमालां च पात्रस्थां वाहयित्वा द्विजेन तु ॥ २४ ॥

सर्वातोद्यसमायुक्तं कृत्वा धामप्रदक्षिणम् ।
द्वारेशानर्च्य देवाग्रे दामं न्यस्त्वासनोपरि ॥ २५ ॥



आसनावरणादीनि संपूज्य च यथाविधि ।
मूर्धादिपादपर्यन्तं दामैर्भूष्य विशेद् गुरुः ॥ २६ ॥

सैकत्रिंशत्कलान्यासं मातृकामपि विन्यसेत् ।
प्रभूतहविषं दद्यात यथावित्तानुसारतः ॥ २७ ॥

विज्ञापयेद्गुरुः पश्चात् वाञ्छितार्थफलप्रदम् ।
न्यूनं वाप्यतिरिक्तं वा भगवन् यन्मया कृतम् ॥ २८ ॥

सर्वं तदस्तु संपूर्ण महासेन कृपाम्बुधे ।
रात्रौ दाम विसृज्याय स्कन्दसूक्तेन पूजयेत् ॥ २९ ॥

स्नपनं तत्र कर्तव्यं प्रभूतहविषं ददेत् ।
दान्तं निवेदितं सर्वं सुमित्राय प्रदापयेत् ॥ ३० ॥

अकृत्वैवं विधानेन देशिको दोषभाग्भवेत् ।
तदन्ते चोत्सवं कुर्यात्सर्वालङ्कारशोभितम् ॥ ३१ ॥

प्रतिसंवत्सरं दान्तं कारयेदुत्सवोत्तमम् ।
अश्वमेधफलं भुङ्क्त्वा सोऽन्ते स्कन्दपुरं व्रजेत् ॥ ३२ ॥

दमनारोहणं प्रोक्तं शृणु शीतोपचारकम् ।

इति चैत्रमासपूजाविधिः

### वैशाखमासापूजाविधि

वैशाखे तु विशाखर्क्षे कुर्याच्छीतोपचारकम् ।
नित्यपूजावसाने तु नैमित्तिकमथाचरेत् ॥ ३३ ॥

नवभिस्तु घटैः शुद्धैः शीतोदैः स्नपनान्वितैः ।
नानागन्धैः समोपेतैः स्नापयेदसुरान्तकम् ॥ ३४ ॥

कर्पूरकुङ्कुमोपेतैर्हिमाम्बुयुतचन्दनैः ।
मूर्धादिपादपर्यन्तमालिलिम्बेन्मुखं विना ॥ ३५ ॥

सौरभ्यपुष्पैर्विविधैस्तत्क्षणप्रतिबोधितैः ।
यथा निरन्तरं विप्र तथैवाच्छादयेद्गुहम् ॥ ३६ ॥

कृष्णागरुभवैर्धूपैर्मृष्टराजप्रकल्पितैः ।
कर्पूरवर्तिभिर्दीपैः पायसैः प्रचुरैरपि ॥ ३७ ॥

जपैर्वेदस्वरैर्गीतैर्वाद्यैः सूक्तैर्मनोहरैः ।
वीणावेणुरवैस्तोत्रैर्नमस्कारप्रदक्षिणैः ॥ ३८ ॥

पूजयेत्प्रत्यहं स्कन्दं भक्त्या सप्तदिनावधि ।
एवं यः कुरुते मर्त्यः पुत्रपौत्रविवर्धनम् ॥ ३९ ॥

यान्यान् कामयते कामान् तांस्तान् ध्रुवमवाप्नुयात् ।
वैशाखपूजनं प्रोक्तं वसन्तोत्सवमुच्यते ॥ ४० ॥

इति वैशाखमासपूजाविधिः

वसन्तोत्सवविधिः

चैत्रे वैशाखमासे तु शुक्लषष्ठ्यां समाचरेत् ।
प्रतिसंवत्सरं कुर्यात् सर्वलोकहिताय वै ॥ ४१ ॥



शुक्लपक्षे शुभर्क्षे च सुमुहूर्ते सुवारके ।
पूर्वेद्युरङ्कुराण्यर्प्य कौतुकं बन्धयेन्निशि ॥ ४२ ॥

स्नपनं कल्प्य देवेशं पूर्वोक्तविधिनार्चयेत् ।
वसन्तं तु भवेच्छुद्धैर्दिव्यगन्धैर्मनोहरैः ॥ ४३ ॥

नानापुष्पैश्च दामैश्च कुर्यात् पुष्पगृहं बुधः ।
पुष्पमालाञ्च पत्रेषु निक्षिप्य कवचेन तु ॥ ४४ ॥

देवाग्रे स्थण्डिलं कृत्वा हृदा संप्रोक्ष्य चास्त्रतः ।
अर्चयेद्धूपदीपं च कृत्वा धाम प्रदक्षिणम् ॥ ४५ ॥

ततो मालां समुद्धृत्य शङ्खदुन्दुभिनिःस्वनैः ।
विन्यसेत् स्कन्दमन्त्रेण मूलबेरस्य मूर्धनि ॥ ४६ ॥

कृत्वागरुप्रधूपं च दीपं चैव प्रदापयेत् ।
स्नाप्यचोत्सवबेरं तु भूषयेद्भूषणार्हकैः ॥ ४७ ॥

स्वर्णराजतताम्राद्यैर्डोलां कल्प्य विधानतः ।
कूटपञ्जरसंयुक्तां सर्वालंकारशोभिताम् ॥ ४८ ॥

डोलामारोप्य देवेशं शक्तिद्वयसमायुतम् ।
वाद्यैर्गीतैश्च नृत्तैश्च स्तोत्रैर्वेदपुराणकैः ॥ ४९ ॥

डोलाक्रीडां ततः कृत्वा देवस्याचमनं ददेत् ।
नालिकेरोदकं चैव पानकं विविधं तथा ॥ ५० ॥

अपूपान् विविधांश्चैव पायसैर्व्यञ्जनैर्युतम् ।
मुद्गान्नं कृसरान्नं च गुलान्नं सूपसंयुतम् ॥ ५१ ॥

प्रियङ्गुपिष्टं मधुमत् वल्लिकन्दं सपक्वम् ।
नालिकेराम्बुपनसं फलपुण्ड्रेक्षुदण्डकैः ॥ ५२ ॥

दद्याद्विधानतस्तत्र ताम्बूलमपि दापयेत् ।
सर्वातोद्यसमायुक्तं नानाच्छत्रसमावृतम् ॥ ५३ ॥

नानाध्वजसमोपेतं चामरैर्व्यञ्जनैर्युतम् ।
ग्रामप्रदक्षिणं कुर्यात् राजचिह्नैः समस्तकैः ॥ ५४ ॥

परिवेषं क्रमाद्गत्वा मन्दीभूते दिवाकरे ।
पल्लवैर्मञ्जरीभिश्च फलैः पुष्पैः समृद्धिकैः ॥ ५५ ॥

आस्थानमण्डपोपेते सर्वालंकारसंयुते ।
नृत्तगीतादिसंयुक्ते जलवापीसमीपके ॥ ५६ ॥

देवोद्याने नदे चैव सर्वालंकारसंयुते ।
अकुर्वंश्च जलक्रीडान् धारायन्त्रैर्गुणोत्तमाः ॥ ५७ ॥

केचित् स्वर्णमयैः शृङ्गैः रौप्यताम्रविनिर्मितैः ।
स्त्रियश्चाप्सरसः सर्वा नरा गन्धर्वकिंनराः ॥ ५८ ॥

एवं कृत्वा जलक्रीडां मण्डपे देवमानयेत् ।
स्नपनं कल्प्य विधिना पूजयेदुपचारकैः ॥ ५९ ॥



देवः समागतं स्तुत्वा वसनं कुसुमायुधम् ।
नीलदूर्वाङ्कुरश्याममतिसौन्दर्यशोभितम् ॥ ६० ॥

रतिप्रीत्युभयोर्मध्ये पुष्पसायकचापधृत् ।
पुष्पमण्डलमध्ये तु रम्योद्याने समर्चयेत् ॥ ६१ ॥

ओं नमः पञ्चबाणाय जगदाह्लादकारिणे ।
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय च ॥ ६२ ॥

पुण्डरीकाक्षपुत्राय नमस्ते मीनकेतवे ।
मन्मथाय पदं पूर्वं विद्महे तदनन्तरम् ॥ ६३ ॥

कामदेवाय संयुक्तं धीमहीति पदं ततः ।
तन्नोऽनङ्गपदस्यान्ते प्रयोक्तव्यं प्रचोदयात् ॥ ६४ ॥

चतुर्विंशाक्षरीप्रोक्ता गायत्री मदनस्य तु ।
दक्ष शैवलपिण्डेन रतिं पूर्वं समर्चयेत् ॥ ६५ ॥

मञ्जर्या सहकारस्य वामे प्रीतिं प्रपूजयेत् ।
प्रणवेन धनुर्बाणं तच्छिलीमुखपङ्कजम् ॥ ६६ ॥

वसन्तं वनराजिं च गन्धपुष्पादिभिर्यजेत् ।
वस्त्रेण वेष्ट्य नैवेद्यं पायसं तु निवेदयेत् ॥ ६७ ॥

ताम्बूलं दापयेत् पश्चात् तोषयेत्तान् विशेषतः ।
तस्माद्वसन्तमूर्तिं च रतिकामसमन्वितम् ॥ ६८ ।

देवाय दर्शयेद्विद्वान् फलैः पुष्पोपहारकैः ।
इक्षुदण्डैश्च गन्धैश्च ताम्बूलैश्च मनोहरैः ॥ ६९ ॥

नानादीपशतैर्गेहं रात्रौ देवालयं व्रजेत् ।
प्रभूतहविषं दद्यात् यथाविभवविस्तरम् ॥ ७० ॥

ताम्बूलं दापयेत् पश्चात् धूपदीपं ह्वदा ददेत् ।
शुद्धैरन्नैश्च विविधैरपरैर्वा महामुने ॥ ७१ ॥

जपैर्वेदस्वरैर्गीतैर्वाद्यैर्नृत्तैर्मनोहरैः ।
वीणावेणुवरैस्तोत्रैर्नमस्कारैः प्रदक्षिणैः ॥ ७२ ॥

एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।
यान् यान् कामयते मर्त्यस्तांस्तान् ध्रुवमवाप्नुयात ॥ ७३ ॥

वसन्तोत्सवमाख्यातं ज्येष्ठमासार्चनं शृणु ॥ ७४ ॥

इति वसन्तोत्सवपूजाविधिः ।

---

ज्येष्ठमासपूजाविधिः

ज्येष्ठमासे मूलर्क्षे पूजयेत् स्वादुभिः फलैः ।
कदली पनसाम्रोत्थैर्नालिकेरफलैरपि ॥ '७५ ॥

शर्करामधुसंयुक्तैर्यथाविभवविस्तरम् ।
नवभाण्डे समाहृत्य न्यस्त्वाग्रे प्रोक्ष्य चाम्रतः ७६ ॥



संकल्पमपि पुण्याहं वाचयित्वा द्विजोत्तमैः ।
आधाराधेयपूजान्ते पवमानमुदीरयन् ॥ ७७ ॥

यामार्धं वा तदर्धं वा पठेत्तन्मूलतोऽपि वा ।
स्कन्दसूक्तेन मतिमान् शीतोष्णैरभिषेचयेत् ॥ ७८ ॥

वस्त्रैर्गन्धैः सुमाल्यैश्च भूषणैर्भूषयेद्गुहम् ।
हिमतोयाक्तकल्हारैः नैरन्तर्यापि भूषयेत् ॥ ७९ ॥

पञ्चावरणपूजाञ्च कुर्यादपि विशेषतः ।
पायसं गुहसंयुक्तं ताम्बूलमपि दापयेत् ॥ ८० ॥

त्रिसंध्यमर्चयेदेवं सर्वकामस्य सिद्धये ।
ज्येष्ठमासार्चनं प्रोक्तमाषाढे पूजनं शृणु ॥ ८१ ॥

इति ज्येष्ठमासपूजाविधिः

---

आषाढमासपूजाविधिः

पूर्वफल्गुनि नक्षत्रे चाषाढे मासपूजनम् ।
कौतुकं बन्धयेद्रात्रौ देवदेव्यौ च मन्त्रवित् ॥ ८२ ॥

प्रभाते ब्रह्मचारिभ्यो यज्ञसूत्राणि दापयेत ।
हरिद्रां चैव कन्याभ्यो दक्षिणा सहितं बुधः ॥ ८३ ॥

प्रीतये देवदेवीनां मद्भक्तेभ्यो विधानतः ।
मुद्गाङ्कुरं सलवणं देव्योः पादे समर्पयेत ॥ ८४ ॥

ग्रामप्रदक्षिणं कुर्यात् सर्वसंपत्कराय च ।
जलतीरं समागम्य यथाविभवविस्तरम् ॥ ८५ ॥

पोतोपरि समारुह्य देवदेव्यौ च भक्तिमान् ।
युवतीभिश्च युवभिर्जलक्रीडां विधाय च ॥ ८६ ॥

यामं वापि तदर्धं वा तदर्धं वा समाचरेत् ।
प्रविश्य भवनं पश्चात प्रभूतहविषं ददेत् ॥ ८७ ॥

ब्राह्मणान् भोजयेद्विद्वान् दीनानाथांश्च भोजयेत् ।

इति श्रावणमासपूजाविधिः

---

## क्षीरपूजाविधिः

पूर्वाषाढे तु तन्मासे श्रवणे वा गुणान्विते ।
पूर्णिमायां तु वाऽषाढे कुर्यात्क्षीराभिषेचनम् । ८८ ॥

गवां वृद्धिकरं सर्वसस्यवृद्धिकरं शुभम् ।
गोक्षीरं ग्राह्य धारोष्णं नवभाण्डेषु पूरयेत् ॥ ८९ ।

शालिभिस्तण्डुलं कृत्वा विन्यसेत् क्षीरकुम्भकम् ।
उत्तमं दशभारं तु मध्यमं तु तदर्धकम् ॥ ९० ॥

तदर्धमधमं ज्ञेयं तदर्धमधमाधमम् ।
अस्त्रमन्त्रेण संप्रोक्ष्य ब्रह्माङ्गैरपि पूजयेत ॥ ९१ ॥



धूपदीपं ततो दत्वा पयोभिः स्नापयेद्गुहम् ।
आप्यायस्वेति मन्त्रेण स्कन्दसूक्तेन मन्त्रतः ॥ ९१ ॥

कुमारमानेति मन्त्रेण मूलब्रह्मषडङ्गकैः ।
क्षीरैश्च शुद्धतोयैश्च स्नाप्याभ्यर्च्य यथाविधिः ॥ ९२ ॥

प्रभूतहविषं दत्वा ब्राह्मणानपि भोजयेत् ।
एवं यः कुरुतेमर्त्यः स पुण्यफलमाप्नुयात् ॥ ९३ ॥

अनुक्त मन्यतो ग्राह्यमधिकं नैव दूष्यते ।
क्षीरपूजाविधिः प्रोक्तः पवित्रारोपणं शृणु ॥ ९४ ॥

इति क्षीरपूजाविधिः

---

## पवित्रारोपणविधिः

आषाढादित्रयोपेता श्रेष्ठमध्यमकन्यसाः ।
आश्विनीकृत्तिकामासावथवा संप्रकीर्तितौ ॥ ९५ ॥

पूर्वपक्षे चतुर्दश्यामाषाढे मासि कारयेत् ।
इतरेषु च मासेषु पक्षयोरुभयोरपि ॥ ९६ ॥

चतुर्दश्यां च षष्ठ्यां वा पूर्णिमायां च कारयेत् ।
कृत्तिकादीपतः पश्चात् नैव कार्यं पवित्रकम् ॥ ९७ ॥

शुक्लपक्षे गृहस्थानां यतीनां तु द्विपक्षयोः ।
भोगमोक्षप्रदं साक्षात् पवित्रारोपणं मुने ॥ ९८ ॥

संवत्सरकृतं पापं नाशयत्यस्य पूजनात् ।
प्रायश्चित्तमकुर्वाणा ब्राह्मणाः शुद्धिमाप्नुयुः ॥ ९९ ॥

प्रत्यहं वाङ्मनः कायकृतानि कलुषानि च ।
तेभ्यः पवित्रं कुरुते तस्मादेतत् पवित्रकम् ॥ १०० ॥

सौवर्णैरजतैः सूत्रैः पट्टोर्णैः सूत्रकैरपि ।
कार्पासजभवैरन्यैर्मौञ्जिभिर्दर्भसंभवैः ॥ १०१ ॥

वल्कलोत्थैश्च सूत्रैश्च नवभिर्गुणितैः शुभैः ।
द्विजातिकृतकार्पास सूत्रैः शुभ्रैरनिन्दितैः ॥ १०२ ॥

रोमादिशोध्यतोयेन प्रक्षाल्य प्रोक्ष्य चास्त्रतः ।
शुष्कं कृत्वा हृदा सम्यक् पवित्रं कारयेत्सुधीः ॥ १०३ ॥

शक्तयस्तु शकुन्याद्या नवसूत्राधिदेवताः ।
अष्टोत्तरशतैः सूत्रैः कुर्यात् स्कन्दावतारकम् । १०४ ॥

उत्तमं बेरदैर्घ्यं स्यान्मध्यमं बाहुमात्रकम् ।
अधमं तु शिरोवेष्टं पवित्रं मुनिपुंगव ॥ १०५ ॥

षटकं मूर्ध्नि प्रकर्तव्यं षण्मूर्तिमनुरूपकम् ।
पीठे स्पर्शनकं षट्कं बाह्यमाला तथैव च ॥ १०६ ॥

अष्टोत्तरशतं सूत्रमुत्तमं परिचक्षते ।
तदर्धं मध्यमं ज्ञेयं कन्यसं तु तदर्धकम् ॥ १०७ ॥



शतं वाऽपि तदर्धं वा पवित्रं कारयेत्सुधीः ।
एकैकया तु संवृद्ध्या तन्तवो द्वादशात्मिकाम् ॥ १०९ ॥

नीचाल्पमध्यमं श्रेष्ठमुत्तमादित्रयं तथा ।
ग्रन्थयस्तन्तुसंख्या स्यात् कूलगर्भं नवं मता ॥ ११० ॥

यथेष्टग्रन्थयो वाऽपि समाः सर्वशतांसिताः ।
एकद्वित्र्यङ्गुला वाऽपि ग्रन्थिमानमिहोच्यते ॥ १११ ॥

ग्रन्थयो वेष्टदेशेषु विधातव्यं विचक्षणैः ।
कुर्यात् पवित्रं शक्तीनां कण्ठादाजानुमात्रकम् ॥ ११२ ॥

मयूरगजयोः सूत्रं तन्मस्तकपदावधि ।
समानेनात्मनः कुर्यात् पवित्रं कुम्भसंख्यया ॥ ११३ ॥

क्रमागमज्ञशिष्याणामात्मवत् समुदीरितम् ।
रक्तचन्दनकाश्मीरगैरिकागरुचन्दनैः ॥ ११४ ॥

कुष्ठकर्पूरसंमिश्रं हरिद्राकृष्णगन्धकैः ।
रंजयेद्धृदयेनैव रक्तसूत्रादिभिस्तु वा ॥ ११५ ॥

अन्तः शालागजस्थानप्रासादान्मूलवेश्मनाम् ।
षट्सूत्रस्यैव कर्तव्यं तन्तुना संप्रशस्यते ॥ ११६ ॥

एवं संकल्य पूर्वेद्युरधिवासनमाचरेत ।
प्रासादस्याग्रके वाऽपि दक्षिणे पश्चिमेऽपि वा ॥ ११७ ॥

कल्पिते मण्डपे वाऽपि पूर्वोक्तस्यैव कल्पितम् ।
वितानदर्भमालादिफलपल्लवशोभिते ॥ ११८ ॥

मध्ये वेदिसमायुक्ते नवपञ्चैककुण्डके ।
तत्संख्यास्थण्डिलोपेते वेदिकारहितेऽपि वा ॥ ११९ ॥

स्थण्डिलं शालिभिः कुर्यादष्टद्रोणैर्यथाविधि ।
स्कन्दकुम्भं च वर्धन्यौ परितश्चाष्टकुम्भकैः ॥ १२० ॥

स्थाप्य सम्यग् वितानाद्यैर्भूषयित्वाऽथ मण्डपम् ।
कृतनित्यविधिः सौरपूजा शुद्धमना गुरुः ॥ १२१ ॥

पुण्याहप्रोक्षणं कृत्वा प्रकीर्य विकिरानपि ।
मण्डपार्चनमार्गेण सर्वान् देवान् समर्चयेत् ॥ १२२ ॥

मध्ये स्कन्दं समावाह्य महावल्लीं च दक्षिणे ।
देवसेनां तथा वामे जयन्ताद्यान् समावृते ॥ १२३ ॥

स्थण्डिलं पश्चिमे कूर्यात् रक्तषड्दलपद्मयुक् ।
तस्मिन् कुम्भं विदध्याच्र्य प्राप्यानुज्ञां ततो गुरुः ॥ १२४ ॥

द्वारेशानर्चयेद् देवसमीपे स्वासने स्थितः ।
आसनार्चनमारभ्य कुर्यादावाहनान्तकम् ॥ १२५ ॥

गव्यैः पञ्चामृतैः स्नाप्य विशेषस्नपनेन च ।
पञ्चावरणमार्गेण गन्धपुष्पादिनार्चयेत् ॥ १२६ ॥



सैकत्रिंशत्कलान्यासं विधिना कारयेद्बुधः ।
भक्ष्यभोज्यान्नपानादिप्रभूतहविषं ददेत् ॥ १२७ ॥

कौतुकं बन्धयित्वा तु गत्वा कुण्डान्तिकं गुरुः ।
अग्निकार्योक्तमार्गेण स्विष्टान्तं होममाचरेत् ॥ १२८ ॥

समिदन्नांश्च लाजांश्च सर्षपं शालिभिस्तिलैः ।
सक्तुवेणुयवैश्चैव मुद्गमाषप्रियङ्गुभिः ॥ १२९ ॥

पलाशखदिराश्वत्थवटैः प्रागादिदिक्षु च ।
शमीखादिरमायूरप्लक्षोऽग्न्यादिविदिक्षु च ॥ १३० ॥

प्रधानस्य पलाशेन शतं वाऽपि तदर्धकम् ।
स्कन्दमूलेन स ब्रह्मा मूर्तिमन्त्रैः षडङ्गकैः ॥ १३१ ॥

हुत्वाऽथ स्कन्दसूक्तेन षण्मन्त्रेण रसाहुतिः ।
ततः कुमारमानेति मन्त्रेणैव तथा हुनेत् ॥ १३२ ॥

एवं प्रधानकुण्डं स्यात्तदर्धेन तदर्धकम् ।
स्थालीपाकं ततः कृत्वा तद्धृदा विभजेत्त्रिधा ॥ १३३ ॥

गुहांशमग्निभागं च मध्वाज्याभ्यां च मिश्रितम् ।
कुर्यादात्मीयभागन्तु लवणेन घृतेन वा ॥ १३४ ॥

हृदा देवांशमभ्यर्च्य तमादाय गुहान्तिकम् ।
गत्वा निवेद्य देवाय नीत्वा विज्ञाप्य मन्त्रवित् ॥ १३५ ॥

दन्तकाष्ठञ्च तैलञ्च पूर्वे तत्पुरुषं स्मरन् ।
दक्षिणे दण्डकौपीनं बहुरूपेण मन्त्रतः ॥ १३६ ॥

कमण्डल्वक्षमालाश्च पश्चिमे सद्यमन्त्रतः ।
वामे ज्ञानञ्च भस्मानि दर्पणं वाममन्त्रतः ॥ १३७ ॥

ऐशान्यां पादुकानाञ्च ताम्बूलं त्वीशमन्त्रतः ।
स्थण्डिले सूत्रनिकटे परितश्चापि साधयेत् ॥ १३८ ॥

पवित्राणि च तन्मध्ये पात्रे स्थाप्य शुभाणुना ।
अस्त्रेण प्रोक्षितं सम्यगवकुण्ठ्य हृदार्चनम् ॥ १३९ ॥

धेनुमुद्रामृतीभूतं स्कन्दाङ्गैर्मनुभिर्यजेत् ।
मण्डले वेदिकोर्ध्वे तु पवित्रस्याशुचासनम् ॥ १४० ॥

मृगाजिनादिना चापि स्थापयेत्पावकान्तिके ।
संवत्सरकृतं पापं यदसाक्षिणमव्ययम् ॥ १४१ ॥

प्रायश्चित्तार्थमेतस्य पवित्रत्वं त्वां नमाम्यहम् ।
इदं मन्त्रं समुच्चार्य पवित्राण्यधिवासयेत् ॥ १४२ ॥

सुब्रह्मण्यं स्मरन् ब्रह्मा षडङ्गैर्मूलमन्त्रतः ।
ददेद्वह्निस्थदेवाय तृतीयांशं चरुं गुरुः ॥ १४३ ॥

त्रिसप्तकृत्वा संपातं तथैव जुहुयात्ततः ।
चरुशेषं हुतं हुत्वा रात्रिशेषं व्यपोह्य च ॥ १४४ ॥



ततः प्रभाते सुस्नातः स्नानसंध्यानुतर्पणम् ।
समाचम्य कृतन्यासं सामान्यार्घ्यकरो गुरुः ॥ १४५ ॥

कृत्वा नित्यविधिः सम्यगाचार्यो मन्त्रवित्तमः ।
द्वारं द्वाराधिपानिष्ट्वा गत्वा कुम्भान्तिकं गुरुः ॥ १४६ ॥

साक्षान् दिक्पालकान् कुम्भान् पूर्वं कृत्वा समर्चयेत् ।
कुण्डाधिदेवतान् पूज्य परिषिच्य यथाक्रमम् ॥ १४७ ॥

स्कन्दमूलेन सब्रह्ममूर्तिमन्त्रैः षडङ्गकैः ।
मण्डलस्थगुहेनैव पावकस्थगुरुं तथा ॥ १४८ ॥

नाडीसंधानमार्गेण योजयेद् भावयेद् गुहम् ।
यान्येतानि पवित्राणि भगवान् संस्कृतानि च ॥ १४९ ॥

अर्चयामि घटस्थाय गुहायाध्येषयेदिति ।
समर्च्य रक्षणामस्मै षट्पवित्राणि देशिकः ॥ १५० ॥

एकैकं शक्तिवर्धन्यौ जयन्तादिभ्य एव च ।
द्वारेशेभ्यो दिगीशेभ्यो दद्याद् गन्धपवित्रकम् ॥ १५१ ॥

तत्तन्नामचतुर्थ्यन्तैः प्रतिगृह्णेति दापयेत् ।
यागशालागजस्थानं प्रासादपचनालयम् ॥ १५२ ॥

द्वारकान् सूत्रषट्केण वर्मणा परिवेष्टयेत् ।
द्वारं पूर्ववदभ्यर्च्य गर्भगेहं प्रविश्य च ॥ १५३ ॥

दन्तकाष्ठं च तैलं च ताम्बूलं हृदयेन च ।
उपचारक्रमणैव युक्त्यादद्याद् क्रमाद् गुरुः ॥ १५४ ॥

आधाराधेयपूजां च कुर्यादपि विशेषतः ।
विशेषस्नपनोपेतं यथाविभवविस्तरम् ॥ १५५ ॥

आमन्त्रणपवित्रान्तं सुधामुद्राप्ररोपितम् ।
गुहायारोप्य तन्मूर्ध्नि रेचकेण गुहार्चना ॥ १५६ ॥

आमन्त्रणात्मकं कर्म पठेद् देवेशसंनिधौ ।
नमस्ते विधिवच्छिद्र पुराणेश मखं प्रति ॥ १५७ ॥

प्रभावान्मन्त्रयामि त्वां तदिच्छावासिकारणम् ।
तत्सिद्धिमनुजानीहि यतः शरवणोद्भव ॥ १५८ ॥

सर्वदा सर्वथा स्वामिन् नमस्तेऽस्तु प्रसीद मे ।
जप्त्वा निवेद्य देवाय नमस्कृत्वा समापयेत् । १५९ ॥

षट्पवित्राणि मतिमान् मूर्तिमन्त्रैः प्रदापयेत् ।
स्कन्दमूलेन मन्त्रेण दद्यात् स्कन्दावतारकम् ॥ १६० ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं च यत् कृतम् ।
जपहोमार्चनाहीनं कृतं नित्यं मया तव ॥ १६१ ॥

कृतं सावित्रिहीनं च तत्पूरय विधानतः ।
त्वया पवित्रितं सर्वं जगदेतच्चराचरम् ॥ १६२ ॥



तथाप्यत्र पवित्राणि दापयामि त्वदाज्ञया ।
निवेद्य देवदेवाय नमस्कुर्याद् विशेषतः ॥ १६३ ॥

शक्तिद्वये पवित्रे द्वे दद्यात् तत्तद्धृदाधुना ।
दिगीशपरिवारेभ्यो देवेभ्यस्त्वेकमेककम् ॥ १६४ ॥

सुमित्रक्षेत्रपालेभ्यो दद्याद् गन्धपवित्रकम् ।
प्रायश्चित्तं ततः कुर्यादस्त्रेणैव शताहुतिः ॥ १६५ ॥

सिद्धान्तपुस्तके दद्यात् स्वगुरोश्च पवित्रकम् ।
प्रभूतहविषं दद्यात् यथाविभवविस्तरम् ॥ १६६ ॥

ब्राह्मणान् भोजयेत् पश्चात् दीनानाथांश्च भोजयेत् ।
उत्तमं दशनिष्कं स्यात् मध्यमं तु तदर्धकम् ॥ १६७ ॥

तदर्धमधमं ज्ञेयं देशिकस्य तु दक्षिणा ।
मूर्तिपानां तदर्धं स्यात् जापकानां तदर्धकम् ॥ १६८ ॥

अत्रोपकरणं सर्वं देशिकाय प्रदापयेत् ।
पवित्राणि च दर्भांश्च वस्त्राण्याभरणानि च ॥ १६९ ॥

पुनः पुनः प्रयोक्तव्यं पूतान्येतानि सर्वदा ।
मण्डलस्थं घटं चैव वह्निस्थं नित्यमर्चयेत् । १७० ॥

अर्धमासं च सप्ताहं पञ्चाहं वा त्र्याहकम् ।
एवं पवित्रं पूजां च प्रकुर्यात्तु दिनं प्रति ॥ १७१ ॥

मन्त्रतर्पणकर्मान्तं कृत्वा निष्कृतिमाचरेत् ।
अस्त्रेणैव शतं पश्चात् पूर्णां वै चित्ररूपिणीम् ।
लक्षश्चाघोरमावर्त्य चाज्यहोमं समाचरेत् ॥ १७२ ॥

भसितं दर्शयित्वाथ वह्निस्थं योजयेद् गृहम् ।
वह्नेर्मन्त्रं च संहृत्य नीत्वा तं द्वादशान्तके ॥ १७३ ॥

हृदये संनिवेश्याग्निं विसृज्योद्वास्य विष्टरान् ।
परिधिं च बलिं दद्यात् समाचम्य गुरुः शुचिः ॥ १७४ ॥

स्कन्दकुम्भे च वर्धन्यौ मन्त्रान् संहृत्य योजयेत् ।
दिक्पालानस्त्रसहितान् द्वारपालांश्च संस्थितान् ॥ १७५ ॥

अर्घ्यं तन्नित्यपूजाङ्गं पुष्पाद्यैः परिकल्पयेत् ।
रव्यन्तं संविसृज्याथ पवित्राणि षडाननात् ॥ १७६ ॥

आदाय च सुमित्राय सर्वाण्येतानि दापयेत् ।
पवित्रं नित्यपूजाङ्गं पुष्पाद्यैः परिकल्पयेत् ॥ १७७ ॥

एवं यः कुरुते मर्त्यः पवित्रोत्सवमुत्तमम् ।
मुच्यते ब्रह्महत्यायाः किं पुनश्चोपपातकैः ॥ १७८ ॥

सर्वान् कामानिहप्राप्य सोऽन्ते स्कन्दपुरं व्रजेत् ॥ १७९ ॥

पवित्रारोपणं प्रोक्तं शृणु श्रावणपूजनम् ॥ १८० ॥

इति पवित्रारोपणविधिः

---



श्रावणपूजाविधिः

श्रावणे तु श्रविष्ठान्तं तद्दिनात्पूर्वरात्रके ।
कौतुकं बन्धयेद्देवं पायसान्नं निवेदयेत् ॥ १८१ ॥

प्रातः संध्यावसाने तु यथाविभवविस्तरम् ।
स्नपनं कल्प्य संपूज्य कुङ्कुमेनैव लेपयेत् ॥ १८२ ॥

नववस्त्रेण संवेष्ट्य भूषयेद्भूषणार्हकैः ।
बन्धूकपुष्पदामैश्च नैरन्तर्यं विभूषयेत् ॥ १८३ ॥

शर्करायाः शतप्रस्थं तदर्धं वा तदर्धकम् ।
पात्रे निधाय मतिमान् षण्मुखाय निवेदयेत् ॥ १८४ ॥

प्रभूतहविषं दद्यात्ताम्बूलञ्च निवेदयेत् ।
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।
प्रोक्तं श्रावणपूजाञ्च शृणु भाद्रपदार्चनाम् ॥ १८५ ॥

इति श्रावणपूजाविधिः

---

भाद्रपदमासपूजाविधिः

पूर्वाषाढे तु नक्षत्रे मासि भाद्रपदे यजेत् ।
कुसुमैः केतकैश्चैव शतैर्वाऽपि तदर्धकैः ॥ १८६ ॥

सक्तुलाजतिलोपेतैः सहस्रप्रस्थमुत्तमम् ।
तदर्धं मध्यमं विष्टं कन्यसंस्यात्तदर्धकम् ॥ १८७ ॥

अपूपं सर्पिषा कृत्वा पूरयेत्तु घटे घटे ।
श्रीसूक्तैर्वेष्टयित्वाथ कूर्चं न्यस्त्वा विचक्षणः ॥ १८८ ॥

विशेषस्नपनैः स्नाप्य प्रभूतहविषं ददेत् ।
कदलीपनसैर्युक्तानपूपांश्च विशेषतः ॥ १८९ ॥

ताम्बूलञ्च हृदा दत्वा प्रार्थयेदर्थमीप्सितम् ।
एवं यः कुरुते मर्त्यः सर्वपापैः प्रमुच्यते ॥
प्रोक्तं भाद्रपदे पूजाप्यश्विनीपूजनं शृणु ॥ १९० ॥

इति भाद्रपदमासपूजाविधिः

---

आश्वयुजमासपूजाविधिः

अश्विन्यामाश्विजे मासे प्रीणयेदन्नपूजनात् ।
विशेषस्नपनात्पूज्य भूषयेद्भूषणार्हकैः ॥ १९१ ॥

लक्ष्मीपुष्पैश्च कुसुमैरुत्पलैः पूजयेद्गुहम् ॥
शुद्धान्नं पायसं मुद्गं गुलान्नं कृसरान्नकम् ॥ १९२ ॥

नीवारान्नं प्रियङ्ग्वन्नं दध्यन्नं वैणवान्नकम् ।
श्यामाकान्नं च नव्यञ्च मध्वन्नं घृतान्नकम् ॥ १९३ ॥

माषान्नं चव मुद्गान्नं गोधूमान्नञ्च षोडश ।
एतैश्चैव द्विरष्टाद्यैः प्रीणयेत्तु षडाननम् ॥ १९४ ॥



फल्गुन्यामेव तन्मासे प्रकुर्यात् पार्वतीव्रतम् ।
तत्पूर्वे तु महावल्लीं देवसेनां महामुने ॥ १९५ ॥

स्वर्णसूत्रेण विधिना कौतुकं बन्धयेन्निशि ।
ततः प्रभाते कन्याभ्यः स्नानाङ्गं दापयेत्सुधीः ॥ १९६ ॥

स्नातेभ्यो वसनं गन्धं दाम चापि विशेषतः ।
नवभारादिभ।रान्तमुत्तमादित्रयं त्रयम् ॥ १९७ ॥

पात्रस्थान्सांकुरान्मुद्गान् तण्डुलान् सोपदंशकान् ।
दापयित्वा तु शक्तिभ्यां विधिना यन्त्रवित्तमः ॥ १९८ ॥

मूलदेव्यौ समभ्यर्च्य विशेषस्नपनेन च ।
यात्रादेव्यौ कृते स्नाते नवशाटीपरिच्छदे ॥ १९९ ॥

शुद्धनैवेद्यसन्तुष्टे गन्धस्रग्दामभूषिते ।
पयोघृतधरे कृत्वा दिनशेषं नयेत्क्रमात् ॥ २०१ ॥

कृत्वा च पेषणीपूजां याम्यायां पावकेऽपि वा ।
तत्रामलकपिष्टेन रजन्याऽपि सुगन्धिना ॥ २०१ ॥

संस्थाप्य पेषणीं कृत्वा सप्तधान्यकृताश्रयाम् ।
गन्धैरालिप्य वस्त्रेण नवेनाच्छाद्यसासनाम् ।' २०२ ॥

ध्यात्वाथ पेषणीं गौरीं समभ्यर्च्य यथाविधि ।
नैवेद्यं सोपदंशञ्च दत्वा स्त्रीभिः प्रसादितम् ॥ २०३ ।

ग्रामप्रदक्षिणं कृत्वा देवदेव्यौ च भक्तितः ।
सर्वालङ्कारसंयुक्तं पाददीपैः समन्वितम् ॥ २०४ ॥

तत्काले दापयेन्मुद्गांकुरं लवणसंयुतम् ।
वीथ्यां वीथ्यां जनेभ्यश्च व्यंजनं तण्डुलान्वितम् ॥ २०५ ॥

आलयं तु प्रविश्याथ परिवेषक्रमान्नयेत् ।
शिष्योपाध्यायसंयुक्तान् सिद्धान्ताध्ययनं जपेत् ॥ २०६ ॥

ऋग्यजुः सामगाथर्वा वेदांगं च पृथक्पृथक् ।
शिवधर्मपुराणानि सेतिहासानि तत्समम् ॥ २०७ ॥

काव्यश्च शब्दशास्त्रश्च ज्योतिश्शास्त्रं ततः परम् ।
आयुर्वेदं द्राविडश्च श्रावयेत्प्रोणयेद्गुहम् ॥ २०८ ॥

ब्राह्मणान्भोजयेत्तत्र वैदिकान् शिवभक्तकान् ।
कन्याश्च ब्रह्मचरींश्च दीनानाथांश्च भोजयेत् ॥ २०९ ॥

विधानमेतत्कर्तव्यं देव्याः सन्तुष्टकारणम् ।
एवं यः कुरुते मर्त्यः सर्वान्कामानवाप्नुयात् ॥ २१० ॥

अश्विनीपूजनं प्रोक्तं कृत्तिकापूजनं शृणु ।

इत्याश्विजमासपूजाविधिः

कार्तिकमासपूजाविधिः

ब्राह्मणा यजुसूक्तैश्च भूभुजाः कुक्कुटैरपि ।
वैश्याः कर्पूरखण्डैश्च शूद्राद्याः फलपुष्पकैः ॥ २११ ॥



कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
सप्तजन्मभवेद्विप्रो धनाढ्यो वेदपारगः ॥ २१२ ॥

कार्तिक्यां कृत्तिकापर्वयोगे वृषलग्नके ।
श्रद्धया कार्तिकेयाय यः कुर्याद्घृतदीपिकाम् ॥ २१३ ॥

तस्य पुण्यमसंख्येयं विश्वामित्र महामुने ।
कृत्तिकापर्वयुक्तेनालाभे पर्वणि सम्मतम् ॥ २१४ ॥

रोहिण्यां वा भरण्यां वा दीपं पर्वणि कारयेत् ।
अपर्वणिकृतं दीपं राजराष्ट्रं विनश्यति ॥ २१५ ॥

पर्वद्वये तु सम्प्राप्ते पूर्वं त्यक्त्वा परं ग्रहेत् ।
पूर्णायां खण्डितायां तु द्वयोर्नाड्याधिकं ग्रहेत् ॥ २१६ ॥

रवेरस्तमनात्पूर्वे पादयामाद्विधानतः ।
कालस्तदूर्ध्वे यामार्धपर्यन्तं दीपकर्मणि ॥ २१७ ॥

नक्षत्रवृद्ध्या संस्पृष्टे तत्कालान्ते समाचरेत् ।
यल्लग्ने विषसंस्पृष्टे तल्लग्नं परिवर्जयेत् ॥ २१८ ॥

विषस्य परपूर्वे तु घटिकाद्वयतः शुभम् ।
कर्तुरष्टमराश्यादिलक्षदोषनिरूपणम् । २१९ ॥

विष्टिवैनाशिकर्क्षादिप्रोक्षणं नात्र सम्मतम् ।
पर्वयुक्तमयुक्तं वा नक्षत्रं तु प्रधानकम् ॥ २२० ॥

एवं परीक्ष्य मतिमान् कृत्तिकादीपमाचरेत् ।
पूर्वेद्युः कौतुकं बध्वा स्नाप्यचोत्सवबेरकम् ॥ २२१ ॥

मङ्गलांकुरमन्त्रैश्च कुर्याद्विव्युक्तमार्गतः ।
दीपारोहणकालस्य पूर्वे स्वामिनमर्चयेत् ॥ २२२ ॥

मूलबेरमलंकृत्य भूषयेद्भूषणार्हकैः ।
नीलोत्पलैश्च कमलैः पट्टिकैः पुष्पकैर्यजेत् ॥ २२३ ॥

प्रभूतहविषं दत्वा ताम्बूलं दापयेत्ततः ।
आलये मण्डपे वाऽपि यागमण्डप एव च ॥ २२४ ॥

शिवाग्निं तत्र संपूज्य गुहं सांगं समर्चयेत् ।
समिदाज्येन चरुणा दीपैः कार्पासबीजकैः ॥ २२४ ॥

क्षीरेण शतमर्धं वा तदर्धं वा हुनेत्सुधीः ।
स्कन्दमूलेन मन्त्रेण दशांशांजुहुयात्ततः ॥ २२५ ॥

स्कन्दसूत्रं मन्त्रषट्कैर्द्रव्यषट्कैर्हुनेत्क्रमात् ।
कुमारमेति मन्त्रेण प्रतिद्रव्यं हुनेत्ततः ॥ २२६ ॥

पूर्णाहुतिं ततो हुत्वा शिवाग्निं च विसर्जयेत् ।
तदग्नौ दीपमारोप्य कृत्तिकादीषमाचरेत् ॥ २२७ ॥

नारिकेलशमिस्तालपनसासनखादिराः ।
चम्पको देवदारुश्च मधुकः सालवृक्षकः ॥ २२८ ॥



दीपदण्डद्रुमाः प्रोक्ताः कारयेल्लक्षणान्वितम् ।
अलाभे तु बहिः स्थाने वृक्षयोग्यद्रुमं ग्रहेत् ॥ २२९ ॥

ध्वजदण्डोक्तमार्गेण दीपदण्डं प्रकल्पयेत् ।
त्रितालं स्तम्भनाहं स्याहजुं शुद्धसमन्वितम् ॥ २३० ॥

नवकीलं समारभ्य व्योमकीलविवर्धनात् ।
सप्तविंशतिकीलान्तं रोहणार्थं सुयोजयेत् ॥ २३१ ॥

द्वादशांगुलकारस्य व्योमांगुलविवर्धनात् ।
द्वाविंशदंगुलान्तं स्याद्दण्डात्कीलंविनिर्गतः ॥ २३२ ॥

द्व्यंगुलात्पादवृद्ध्यादि षडंगुलसमावधि ।
विस्तारं तद्घनं ज्ञेयं निर्गमादर्धमात्रकम् ॥ २३३ ॥

दण्डप्रोक्तश्च कीलानां सुदृढं कल्पयेद्बुधः ।
लोहचक्रं तदूर्ध्वे तु व्योममूलं त्रिपादवत् ॥ २३४ ॥

सुदृढं स्थापयेत्पात्रं धारणायां महामुने ।
दारूद्भवानि चक्राणि प्रतिकूलं सुयोजयेत् ॥ २३५ ॥

न्यस्तव्याश्चक्रवद्दीपं स्तम्भमूलात्पृथक्पृथक् ।
दीपिका प्रतिचक्रश्च रसद्वादशषोडश ॥ २३६ ॥

सहस्रदीपयुक्तं वा शतदीपयुतं तु वा ।
स्थापयेद्दीपदण्डांश्च मालाकारेण वास्तुनः ॥ २३७ ॥

तोरणाकारतो वाऽपि वृत्ताकारेण वाथवा ।
प्रासादस्यैव परितश्चतुर्दिक्षु विशेषतः ॥ २३८ ॥

कूटाकाराणि कृत्वाथ चतुर्गात्रयुतानि च ।
कूटबन्धेषु सर्वत्र पात्राणि न्यस्य कारयेत् ॥ २३९ ॥

पुण्याहप्रोक्षणं कृत्वा दण्डं पूर्वेऽपि वासयेत् ।
बलिपीठाग्रके वाऽपि ध्वजदण्डाग्रकेऽपि वा ॥ २४० ॥

यथा दृढतरं स्थाप्य पूरयेच्छुद्धवालुकैः ।
वेदिमूले प्रकर्तव्यं वृत्तं वा चतुरश्रकम् ॥ २४१ ॥

त्रिहस्तमात्रविस्तीर्णमेकहस्तोन्नता शुभा ।
गोमयालेपनं कृत्वा शालिपिष्टैर्विचित्रयेत् ॥ २४२ ॥

नवेन युग्मवस्त्रेण दण्डमूलं प्रवेष्टयेत् ।
पालिकाद्यैरलंकृत्य पुण्याहं वाचयेद्बुधः ॥ २४३ ॥

अस्त्रेण प्रोक्ष्य तद्दण्डं प्रणवेन तु पूजयेत् ।
स्तम्भयानं यथा तद्वद्दीपं कुर्यान्मनोरमम् ॥ २४४ ॥

कार्पासबीजैर्मतिमान्निच्छिद्रेणैव साधनम् ।
पोट्टलीकं ततो बध्वा घृतमात्रे निधाय च ॥ २४५ ॥

अष्टप्रस्थं घृतेनैव तदर्धेनैव पूरयेत् ।
सौवर्णं राजतं ताम्रं मृण्मयं वाऽथ पात्रकम् ॥ २४६ ॥



देवाग्रे मण्डलं कृत्वा शालिपिष्टैर्विचित्रयेत् ।
शालिभिर्विकिरेत्तत्र दर्भैश्चैव परिस्तरेत् ॥ २४७ ॥

तन्मध्ये विन्यसेत्पात्रं हृदयेन तु मन्त्रतः ।
दीपयेत्प्राङ्मुखो मन्त्री स्कन्दमूलमनुस्मरन् ॥ २४८ ॥

एवं त्रिधा पञ्चधा वा शरावे पात्रमाचरेत् ।
ब्रह्मसूक्तैश्च मन्त्रैर्वा गन्धपुष्पादिनार्चयेत् ॥ २४९ ॥

धूपदीपं ततो दत्वा हृदयेन तु मन्त्रतः ।
दीपानारोप्य हस्तैर्वा वाहयित्वा शिवद्विजैः ॥ २५० ॥

सर्वातोद्यसमायुक्तं कृत्वा ग्रामप्रदक्षिणम् ।
गृहस्थो वा ब्रह्मचारी वा दीपं संग्राह्य पाणिना ॥ २५१ ॥

अघोरास्त्रेण मन्त्रेण दीपदण्डेऽधिरोपयेत् ।
सर्वातोद्यसमायुक्तं जयशब्दसमन्वितम् ॥ २५२ ॥

सर्वैर्हरहरेत्युक्त्वा दीपदण्डेऽधिरोपयेत् ।
प्राङ्मुखोदङ्मुखो वाऽपि दीपं मन्त्रेण विन्यसेत् ॥ १५३ ॥

प्रासादे गोपुरे शालपरिवारालयोर्ध्वके ।
प्रासादाभ्यन्तरे सर्वे पाकस्थानेन तु मण्डपे ॥ १५४ ॥

वापीकूपतटाकेषु सर्वत्रैव प्रदीपयेत् ।
स्नात्वा चोत्सवबेरन्तु समलंकृत्य भूषणैः ॥ २५५ ॥

ग्रामप्रदक्षिणं कृत्वा सर्वातोद्यसमन्वितम् ।
आलयन्तु प्रविश्याथ मूलबेरं समर्चयेत् ॥ २५६ ॥

स्नपनं कारयेत् तत्र सहस्रादिषु शक्तितः ।
पृथुकान् दापयेद्विद्वान् नालिकेरफलान्वितान् ॥ २५७ ॥

मरीचिजीरकोपेतान् नालिकेरैश्च संयुतान् ।
दद्यात्पृथुकलाजांश्च गुलसारसमन्वितान् ॥ २५८ ॥

प्रभूतहविषं दत्वा ताम्बूलमपि दापयेत् ।
प्रतिसंवत्सरं ह्येवं कर्तव्यं फलकाङ्क्षिभिः ॥ २५९ ॥

लाजान् पृथुकलाजांश्च पृथुकान् व्यञ्जनैर्युतान् ।
निवेदयेद्गुहस्यैवं पवित्रं पापनाशनम् ॥ २६० ॥

यो भक्षयेत्ततो भक्त्या अग्निष्टोमफलं लभेत् ।
एवं यः कुरुते मर्त्यः स मुक्तः सर्वपातकैः ॥ २६१ ॥

सर्वान् कामानिह प्राप्य सोऽन्ते स्कन्दपुरं व्रजेत् ।
कृत्तिकादीपनं प्रोक्तं धनुर्मासार्चनं शृणु ॥ २६२ ॥

इति कार्तिकमासपूजाविधिः

धनुर्मासपूजा

मण्डपं समलंकृत्य मुक्तादामैश्च वस्त्रकैः ।
गृहद्वाराणि सर्वाणि एवमाद्यैरलंकरेत् ॥ २६३ ॥



शुद्धतोयेन संस्नाप्य प्रियङ्ग्वन्नं निवेद्य च ।
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम् ॥ २६४ ॥

धनुर्मासस्य मर्त्यानां प्रत्यूषः काल उच्यते ।
तस्मात्समाधिरात्र्यन्ते पूजयेच्छंकरात्मजम् ॥ २६५ ॥

एकवारं धनुर्मासे भक्त्या यः पूजयेद्गुहम् ।
वर्षद्वयस्य पूजायाः फलं प्राप्नोत्यसंशयः ॥ २६६ ॥

शृङ्गिबेरसहस्रार्धं व्यञ्जनैः सममुच्यते ।
तत्समं दधि विप्रेन्द्र धनुर्मासस्य पूजने ॥ २६७ ॥

अर्धरात्रात्परे तत्र जलसंग्रहणं मतम् ।
पुष्पसंग्रहणं विप्र पूर्वेद्युरह उच्यते ॥ २६८ ॥

नीलोत्पलञ्च कमलं तुलसीबिल्वपत्रकम् ।
एकाहोषितदोषाणि न दोषं तैः सुपूजयेत् ॥ २६९ ॥

पूजाकालस्य पूर्वं तु सुस्नाताचमनो गुरुः ।
पादौ प्रक्षाल्याचम्य भस्मधारणविग्रहः ॥ २७० ॥

द्वारं संपूज्य विधिना मन्त्रकायः शिवद्विजः ।
विशेषार्घ्यं ततो कल्प्य रात्र्यन्तं पूजयेद्गुहम् ॥ २७१ ॥

स्कन्दमूर्त्यङ्गमन्त्रैश्च स्कन्दसूक्तेन मन्त्रतः ।
ततः कुमारमातेति स्कन्दगायत्रिया यतः ॥ २७२ ॥

श्रीरुद्रचमकाद्यैश्च पूजयेद्गन्धतोयकैः ।
धौतवस्त्रैरलंकृत्य भूषयेद्भूषणार्हकैः ॥ २७३ ॥

कर्पूरकुङ्कुमोपेतं रक्तगन्धं च लेपयेत् ।
नीलोत्पलारविन्दैश्च पूजयेत्तु विशेषतः ॥ २७४ ॥

आसनावरणादीनि संपूज्य विधिना ततः ।
नवभारादिभारान्तमुत्तमादित्रयं त्रयम् ॥ २७५ ॥

तण्डुलं स्यात् तदर्धेन यथाविभवविस्तरम् ।
शुद्धान्नमेवं कर्तव्यं शृङ्गिबेरदधिप्लुतम् ॥ २७६ ॥

कन्दमूलफलोपेतं गुलखण्डसमन्वितम् ।
नालिकेरफलैर्युक्तं मधुसूपसमन्वितम् ॥ २७७ ॥

निवेदयेद्बुदा मन्त्री ताम्बूलमपि दापयेत् ।
नानाधूपैश्च दीपैश्च ततो नीराजनैरपि ॥ २७८ ॥

वाद्यैर्गीतैश्च नृत्तैश्च जपैः स्तोत्रैः प्रदक्षिणैः ।
नमस्कारैश्च मतिमान् प्रीणयेदसुरान्तकम् ॥ २७९ ॥

एवं यः कुरुते मर्त्यः सप्तजन्मद्विजो भवेत् ।
सर्वान् कामानिह प्राप्य तदन्ते मुक्तिमाप्नुयात् ।
धनुर्मासार्चनं प्रोक्तमार्द्रापूजाविधिं शृणु ॥ २८० ॥

इति धनुर्मासापूजाविधिः

---



## आर्द्रापूजा

तस्मिन् मासे तथार्द्रायां घृतेन स्नापयेद् गुहम् ।
पर्वयुक्तमयुक्तं वा नक्षत्रं तु प्रधानकम् ॥ २८१ ॥

खण्डिते सति नक्षत्रे द्वयोस्तावधिकं भवेत् ।
समर्थेनापरं ग्राह्यं पूर्वमङ्गलकारकम् ॥ २८२ ॥

एकमासे द्विनक्षत्रे संप्राप्ते त्वपरं वरम् ।
पूर्वमुत्सवबेरश्च ततः कौतुकबेरकम् ॥ २८३ ॥

पूर्वेद्युः कौतुकं बध्वा देवीभ्यां सह मन्त्रवित् ।
कदलीपूगपनसलिकुचाद्युद्भवैः फलैः ॥ २८४ ॥

मण्डपं समलंकृत्य मुक्तादामैश्च वस्त्रकैः ।
गृहद्वाराणि सर्वाणि एवमाद्यैरलंकरेत् ॥ २८५ ॥

शुद्धतोयेन संस्नाप्य प्रियङ्ग्वन्नं निवेद्य च ।
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम् । २८६ ॥

ग्रामप्रदक्षिणं कुर्यात् प्रातरुत्सवबेरकम् ।
गवामाज्यं ततो विद्वान् नवं शुद्धमनिन्दितम् ॥ २८७ ॥

आनीय रात्रौ तत्त्वज्ञः स्नापयेन्मूलबेरकम् ।
शिवत्रयं सार्धभारं भारं भारार्धभारकम् ॥ २८८ ॥

द्वयभारस्त्रिभारश्च षड्भारं चाष्टभारकम् ।
दशभारं स्मृतं ज्ञेयमुत्तमादित्रयं त्रयम् ॥ २८९ ॥

देवाग्रे स्थण्डिलं कुर्यात् समद्रोणैश्च शालिभिः ।
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि ॥ २९० ॥

परिस्तीर्य ततो दर्भैराज्यपात्राणि विन्यसेत् ।
पुण्याहप्रोक्षणं कृत्वा स्कन्दमन्त्रैः समर्चयेत् ॥ २९१ ॥

धूपदीपं ततो दत्त्वा द्वारपूजां विधाय च ।
आधाराधेयपूर्वं च कृत्वा नित्यावसानके ॥ २९२ ॥

स्कन्दमूलेन मन्त्रेण षडङ्गाद्यङ्गमन्त्रतः ।
स्कन्दमूलेन मतिमान् कुमारमेव मन्त्रतः ॥ २९३ ॥

घृतेन मूलमन्त्रेण चास्त्रेण परिमार्ज्य च ।
पिष्टामलकपिण्याकैर्वर्षयेद् घृतनुत्तये ॥ २९४ ॥

श्रीरुद्रचमकाभ्याञ्च स्कन्दसूक्तेन मन्त्रवित् ।
मन्दोष्णैर्गन्धतोयैश्च स्नाप्य वस्त्रेणमार्जयेत् ॥ २९५ ॥

वस्त्राभरणमालादीन् गुरुर्दत्वा हृदाणुना ।
आसनावरणादीनि पूजयेन्मुनिपुङ्गव ॥ २९६ ॥

नीलोत्पलोत्थैः पुष्पैश्च नैरन्तर्यं विभूषयेत् ।
स्नाप्य कौतुकबेरञ्च भूषयेद्भूषणार्हकैः ॥ २९७ ॥



नैवेद्यं दापयेत्पश्चात् सर्वव्यञ्जनसंयुतम् ।
ताम्बूलञ्च ततो दत्वाकृष्णगन्धेन लेपयेत् ॥ २९८ ॥

ग्रामप्रदक्षिणं नित्यं वीथिं कृत्वालयं विशेत् ।
आलयस्याग्रके वाऽपि सौम्ये वा जनतुष्टये ॥ २९९ ॥

डोलारोहं ततः कुर्यात् बलिबेरं विशेषतः ।
डोलारोहं प्रकर्तव्यं प्रभाते चार्धरात्रके ॥ ३०० ॥

सुवर्णरौप्य लोहैर्वा दारुणात्वथ शिल्पिभिः ।
सर्वलक्षणसंयुक्तं स्थाप्य स्तम्भद्वयं तथा ॥ ३०१ ॥

तयोरूर्ध्वे कलां योज्य डोलां तस्मिन् प्रलम्बयेत् ।
चतुर्हस्तसमोपेतामथवा द्विभुजान्विताम् ॥ ३०२ ॥

अधस्तात् फलकं योज्य सर्वालंकारसंयुताम् ।
डोलां संप्रोक्ष्य चास्त्रेण सर्वालंकारसंयुताम् ॥ ३०३

फलकोर्ध्वे न्यसेद्देवं शक्तिद्वयसमन्वितम् ।
नैवेद्यं चैव पानीयं ताम्बूलमपि दापयेत् ॥ ३०४ ॥

धूपदीपौ ततो दत्वा दत्वा भस्मानि मन्त्रवित् ।
वाद्यगीतैश्चनृत्तैश्च स्तोत्रैः संतोषयेद्गुहम् ॥ ३०५ ॥

नीराजनं ततो दत्वा प्रविशेदालयं सुधीः ।
प्रभूतहविषं दत्वा ब्राह्मणानपि भोजयेत् ॥ ३०६

गुहस्नानार्थमम्भश्च गङ्गातोयसमं भवेत् ।
गुहपादोदकं पीत्वा सर्वयज्ञफलं भवेत् ॥ ३०७ ॥

एवं यः कुरुते मर्त्यः सर्वान् कामानवाप्नुयात् ।
आर्द्रापूजाविधिः प्रोक्ता पुष्यमासार्चनं शृणु ॥ ३०८ ॥

इत्यार्द्रापूजाविधिः

---

## पुष्यमासपूजा

पुष्यमासे तु पुष्यर्क्षे कुर्यात् क्षौद्राभिषेचनम् ।
सर्वव्याधिविनाशं च विजयप्रदकारणम् ॥ ३०९ ॥

आर्द्राऋक्षविधानेन ऋक्षं निश्चित्य मन्त्रवित् ।
वस्त्रपूतं नवं शुद्धं कृमिदोषविवर्जितम् ॥ ३१० ॥

क्षौद्रमादाय मतिमान् शुद्धपात्रे प्रपूरयेत् ।
अष्टप्रस्थादिविप्रेन्द्र यावन्मानं शिवान्तकम् ॥ ३११ ॥

शिववृद्ध्या नवं मानं कन्यसादित्रयं मतम् ।
देवाग्रे स्थण्डिलं कृत्वा क्षौद्रपात्राणि विन्यसेत् ॥ ३१२ ॥

पुण्याहं वाचयित्वाथ प्रोक्षयेदस्त्रमन्त्रतः ।
स्कन्दसूक्तेन मन्त्रज्ञः कुमारमेति मन्त्रतः ॥ ३१३ ॥

मूलब्रह्मषडङ्गैश्च कुर्यात् क्षौद्राभिषेचनम् ।
वस्त्राभरणमालादीन् दापयेत् हृदाणुना ॥ ३१४ ॥



नीलोत्पलैश्च पद्मैश्च नैरन्तर्यं विभूषयेत् ।
प्रभूतहविषं दत्त्वा ब्राह्मणानपि भोजयेत् । ३१५ ॥

एवं यः कुरुते मर्त्यः सर्वान् कामानवाप्नुयात् ।
पुष्यमासविधिः प्रोक्ता माघमासविधिं शृणु ॥ ३१६ ॥

इति पुष्यमासपूजाविधिः

---

## माघमासपूजा

माघमासे मघाऋक्षे पूजयेद्घृतकम्बलम् ।
भूपतिर्जयदं सौम्यं प्राणिनां रोगनाशनम् ॥ ३१७ ॥

आर्द्राप्रोक्तविधानेन नक्षत्रं ग्राह्यमुत्तमम् ।
उत्तमं कपिलासर्पिः स्वर्णवर्णगवामपि ॥ ३१८ ॥

निरोमं नूतनं शुद्धं क्षीरं कीटादिवर्जितम् ।
तोयैः पात्राणि संपूर्य वारुणं बीजमुच्चरन् ॥ ३१९ ॥

निधाय पात्रं पात्रेषु पिण्डं कृत्वा तदाज्यकम् ।
कुङ्कुमागरुसंयुक्तं शुद्धपात्रे निधापयेत् ॥ ३२० ॥

देवाग्रे स्थण्डिलोर्ध्वे तु पुण्याहप्रोक्षणान्वितम् ।
घृतपात्राणि विन्यस्य ब्रह्ममूर्त्यङ्गमन्त्रकैः ॥ ३२१ ॥

पुष्पैरभ्यर्च्य मतिमान् धूपदीपौ हृदा ददेत् ।
कवचेनावकुण्ठ्यापि प्रातर्मध्याह्न एव वा ॥ ३२२ ॥

विशेषेणार्च्य सेनान्यमासनावरणैः सह ।
मूर्धादिपादपर्यन्तमालिप्य च स पीठकम् ॥ ३२३ ॥

गन्धैर्लिप्यापरं नीत्वा कम्बलेन च वेष्टयेत् ।
महाहविर्निवेद्याथ ताम्बूलमपि दापयेत् ॥ ३२४ ॥

संध्यान्ते वा परेद्युर्वा कौतुकाद्यं विसृज्य च ।
विशेषस्नपनं कुर्यात् यथावित्तविधिसविस्तरम् ॥ ३२४ ॥

एवं यः कुरुते मर्त्यः सर्वरोगात् प्रमुच्यते ॥
माघपूजाविधिः प्रोक्ता शिवरात्रिविधिं शृणु ॥ ३२६ ॥

इति माघमासपूजाविधिः

---

शिवरात्रिपूजा

तन्मासे कृष्णपक्षे तु विद्यते या चतुर्दशी ।
तद्रात्रिः शिवरात्रिः स्यात् सर्वपुण्यशुभावहा ॥ ३२७ ॥

रात्रौ यामद्वयादर्वाक् घटिकैकामहानिशी ।
तत्स्याच्चतुर्दशी यस्मात्तद्रात्रं शिवरात्रकम् ॥ ३२८ ॥

मुख्या त्रयोदशीमिश्रा पर्वमिश्राऽधमाधमा ।
मध्यमा शिवरात्रिः स्यादहोरात्रं चतुर्दशी ॥ ३२९ ॥

तस्यां पूज्यो महादेवः ब्राह्मगोहितकांक्षिभिः ।



ईश्वरोवाच—
कौशिकेदं शतं सत्यं मत्पूजायाश्चतुर्गुणम् ॥ ३३० ॥

अप्येकदन्तसेनान्योः पूजया तोषयाम्यहम् ।
तस्मात् सर्वप्रयत्नेन तद्रात्रौ पूजयेद्गुहम् ॥ ३३१ ॥

स्नात्वा नित्यविधिं कृत्वा कुर्याच्छुद्धोपवासकम् ।
देवेशं गन्धतैलेन पिष्टाद्यैरपि मन्त्रवित् ॥ ३३२ ॥

गव्यैः पञ्चामृतैश्चैव प्रतियामं विशेषतः ।
बिल्वोदैः शुद्धतोयैश्च गन्धोदैः शुद्धतोयकैः ॥ ३३३ ॥

चन्दनागरुकर्पूरकुङ्कुमैश्च क्रमेण तु ।
मल्लिकोत्पलपुष्पैश्च जातिपुष्पैश्च बिल्वकैः ॥ ३३४ ॥

सुवर्णभूषणै रत्नैः प्रवालैर्मौक्तिकैरपि ।
पायसैः कृसरान्नैश्च यवान्नैश्च गुलान्नकैः ॥ ३३५ ॥

व्यञ्जनाज्यपयः पूर्णैः प्रतियामं समाहितम् ।
रम्भाफलेक्षुदण्डैश्च ताम्बूलमपि दापयेत् ॥ ३३६ ॥

मूलेन स्कन्दसूक्तेन ब्रह्ममूर्त्यङ्गमन्त्रवित् ।
श्रीरुद्रं चमकेनैव प्रतियामं सुपूजयेत् ॥ ३३७ ॥

घृतवर्तिसुदीपांश्च दीपयेत्तोषयेद्गुहम् ।
जपैः स्तोत्रैः प्रदक्षिण्यैर्नमस्कारैर्महामुने ॥ ३३८ ॥

रात्रिं जागरतो नीत्वा प्रातःस्नानादिकर्म च ।
कृत्वा देवं समभ्यर्च्य प्रभूतहविषं ददेत् ॥ ३३९ ॥

ब्राह्मणान् शिवभक्तांश्च दीनानाथांश्च भोजयेत् ।
यथाशक्तिसुवर्णादि तेभ्यो दानं प्रयच्छताम् ॥ ३४० ॥

एवं यः कुरुते मर्त्यः विमुक्तः सर्वपातकैः ।
अश्वमेधसहस्रस्य फलं प्राप्नोत्यसंशयः ॥ ३४१ ॥

शिवरात्र्यर्चनं प्रोक्तं शृणु फाल्गुनपूजनम् ।

इति शिवरात्रिपूजाविधिः

---

फाल्गुनमासपूजा

फाल्गुने मासि विधिना पूजेदुत्तरफाल्गुने ।
बालानाञ्च पशूनाञ्च वर्धन्ते मुनिसत्तमाः ॥ ३४२

स्नात्वा गोपः पटाद्ववस्त्रं बध्वा दुग्ध्वा गवां पयः ।
देवागारेऽग्निना तप्त्वा दधि कृत्वा पिधानयुक् ॥ ३४३ ॥

घतस्योक्तप्रमाणेषु यथालाभं प्रगृह्य च ।
देवाग्रे स्थण्डिले न्यस्त्वा पुण्याहप्रोक्षणं चरेत् ॥ ३४४ ।

पुष्पैरभ्यर्च्य मूलेन ब्रह्ममूर्त्यङ्गमन्त्रकैः ।
धूपदीपं ततो दत्वा मध्याह्ने पूजयेद्गुहम् ॥ ३४५ ॥



गव्यैः पञ्चामृतैः स्नात्वा स्कन्दमूलेन मन्त्रवित् ।
ततः कुमारमातेति मन्त्रेण दधिपूजनम् ॥ ३४६ ॥

ततो दधिक्राविण्णेति मन्त्रेणैवाभिषेचयेत् ।
वस्त्रैर्गन्धैश्च पुष्पैश्च भूषणैर्भूषणार्हकैः ॥ ३४७ ॥

कर्णिकारभवैः पुष्पैर्निरन्तर्यं विभूषयेत् ।
प्रभूतहविषं दत्वा ब्राह्मणान् भोजयेत्ततः ॥ ३४८ ॥

एवं यः कुरुते मर्त्यः समृद्धः पशुमान् भवेत् ।
प्रोक्तं फाल्गुनपूजा च नवनैवेद्यमुच्यते ॥ ३४९ ॥

इति फाल्गुनमासपूजाविधिः

---

नवनैवेद्यम्

सर्वसस्याभिवृद्ध्यर्थं सर्वप्राणिसुखावहम् ।
प्रीणयेन्नवनैवेद्य विधिना पार्वतीसुतम् ॥ ३५० ॥

आषाढकन्यकामासे मार्गशीर्षश्च माघकः ।
एते त्वशोभना वर्ज्याः शेषमासाः शुभाः स्मृताः ॥ ३५१ ॥

गर्हितं कृष्णपक्षं स्यात् शुक्लपक्षे समाचरेत् ।
सप्तमी च द्वितीया च तृतीया पञ्चमी शुभाः ॥ ३५२ ॥

पूषा मखा च सावित्री श्रविष्ठा वसवस्तथा ।
विशाखा च वारुणं मूलं सौम्यं चैव प्रजापतिः ॥ ३५३ ॥

नवनैवेद्यम्
सर्वसस्याभिवृद्ध्यर्थं सर्वप्राणिसुखावहम् ३५३॥
प्रीणयेन्नवरैवेद्यं विधिना पार्वतीसुतम् ।
आषाढकन्यकामासे मार्गशीर्षञ्च माघकः ॥ ३५४॥
एते त्वशोभना वर्ज्याः शेषमासाः शुभाः स्मृताः ।
गर्हितं कृष्णपक्षं स्यात् शुक्लपक्षे समाचरेत् ॥ ३५५॥
सप्तमी च द्वितीया च तृतीया पञ्चमी शुभाः ।
पूषा मखा च सावित्री श्रविष्ठा वसवस्तथा ३५६॥
विशाखा च वारुणं मूलं सौम्यं चैव प्रजापतिः ।
शुभान्येतानिऋक्षाणिवर्ज्यान्यन्यानिसुव्रत ॥ ३५७॥
वर्जनीयास्तथामीनमेषकर्कटवृश्चिकाः ।
अन्याश्चशुभादाप्रोक्तास्तेषांपापंविवर्जयेत् ॥ ३५८॥
शुक्रश्चसोमदेवेढ्य वाराश्रेष्ठतमास्मृताः ।
द्रेकाणदर्शणंहोरा शुभांशाश्शुभदंभवेत् ॥ ३५९॥
सुमुहूर्तांसुनिश्चित्य पूर्वेपाण्डरमर्पयेत् ।
सर्वातोद्यसमायुक्तं छत्रध्वजसमाकुलम् ॥ ३६०॥
धूपदीपसमायुक्तं पालकादिसमन्वितम् ।
सुमित्रशक्तिसहितं नानाभक्तजनैयुतम् ॥ ३६१॥
पूर्वस्यामुत्तरस्यांवा सस्यक्षेत्रंप्रविश्यच ।
दद्ध्यन्नंवागुलान्नंवादिग्देवानां बलिंक्षिपेत् ॥ ३६२॥
शाल्यानवपक्वलमान् संग्रह्यास्त्रेणमन्त्रतः ।
शूकभारान्समावाह्य प्रविशेदालयन्ततः ॥ ३६३॥
स्नात्वाचोत्सवबेरन्तु भूषयेत्भूषणार्हकैः ।
तत्कालसंभवैःपुष्पैर्नीपपुष्पैर्विशेषतः ॥ ३६४॥
सर्वतोद्यसमायुक्तं छत्रध्वजसमायुतम् ।
शूकभारसमायुक्तं व्रीहिभारसमायुतम् ॥ ३६५॥
नानाविधफलैर्युक्तं नानाधान्यसमन्वितम् ।
इक्षुशाखार्द्रशाखाभिर्निशिशाखासमायुतम् ॥ ३६६॥
क्रमुकैस्तिलशाखाश्चमरीचीलवणैर्युतम् ।
नालीकेराम्रपनसगुलखण्डैस्समन्वितम् ॥ ३६७॥
दद्ध्याज्यतैलकुंभैश्चमुद्गभिन्नघटैर्नवैः ।
नानापुष्पसमायुक्तं विप्रादिजनसेवितम् ॥ ३६८॥
उत्सवस्वामिनंविद्वान् कुर्याद्ग्रामप्रदक्षिणम् ।
प्रविश्यभवनन्तत्रस्वस्थानेस्थाप्यदेवताम् ॥ ३६९॥
मण्टपंगोमयेनैव लेपयित्वाविभूषयेत् ।
पुण्याहतोयैसंप्रूक्ष्यतरंगेणैवभूषयेत्॥ ३७०॥
तस्योर्द्धववविन्यसेच्छूकभारणेतान् प्रथक् प्रथक् ।
देवेशानुज्ञाशूकान् जनेभ्योदापयेत्सुधीः ॥ ३७१॥
नवशालियुतंत्वेक शालीभारमनिन्दितम् ।
आदित्यरस्मिभिस्तप्तान् धान्यान्मुसललूखलैः ॥ ३७२॥
देवस्यमण्टपेशुद्धेशालिपिष्टैरलंक्रुते ।
शालिभिस्थण्डिलंक्रुत्वा पद्ममष्टदलंलुखेत् ॥ ३७३॥
परिस्तीर्यततोदर्भैः प्रोक्षयेदस्त्रमन्त्रतः ।
लूकलन्मुसलन्तत्र विन्यस्यहृदयाणुना ॥ ३७४॥
नववस्त्रेणसंवेष्ट्य समभ्यर्च्यथाविधि ।
प्रहृत्य मुसलेनैव बीजमुख्येन देशिकः ॥ ३७५॥

प्रहृत्य मुग्लेनैव बीजमुख्येन देशिकः ।
चतुर्वर्णोद्भवैस्स्त्रीभिः कुट्टयेत्तदनन्तरम् ॥ ३७२ ॥

तुषान् विपोह्य शूर्पैस्तु कणकम्बुं च वर्जयेत् ।
भारादिनवभारान्तं कन्यसादित्रयं त्रयम् ॥ ३७३ ॥

प्रक्षाल्य तण्डुलं शोध्य नालिकेरगुलान्वितम् ।
मरीचिजीरकोपेतमिक्षुखण्डसमन्वितम् ॥ ३७४ ॥

वस्त्राण्यास्तीर्य देवाग्रे शुद्धिं कृत्वा यथारुचि ।
रम्भापत्राणि तस्योर्ध्वे संस्तीर्य प्रोक्ष्य चास्त्रतः ॥ ३७५ ॥

तण्डुलं पूरयेत् तत्र गुलान्नं व्यञ्जनैर्युतम् ।
कन्दमूलफलोपेतं यथाविभवविस्तरम् ॥ ३७६ ॥

शङ्खदुन्दुभिनिर्घोषैर्वेदध्वनिसमायुतम् ।
हृदयेन तु मन्त्रेण सुब्रह्मण्याय दापयेत् ॥ ३७७ ॥

परिवारामराणाञ्च दापयेत्तदनन्तरम् ।
परिवारबलिं दत्वा महापीठान्तमेव च ॥ ३७८ ॥

नवपूगफलैर्युक्तं ताम्बूलं दापयेत्ततः ।
निवेदितन्तु यत्सर्वं सुमित्राय प्रदापयेत् ॥ ३७९ ॥

विप्रादिसर्वभक्तेभ्यस्तण्डुलं दापयेत्क्रमात् ।
ब्राह्मणान् भोजयेत्पश्चात् दीनानाथांश्च भोजयेत् ॥
आत्मनो हितमाकांक्षन् य एवं विधिमाचरेत् ॥ ३८० ॥

इति श्रीकुमारतन्त्रे मासपूजाविधिर्नाम एकोनचत्वारिंशः पटलः

---

## चत्वारिंशः पटलः

### अङ्कुरार्पणविधिः

सर्वमङ्गलमाङ्गल्यं प्रवक्ष्याम्यङ्कुरार्पणम् ।
अनंकुरं नयेत्कर्म तत्कर्म निष्फलं भवेत् ॥ १ ॥

तस्मान्मङ्गलकर्मादौ कारयेदङ्कुरार्पणम् ।
अयुगेऽह्निप्रकर्तव्यं कर्मणः पूर्वतो निशि ॥ २ ॥

पालिकाघटिकांश्चैव शरावश्च त्रिधा भवेत् ।
ईशविष्णुविरिञ्चिश्च तेषामेवाधिपाः स्मृताः ॥ ३ ॥

सौवर्णं राजतं ताम्रं कांस्यं वा मृण्मयन्तु वा ।
शरावाणि च संग्राह्य पिष्टेनैव विमर्शयेत् ॥ ४ ॥

कालं छिन्नं च सुषिरं भेदच्छेदं जलीमुखम् ।
निर्दग्धश्च पुराणश्च वर्जयेत्तु प्रयत्नतः ॥ ५ ॥

अश्वत्थं बिल्वपत्रैश्च तन्मध्ये बन्धयेद्दृढम् ।
पालिकाभ्यन्तरं दर्भैर्निश्छिद्रं कारयेद्बुधः ॥ ६ ॥

गोशकृच्चूर्णमहितैर्मृद्भिः सर्वाणि पूर्य च ।
प्रत्येक च करे ग्राह्य वाहयित्वाथ भक्तकैः ॥ ७ ॥

सुमित्रं चास्त्रराजं च सर्वातोद्यसमायुतम् ।
ग्रामप्रदक्षिणं कृत्वा मृत्संग्रहणमाचरेत् ॥ ८ ॥

उत्तमं प्रागुदीची स्यात् मध्यमं पश्चिमं स्मृतम् ।
अधमं दक्षिणं प्रोक्तं मृत्सङ्ग्रहणकर्मणि ॥ ९ ॥

पुष्पारामे च नद्यां वा तडागे बिल्वमूलके ।
आलये चैव निश्चित्य गत्वा शुद्धभुवस्थलं ॥ १० ॥

अस्त्रेण प्रोक्ष्य तद्देशं प्रीणयेद्भुवि नायकम् ।
पुण्याहं वाचयेत्तत्र गायत्र्या प्रोक्ष्य देशिकः ॥ ११ ॥

भूपुरं तत्र संलिख्य भूबीजेनार्चयेत् भुवम् ।
सालंकृतं खनित्रं च विन्यस्यास्त्रेण पूजयेत् ॥ १२ ॥

धूपदीपं ततो दत्वा मृदं संग्राह्य देशिकः ।
गन्धद्वारेति मन्त्रेण स्थालिकायां गृहेन्मृदम् ॥ १३ ॥

संरक्ष्यास्त्रेण संछाद्य गणिकाभिस्तु वाहयेत् ।
तध्यवस्त्रं च चतुः शालिबीजैः संपूज्य देशिकः ॥ १४ ॥

प्रविशेदालयं पश्चादङ्कुरार्पणमाचरेत् ।
प्रासादस्याग्रके वाऽपि दक्षिणे चोत्तरेऽपि वा ॥ १५ ॥

गोमयालेपिते शुद्धे मण्डपे समलंकृते ।
प्राक्सूत्रं पञ्चसूत्रं स्यादुदवसूत्रं तथैव च ॥ १६ ॥

मध्ये चतुष्पदं त्यक्त्वा स्थण्डिलं तत्र कल्पयेत् ।
ससूत्रं सापिधानं च द्रोणोदकप्रपूरितम् ॥ १७ ॥





कुम्भं न्यस्त्वार्चयेत् सोममोषधीशं महामुने ।
शरावं पालिकां चैव घटिकां च यथाक्रमम् ॥ १८ ॥

शरावादि क्रमान् न्यस्त्वा हृदयेन तु मन्त्रतः ।
संगृह्य तन्मृदं चैव पालिकादीनि पूरयेत् ॥ १९ ॥

मध्ये ग्रन्थि पवित्रां च तेषां मध्ये न्यसेद् बुधः ।
वैवस्वतो विवस्वांश्च रविर्मार्ताण्डभास्करः ॥ २० ॥

लोकप्रकाशकश्चैव लोकसाक्षित्रिविक्रमः ।
आदित्यश्चैव सूर्यश्च अंशुमाली दिवाकरः ॥ २१ ॥

दिशैता द्वादशादित्यानीशानादियथाक्रमम् ।
आसनैर्मूर्तिमूलैर्वा पूजयेत् स्वस्वनामभिः ॥ २२ ॥

तिलसर्षपनिष्पावमापमुद्गं चणं तथा ।
कुलुत्थं शाल्यपामार्गं श्यामाकां च प्रियङ्गवम् ॥ २३ ॥

यवद्वादशधान्यानि क्षीरोक्षानि च वापयेत् ।
या जाता इति मन्त्रेण ओषधीमभिमन्त्र्य च ॥ २४ ॥

यथान्यायं समभ्यर्च्य धूपदीपं प्रदापयेत् ।
पायसं शशिने द्वादशादित्येभ्यः प्रदापयेत् ॥ २५ ॥

दत्वा तेभ्यश्च ताम्बूलं जनेभ्यो दापयेत्ततः ।
हृदयेन तु मन्त्रेण गुरुर्बीजादिवापयेत ॥ २६ ॥

तत्रस्था ब्राह्मणाः शैवगङ्गादि यथाक्रमम् ।
हृदास्त्रेण विधायात्र सेचयेत्कुम्भतोयकैः ॥ २७ ॥

यावत्कर्मादिकं तावत् सुगुप्तान्यंकुराणि तु ।
अंकुरं चोर्ध्वगं चैव पूर्णं चेत्तु शुभावहम् ॥ २८ ॥

अपूर्णानि च कुब्जानि वक्रतिर्यग्गतानि च ।
श्यामलानि च शून्यानि मूषकैर्भक्षितानि वै ॥ २९ ॥

अंकुराण्यशुभान्यत्र तद्दोषशमनाय च ।
अस्त्रेणैव शतं जप्त्वा घृतेनैव शतं हुनेत् ॥ ३० ॥

ग्रामप्रदक्षिणं कुर्यात् तीर्थांकुरमानन्दितम् ।
अंकुराणि च कर्मान्ते पयसाऽप्लाव्य बुद्धिमान् ॥ ३१ ॥

वाहयित्वा विधानज्ञस्संत्यजेत्तु जलाशये ।
चतुर्विंशतिपक्षे तु प्रत्येकं चाष्टकं ग्रहेत ॥ ३२ ॥

प्राक्सूत्रं वसुसूत्रं स्यादुदक्सूत्रं तथैव च ।
मध्ये व्योमपदं ग्राह्य लोपयेदभितोऽष्टकम् ॥ ३३ ॥

त्रिकोणाभ्यन्तरे मूर्त्या चतुर्दिक्षुक्रमाद्बुधः ।
द्वारार्थश्च महाशासु पद्मेकं परित्यजेत् ॥ ३४ ॥

स्थण्डिलं कारयेत्तत्र तिलतण्डुलशालिभिः ।
तस्य मध्ये लिखेत्पद्मं साष्टपत्र सकर्णिकम् ॥ ३५ ॥



स्थापयेत्कर्णिकामध्ये चन्द्रकुम्भं नवं शुभम् ।
पालिके द्वे न्यसेद्धीमान् द्वाराणां पार्श्वयोर्बुधः ॥ ३६ ॥

विन्यसेद्घटिके द्वे च कोणेष्वेवं पदद्वये ।
शेषेषु च शरावाणि स्थापयेद्धृदयेन तु ॥ ३७ ॥

पूजयित्वा यथान्यायं भागान्दिक्पालकान्वसून् ।
वस्त्रेणाच्छाद्य परितः दर्भैश्चैव परिस्तरेत् ॥ ३८ ॥

शेषं पूर्ववदुद्दिष्टं विश्वामित्र महामुने ।
कर्मणामभिवृद्ध्यर्थं कर्माङ्गं मङ्गलांकुरम् ॥
एवं यः कुरुते मर्त्यस्सर्वान् कामानवाप्नुयात् ॥ ३९ ॥

इति श्रीकुमारतन्त्रे अंकुरार्पणविधिर्नामचत्वारिंशत्पटलः

---

## एकचत्वारिंशत्पटलः

### महावल्लीदेवसेनास्थापनविधिः

महावल्लीदेवसेनास्थापनं शृणु सुव्रत ।
स्कन्दस्य दक्षिणे वामे शक्तिगेहं प्रकल्पयेत् ॥ १ ॥

सर्वसंपत्करं पुण्यं सर्वमङ्गलकारकम् ।
स्कन्दस्य कर्णसीमान्तं बाहुसीमान्तमेव वा ॥ २ ॥

स्तनसीमान्तमुत्तुङ्गमुत्तमं मध्यमाधमम् ।
मध्यमं दशतालेन मानोन्मानादि कारयेत् ॥ ३ ॥

सर्वलक्षणसंपूर्णं स्निग्धगात्रं सुयौवनम् ।
लोहजं शैलजं चैव दारुजं मृण्मयं तु वा ॥ ४ ॥

आयादिशुद्धसंयुक्तं सर्वाभरणभूषितम् ।
कुञ्चितं समपादं तु सव्यपादं प्रलम्बितम् ॥ ५ ॥

पद्मधृन् वामहस्तं च दक्षहस्तं प्रलम्बितम् ।
श्यामवर्णं विशालांगं महावल्लीस्वरूपकम् ॥ ६ ॥

वामपादस्थितं चैव सव्यपादं तु कुञ्चितम् ।
पद्मधृन् सव्यहस्तं च वामहस्तं प्रलम्बितम् ॥ ७ ॥

रक्तवर्णं विशालाक्षं देवसेनास्वरूपकम् ।
एवं सङ्कल्प्य मतिमान् प्रतिष्ठामाचरेत्ततः ॥ ८ ॥

उत्तरायणकाले तु शुक्लपक्षे शुभे दिने ।
तिथिवारादिभिर्युक्ते सुलग्ने चैव कारयेत् ॥ ९ ॥

प्रसादस्याग्रतः कृत्वा मण्डपं चतुरश्रकम् ।
दशाङ्गतालमायामं षोडशस्तम्भसंयुतम् ॥ १० ॥

पंक्तित्रयसमायुक्तं चतुर्द्वारसमन्वितम् ।
तत्त्रिभागैकतो मध्ये वेदीदर्पणसंनिभाम् ॥ ११ ॥

कुण्डानि च चतुर्दिक्षु पद्माकाराणि कारयेत् ।
प्रधानकुण्डमैशान्ये योन्याकारं प्रकल्पयेत् ॥ १२



एकांशं योनिकुण्डं स्यात् वेदिपूर्वं विधीयते ।
मेखलात्रयसंयुक्तं नाभियुक् योनिनैव च ॥ १३ ॥

तदर्धमायतं कुर्यात्तद्वामे स्नानमण्डपम् ।
तन्मध्ये वेदिकां कुर्यात्तालमात्रसमायतम् ॥ १४ ॥

स्थण्डिलं वेदिकोर्ध्वे तु तिलतण्डुलशालिभिः ।
कृत्वा संप्रोक्ष्य चास्त्रेण बेरं तत्रैव विन्यसेत् ॥ १५ ॥

शैलजे रत्नविन्यासं प्रतिष्ठाकाल एव च ।
दक्षिणे च महावल्लीं देवसेनां तदुत्तरे ॥ १६ ॥

न्यस्त्वाऽथ रत्नविन्यासं कारयेद्विधिपूर्वकम् ।
यथा दृढतरं सम्यक् कारयेच्छिल्पिना बुधः ॥ १७ ॥

नयनोन्मीलनं कुर्यात् नेत्रयुग्मयुते दिने ।
स्वर्णसूचीप्रहाराभ्यां दृष्टिमण्डलमालिखेत् ॥ १८ ॥

कृष्णमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत् ।
विसृज्य शिल्पिनं धीमान् स्वर्णदूर्वाङ्कुरैरपि ॥ १९ ॥

नेत्रद्वारं विलिख्याथ नेत्रमुद्रां प्रदर्शयेत् ।
मधुवाता ऋतायेति तर्पयेन्मधुना दृशम् ॥ २० ॥

घृतं मिमिक्षेति मन्त्रेण घृतेनैव तु तर्पयेत् ।
आप्यायस्वेति मन्त्रेण क्षीरेणैव तु तर्पयेत् ॥ २१ ॥

सुवर्णं रजतं ताम्रं कांस्यं मध्वाज्यपात्रकम् ।
प्रस्थं प्रस्थेन संपूर्णं सर्वेषां कांस्यमेव च ॥ २२ ॥

गोर्धेनुहव्यमन्त्रेण सवत्सां गां प्रदर्शयेत् ।
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणानपि दर्शयेत् ॥ २३ ॥

प्रच्छन्नपटमावर्ज्य जनान् सर्वान् प्रदर्शयेत् ।
अष्टमृत्सलिलेनैव पञ्चत्वक्सलिलेन च ॥ २४ ॥

कारयेत्प्रतिमाशुद्धिं शुद्धिरशुद्धिरिति ब्रुवन् ।
आपोहिष्ठामयेनेति पवमानैश्च पञ्चभिः ॥ २५ ॥

सर्वालङ्कारसंयुक्तं सर्वातोद्यसमन्वितम् ।
स्वस्तिवाचसमश्चेति संनिवेश्य यथा बलम् ॥ २६ ॥

ग्रामप्रदक्षिणं कुर्यात् सर्वभक्तजनैः सहः ।
ततो जलाशयं प्राप्य तीरे समतले शुभे ॥ २७ ॥

प्रोक्षयेदस्त्रमन्त्रेण बेरं तत्रैव विन्यसेत् ।
कूर्चं शिरसि बध्वा तु वस्त्रयुग्मेन वेष्टयेत् ॥ २८ ॥

जलमध्ये प्रपायुक्तं कृत्वा पीठद्वयेन्यसेत् ।
ऋगाद्यध्ययनं कुर्वन् द्विजैः प्रागादिदिक्षु च ॥ २९ ॥

एकरात्रं द्विरात्रं वा त्रिरात्रमपि वासयेत् ।
यागशालां गुरुर्गत्वा प्रोक्षयेदस्त्रमन्त्रतः ॥ ३० ॥



दर्भमाल्यैरलंकृत्य वितानस्तम्भवेष्टनैः ।
पुण्याहप्रोक्षणं कुर्यात् स्थण्डिलं वेदिकोपरि ॥ ३१ ॥

अष्टद्रोणैः शालिभिश्च तदर्धैस्तण्डुलैरपि ।
तदर्धैश्च तिलैश्चैव कृत्वा पद्मस्य मालिकाम् ॥ ३२ ॥

दर्भैरास्तीर्यशयनमण्डलाद्यैः प्रकल्पयेत् ।
पर्यग्निकरणं कुर्यात् वास्तुहोमेन वह्निना ॥ ३३ ॥

प्रक्षिप्य विकिरान् मन्त्री मण्डपं शुद्धिमाचरेत् ।
जलादुत्तीर्य शक्ती द्वे स्नानवेद्युपरिन्यसेत् ॥ ३४ ॥

कर्तव्यं प्रतिमाशुद्धिं पवमानमुदीरयन् ।
महावल्लीं देवसेनां कौतुकं बन्धयेत् बुधः ॥ ३५ ॥

शयने शाययेद्देवीं प्राक्शिरश्चोर्ध्ववक्त्रकम् ।
नववस्त्रेण संछाद्य गन्धपुष्पादिनार्चयेत् ॥ ३६ ॥

द्रोणतोयेन संपूर्णं सकूर्चं सापिधानकम् ।
हेमवस्त्रसमायुक्तं गन्धाद्यैः परिपूरितम् ॥ ३७ ॥

वर्धनीद्वयमादाय शिरोभागे निधापयेत् ।
तदर्धमात्रवर्धन्याः प्रागाद्यष्टौ न्यसेत्ततः ॥ ३८ ॥

दक्षिणस्थितवर्धन्यां महावल्लीं स्वबीजतः ।
उत्तरस्थितवर्धन्यां देवसेनां स्वबीजतः ॥ ३९ ॥

आवाह्य गन्धपुष्पाद्यैस्तदङ्गानि च पूजयेत् ।
उषा च प्रत्युषा चैव सती च सत्वती तथा ॥ ४० ॥

स्वधा विश्वमुखी चैव सुराध्यक्षा सरस्वती ।
देवसेना महावल्ल्योरेताश्चैवाष्टमूर्तयः । ४१ ॥

वराम्बुजकरा स्थूला स्वस्वनामाभिरर्चयेत् ।
धूपदीपं ततो दत्त्वा पायसं तु निवेदयेत् ॥ ४२ ॥

द्वारद्वाराधिपानिष्ट्वा सास्त्रान् दिक्पालकानपि ।
अग्निकार्योक्तमार्गेण नामकर्मान्तमाचरेत् ॥ ४३ ॥

कुण्डमध्ये यजेद्देवीं तत्र मूलाङ्गमन्त्रकैः ।
पलाशखादिराश्वत्थवटाः पूर्वादिदिक्षु च ॥ ४४ ॥

प्रधानस्य पलाशः स्यात् समिधः संप्रकीर्तितः ।
समिदाज्य चरूंश्चैव लाजसक्तुतिलानि च ॥ ४५ ॥

सर्षपं माषमुद्गं च प्रियङ्गुमधुपायसम् ।
मूलसद्यादि चास्त्रान्तैर्मन्त्रैर्होमं समाचरेत् ॥ ४६ ॥

द्रव्यान्ते व्याहृतीर्हुत्वा स्पृष्ट्वा स्पृष्ट्वा हुनेद्गुरुः ।
शतमर्धं तदर्धं वा देवीभ्यां प्रतिहोमयेत् ॥ ४७ ॥

देवसेनामहावल्ल्योः गायत्र्या हविषा हुनेत् ।
गौरीमिमाय मन्त्रेण द्वादशाहुतिमाचरेत् ॥ ४८ ॥



दिशास्वध्ययनं कुर्यात् चतुर्वेदान् द्विजोत्तमैः ।
स्विष्टकृच्च हुनेत्तेन मूलात्पूर्णाहुतिं हुनेत् ॥ ४९ ॥

प्रातः स्नानादिकं कृत्वा संध्यानुष्ठानकर्म च ।
औपासनञ्च कृत्वाथ मण्डपं प्रविशेद्गुरुः ॥ ५० ॥

पादौ प्रक्षाल्य चाचम्य बेरपूजां विधाय च ।
सामान्यार्घ्यकरो मन्त्री द्वारद्वाराधिपान् यजेत् ॥ ५१ ॥

विशेषार्घ्यं ततः कल्प्य तेनैव प्रोक्ष्य वर्धनीम् ।
प्राग्वदभ्यर्च्य वर्धन्यैर्गन्धपुष्पादिभिर्गुरुः ॥ ५२ ॥

कुण्डाधिदेवान् संपूज्य परिषिच्य यथाविधि ।
जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ॥ ५३ ॥

वह्नेर्देव्यौ समादाय वर्धन्योर्विन्यसेत् पृथक्
शयनात् बिम्बमुत्थाप्य तत्तद्धृदयमन्त्रतः ॥ ५४ ॥

स्नानवेद्युपरिन्यस्त्वा पूजयेद्बिल्वतोयकैः ।
स्कन्दसूक्तेन मन्त्रेण ततो गौरी मिमेति च ॥ ५५ ॥

दुर्गांदेवीति मन्त्रेण गायत्र्याभ्यर्च्य धूपयेत् ।
वस्त्राभरणमालाद्यैरलंकृत्य विशेषतः ॥ ५६ ॥

सुलग्ने सुमुहूर्ते च यजमानानुकूलके ।
स्थापयेत्तु महावल्लीं स्कन्ददक्षिणपार्श्वके ॥ ५७ ॥

वामपार्श्वे महासेनां स्थापयेत्तु यथा दृढम् ।
किञ्चिद् गुहाभिवक्त्रे च स्थाप्य शिल्पिनमुत्सृजेत् ॥ ५८ ॥

शान्तिकुम्भजलेनैव प्रोक्षयेन्मुनिपुङ्गव ।
वर्धनीद्वयमादाय कृत्वा धामप्रदक्षिणम् ॥ ५९ ॥

तत्तदग्रे तु विन्यस्य वर्धनीद्वयमेव च ।
प्रत्येकमक्षरन्यासं कारयेद् विधिना बुधः ॥ ६० ॥

पूर्वमेव महावल्लीं देवसेनां ततः परम् ।
वर्धन्योर्बीजमादाय विन्यसेत् स्वस्वचूचुके ॥ ६१ ॥

वर्धनीसलिलैः पूज्य कुर्यात् प्राणप्रतिष्ठिकाम् ।
वर्धन्यष्टाम्बुभिः पीठे प्रागादिष्वभिषेचयेत् ॥ ६२ ॥

गन्धपुष्पादिनाभ्यर्च्य प्रभूतहविषं ददेत् ।
प्रायश्चित्तार्थमस्त्रेण शतमष्टोत्तरं हुनेत् ॥ ६३ ॥

आचार्यं पूजयेत् पश्चात् वस्त्रहेमाङ्गुलीयकैः ।
यागोपकरणं सर्वं देशिकाय प्रदापयेत् ॥ ६४ ॥

उत्तमं दशनिष्कं तु मध्यमं तु तदर्धकम् ।
तदर्धमधमं ज्ञेयं देशिकस्य तु दक्षिणा ॥ ६५ ॥

निष्कद्वयेन मतिमान् मूर्तिमान् संप्रपूजयेत् ।
जापकान् वास्तुहोतारं शिल्पिनं प्रीणयेत् ततः ॥ ६६ ॥



ब्राह्मणान् भोजयेत् पश्चात् दीनानाथांश्च भोजयेत् ।
ततः स्कन्दस्य देव्योश्च कुर्यादुद्वाह कर्म च ॥ ६७ ॥

मालिकां दापयेत् तेषां मालां हस्तैः परस्परम् ।
महावल्ली पिता कृष्णो देवसेना गुरुर्वृषा ॥ ६८ ॥

एताभ्यां कारयेन्मन्त्री विध्युक्तं सर्वकर्म च ।
तेषां प्रक्षाल्य पादौ च वस्त्रैः स्वैर्मन्त्रशास्त्रवित् ॥ ६९ ॥

स्वसूक्तेनैव मतिमान् कर्म वैवाहिकं चरेत् ।
शक्तिद्वयं समासाद्य प्रत्येकं मन्त्रवाससा ॥ ७० ॥

चतुर्मुखः पुरोधाश्च दातारौ कृष्णवज्रिणौ ।
मङ्गल्यतन्तुनानेन माङ्गल्यं कारयेद् बुधः ॥ ७१ ॥

स्वसूक्तेन विधानेन कर्म वैवाहिकं हुनेत् ।
महावल्ल्यायुतः कामो वसन्ते देवसेनया ॥ ७२ ॥

एताभ्यां लाजदानं च कुर्याल्लाजान् स्वमन्त्रतः ।
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ॥ ७३ ॥

पूर्णाहुतिं ततः कुर्यात् मूलमन्त्रेण मन्त्रवित् ।
ताम्बूलं दापयेत् तत्र जनेभ्यश्च यथाक्रमम् ॥ ७४ ॥

शुद्धान्नं पायसं मौद्गं गुलान्नं च तिलान्नकम् ।
प्रियंग्वन्नं च मधुना सूपापूपैः फलैः सह ॥ ७५ ॥

दत्वा देवाय देवीभ्यां ब्राह्मणानपि भोजयेत् ।
चन्द्रार्कतारकं यावत् मन्त्रादिशक्तिभिः सह ॥ ७६ ॥

युवाभ्यां स्वेच्छया देव्यौ स्थातव्यमिह मन्दिरे ।
इति विज्ञाप्य नत्वाथ प्रार्थयेदर्थमीप्सितम् ॥ ७७ ॥

चतुर्थे दिवसे पश्चात् पञ्चमेऽहनि वा पुनः ।
शेषहोमं स्वसूत्रेण कारयेन्मुनिपुङ्गव ॥ ७८ ॥

स्नपनं कारयेदन्ते यथाविभवविस्तरम् ।
एवं यः कुरुते मर्त्यः पुत्रपौत्रकलत्रकैः ।
सर्वान् कामानिह प्राप्य देहान्ते मुक्तिमाप्नुयात् ॥ ७९ ॥

इति श्रीकुमारतन्त्रे महावल्लीदेवसेनास्थापनविधिर्नाम एकचत्वारिंशत्पटलः

---

## द्विचत्वारिंशत्पटलः

### सुमित्रस्थापन विधिः

सुमित्रस्थापनं वक्ष्ये शृणु कौशिक सुव्रत ।
उक्त्वैव जननं पूर्वं प्रतिष्ठां च ततः परम् ॥ १ ॥

वसिष्ठगोत्रो स्वर्णाक्ष पुत्रः काशीपुरे वसन् ।
त्रिजन्मसु पुरा स्कन्दं समभ्यर्च्य यथाविधि ॥ २ ॥

सुमित्र इति सेनान्या प्रोक्तः प्रीतेन देवलः ।
सुब्रह्मण्यस्य सामीप्ये गाणपत्यमवाप्तवान् ॥ ३ ॥



मूलबेरार्थमत्यर्धं पञ्चांशं द्व्यर्धमेव च ।
पञ्चांशं मुनिभागे च द्वात्रिंशे द्व्यंशमेव वा ॥ ४ ॥

उत्तमं नवतालेन सुमित्रं कारयेद्बुधः ।
द्विनेत्रं द्विभुजं रक्तं सुवक्त्रं च सुयौवनम् ॥ ५ ॥

दक्षिणे शक्तिहस्तं च वामं च कटिबन्धनम् ।
अलकं ज्योतिसंयुक्तं दंष्ट्रिणं रुचिराननम् ॥ ६ ॥

करण्डमकुटं वाऽपि जटामकुटमेव वा ।
हस्तौ मुकुलवद्बद्धौ दक्षिणं शक्तिसंयुतम् ॥ ७ ॥

सर्वाभरणसंयुक्तमासनस्थानकं तु वा ।
यज्ञोपवीतसंयुक्तं पद्मपीठोपरिस्थितम् ॥ ८ ॥

इत्थं रूपं सुमित्रस्य गुहेन विहितं पुरा ।
लोहेन शिलया चैव कारयेन्मुनिपुङ्गव ॥ ९ ॥

प्रासादार्धं तदर्धं वाप्यैशान्ये तस्य गेहकम् ।
एवं सङ्कल्प्य मतिमान् स्थापनं सम्यगाचरेत् ॥ १० ॥

षान्तं षष्ठस्वरोपेतं सुमित्रस्यैव बीजकम् ।
उत्तरायणकाले तु शुक्लपक्षे शुभेदिने ॥ ११ ॥

प्रासादस्याग्रके वाऽपि पश्चिमे चोत्तरेपि वा ।
षोडशद्वादशस्तम्भयुक्तं मण्डपमाचरेत् ॥ १२ ॥

कृत्वाऽथ वेदिकामध्ये तत्त्रिभागैकभागतः ।
चतुरश्रं चतुर्दिक्षु प्रधानं तु षडश्रकम् ॥ १३ ॥

नाभियोनिसमायुक्तं सर्वलक्षणसंयुतम् ।
मण्डपं समलंकृत्य वितानस्तम्भवेष्टनैः ॥ १४ ॥

दर्भमालासमायुक्तं दशायुधसमायुतम् ।
उत्तरे स्नानवेदिं तु तदर्धेनैव कारयेत् ॥ १५ ॥

रत्नन्यासं यथान्यायं सुदृढं कारयेद्बुधः ।
नयनोन्मीलनं कुर्यान्नेत्रयुग्मदिने शुभे ॥ १६ ॥

बेरशुद्धिं ततः कृत्वा कुर्याद्ग्रामप्रदक्षिणम् ।
एकरात्रं त्रिरात्रं वा जले चैवाधिवासयेत् ॥ १७ ॥

स्थण्डिलं वेदिकोर्ध्वे तु कल्पयेच्छालितण्डुलैः ।
शयनं कल्पयेद्विद्वानण्डजाद्यैरनुक्रमात् ॥ १८ ॥

जलादुत्तीर्य विमलतुङ्गवेद्युपरि न्यसेत् ।
अष्टमृत्सलिलैर्विद्वान् तल्लिंगेनाभिषेचयेत् ॥ १९ ॥

कौतुकं बन्धयित्वाथ गन्धमाल्यैर्विभूषयेत् ।
शयने शाययेद्बिम्बं प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥ २० ॥

नववस्त्रद्वयेनैव छादयेत्तु सुमित्रकम् ।
षट्सूत्रं सापिधानञ्च सवस्त्रं हेमसंयुतम् ॥ २१ ॥



सुमित्रस्य शिरोभागे स्थापयेत्कुम्भमुत्तमम् ।
तस्मिन् सुमित्रमावाह्य स्वबीजं साङ्गमुच्चरेत् ॥ २२ ॥

अभितः कलशानष्टौ न्यसेत् प्रागाद्यनुक्रमात् ।
इन्द्रादिलोकपालांश्च स्वस्वनामभिरर्चयेत् ॥ २३ ॥

अर्चयित्वा सुगन्धांश्च नैवेद्यं दापयेत्ततः ।
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं ततः ॥ २४ ॥

समिदाज्य चरुं लाजं सक्तुंचैव तिलानपि ।
मुद्गं सुमित्रमूलेन षडङ्गेनैव होमयेत् ॥ २५ ॥

तदर्धं वा तदर्धं वा द्रव्यान्ते व्याहृतिं हुनेत् ।
स्पृष्ट्वा स्पृष्ट्वा विशेषेण हृदापूर्णाहुतिं हुनेत् ॥ २६ ॥

प्रातः स्नात्वा तु विधिवत्कृतनित्यविधिर्गुरुः ।
प्राक् शिरोऽर्पणकं कुर्यात् हेमदूर्वाङ्कुराक्षतैः ॥ २७ ॥

जयादिरभ्याधानञ्च राष्ट्रभृच्च क्रमाद्धुनेत् ।
स्नानवेद्यां चलं बेरमचलं मानुषे पदे ॥ २८ ॥

संस्थाप्य स्थापयेद्विद्वानष्टमृत्सलिलेन च ।
आपोहिष्ठेति मन्त्रेण पावमानेन वा पुनः ॥ २९ ॥

अभ्यसेत् षडक्षरं न्यासं ब्रह्माङ्गानि ततः परम् ।
कुम्भमादाय मतिमान् कृत्वा धामप्रदक्षिणम् ॥ ३० ॥

बेराग्रे स्थण्डिले न्यस्त्वा सुमुहूर्ते सुलग्नके ।
कुम्भाद्बीजं समादाय बेरस्य हृदि विन्यसेत् ॥ ३१ ॥

प्राणप्रतिष्ठकां कुर्यात यथाविधि समाहितः ।
अर्चयेद्गन्धपुष्पाद्यर्धूपदीपैः प्रदापयेत् ॥ ३२ ॥

आचार्यं पूजयेत्पश्चात् वस्त्रहेमांगुलीयकैः ।
उत्तमं दशनिष्कन्तु मध्यमन्तु तदर्धकम् ॥ ३३ ॥

तदर्धमधमं ज्ञेयं देशिकस्य तु दक्षिणा ।
ब्राह्मणान् भोजयेत्पश्चाच्छिवभक्तांश्च वैदिकान् ॥
एवं यः कुरुते मर्त्यः सर्वपापैः प्रमुच्यते ॥ ३४ ॥

इति श्रीकुमारतन्त्रे सुमित्रस्थापनविधिर्नामद्विचत्वारिंशत्पटलः ॥

---

## त्रिचत्वारिंशत्पटलः

### गजस्थापनविधिः

अतः परं प्रवक्ष्यामि गजस्थापनमुत्तमम् ।
गजं वा स्वमयूरं वा स्थापनीयं गुहाग्रतः ॥ १ ॥

अन्तरावरणे प्रोक्ता देवाभिमुखमासनम् ।
त्रिविधं स्थानकं प्रोक्तं शैलं लोहसुधामयम् ॥ २ ॥

लोहजं शैलजं बेरं स्थानकं परिचक्षते ।
सुधामयन्तु कर्तव्यं शयनं मुनिपुङ्गव ॥ ३ ॥



उत्तमं लोहजं प्रोक्तं शैलजं मध्यमं भवेत् ।
सुधामयं कनिष्ठंस्यात्फलं कर्तुः प्रचक्षते ॥ ४ ॥

द्वारोत्सेधं चतुर्थांशमर्धपादोनमेव च ।
समं वा द्विगुणं वाऽपि त्रिगुणं वा विशेषतः ॥ ५ ॥

षट्तालेन तु कर्तव्यं पञ्चतालेन वा मतम् ।
ऐरावतकुले जातं श्वेतरूपं महाबलम् ॥ ६ ॥

चतुःशृङ्गं द्विशृङ्गं वा गजलक्षणसंयुतम् ।
मयूरमुत्तमं पूर्वं प्रोक्तं तद्वत्समाचरेत् ॥ ७ ॥

चतुर्द्वारसमायुक्तं शिखरेण समन्वितम् ।
गजस्यायतनं प्रोक्तं पीठाग्रे परिकल्पयेत् ॥ ८ ॥

प्रासादाग्रेऽथपूर्वे वा दक्षिणे चोत्तरेऽपि वा ।
पञ्चादिनवहस्तान्तं मण्डपस्य विशालकम् ॥ ९ ॥

षोडशस्तम्भसंयुक्तं चतुस्तोरणसंयुतम् ।
तन्मध्ये वेदिकां कुर्यादुपवेदिसमन्वितम् ॥ १० ॥

तत्पूर्वे कुण्डमेकन्तु चतुरश्रं प्रकल्पयेत् ।
अंकुरार्पणमादौ तु रत्नन्यासं ततः परम् ॥ ११ ॥

नयनोन्मीलनं बेरशुद्धिं ग्रामप्रदक्षिणम् ।
जलाधिवासनं पश्चात् शयनं विधिना पुरः ॥ १२ ॥

शयने शाययेद्बेरं प्राक्शिरोत्तरवक्त्रकम् ।
कौतुकं बन्धयेत्कण्ठे नैवेद्यं दापयेत्ततः ॥ १३ ॥

कुम्भं तस्य शिरोभागे सर्वोपकरणान्वितम् ।
न्यस्त्वा गजं समावाह्य गजमूलेन मन्त्रवित् ॥ १४ ॥

परितः कलशाष्टेषु लोकपालान् समर्चयेत् ।
त्रिखण्डकल्पनां कृत्वा जानुकण्ठशिरोऽवधि ॥ १५ ॥

गजात्मविद्यासशिवतत्त्वं सेश्वरमर्चयेत् ।
शिवाग्निं विधिना कृत्वा ततो होमं समाचरेत् ॥ १६ ॥

अश्वत्थकं शमीवृक्षं घृतलाजोदनैस्तिलैः ।
यवैर्माषैश्च जुहुयात् गजमूलषडङ्गकैः ॥ १७ ॥

गजगायत्रिणा चैव सहस्रन्तु तदर्धकम् ।
प्रतिद्रव्यं हृदेनैव द्रव्यान्ते व्याहृतिं हुनेत् ॥ १८ ॥

ब्रह्ममूर्त्यङ्गमन्त्रैश्च होमयेन्मन्त्रवित्तमः ।
प्रातः स्नात्वाथ विधिवत् कृतनित्यविधिर्गुरुः ॥ १९ ॥

जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात् ।
पूर्णाहुतिञ्च शिरसा कृत्वाग्निञ्च विसर्जयेत् ॥ २० ॥

शयनाद्गजमुत्थाप्य स्थाप्य तद्गेहमध्यमे ।
कुम्भाद्बीजं गजशृङ्गे विन्यसेन्न्यासपूर्वकम् ॥ २१ ॥



गन्धपुष्पादिनाभ्यर्च्य मुद्गान्नं दापयेद्गुरुः ।
ब्राह्मणान् भोजयेत्पश्चात् वित्तशाठ्यं न कारयेत् ॥ २२ ॥

प्रदक्षिणे तु मतिमान् गजयुक्तं समाचरेत् ।
परिवारामरान् सर्वान् युक्तं वाऽथ विमुक्तकम् ॥
एवं यः कुरुते मर्त्यः सर्वान् कामानवाप्नुयात् ॥ २३ ॥

इति श्रीकुमारतन्त्रे गजस्थापनविधिर्नाम त्रिचत्वारिंशत्पटलः

---

## चतुश्चत्वारिंशत्पटलः

### रथप्रतिष्ठाविधिः

रथप्रतिष्ठां वक्ष्येऽहं तल्लक्षणपुरःसरम् ।
रथोऽनेकविधः प्रोक्तः सलक्षणविभेदतः ॥ १ ॥

विजयं चैव कान्तञ्च श्रीकेशञ्च विशालकम् ।
निभद्रं श्रीविशालञ्च भद्रं भद्रविशालकम् ॥ २ ॥

एवमष्टविधं प्रोक्तं विश्वामित्र महामुने ।
त्रिचक्रात् दशचक्रान्तं विजयादि यथाक्रमम् ॥ ३ ॥

त्रिविधस्य समारभ्य षट् षडंगुलवर्धनात् ।
निष्कम्पकावसानन्तु त्रिपञ्चांघ्रिविशालकम् ॥ ४ ॥

चक्रतारत्रिभागैकं पञ्चभागाद्विभागकम् ।
षड्भागे तु त्रिभागञ्च मध्ये कुक्षिविशालकम् ॥ ५ ॥

कुक्षिद्विलक्षणं तारं चतुर्भागैकमेव च ।
पञ्चमांशैकभागश्च तन्मध्ये नाभिविस्तृतम् ॥ ६ ॥

अथवांगुलमानेन नाभेर्मानं प्रचक्षते ।
चतुरंगुलमारभ्य चैकांगुलविवर्धनात् ॥ ७ ॥

एकादशांगुलांतं स्यादष्टाधानादि विस्तृतम् ।
चित्रवृत्तं यथा नाभेश्चाक्षाग्रस्य प्रवेशनम् ॥ ८ ॥

वृक्षैकेन विना चक्रं कारयेद्बहुवृक्षकैः ।
त्रिद्रव्यैर्योजयेच्चक्रं पञ्चद्रव्येण वा मतम् ॥ ९ ॥

दारुकीलेन युञ्जीयादधः पट्टेन बन्धयेत् ।
द्वारुपट्टिकया युक्तं यथाबलवशं तथा ॥ १० ॥

भारबाह्यन्तरं चक्रं युक्त्या युञ्जीत बुद्धिमान् ।
सपादकिष्कुमारभ्य षट्षडंगुलिवर्धयेत् ॥ ११ ॥

भारस्य रुद्रकिष्कं तत् चत्वारिंशत्प्रमाणकम् ।
भारबाह्येतरे मध्ये त्रिविधं मानमूहयेत् ॥ १२ ॥

भारश्च त्रिचतुःपञ्चसप्तमं मुनिसत्तम ।
वेदांगुलादिरुद्रान्तं भारतारं घनं क्रमात् ॥ १३ ॥

भारतारसमायामं सपादं सार्धमेव च ।
पादोशद्विगुणायारं द्विगुणायाममेव च ॥ १४ ॥



सपादद्विगुणायामं द्विगुणार्धमथापि वा ।
त्रिपादद्विगुणं वाऽपि त्रिगुणं भारमायतम् ॥ १५ ॥

एवं नवविधं प्रोक्तमिष्टायामं परिग्रहेत् ।
तद्बारञ्च ललाटे च पट्टिका योजयेद्दृढम् ॥ १६ ॥

भारस्यार्धं विशालोच्चं तस्याधो चोपधारकम् ।
उपधानादयो देशे चाक्षं तिर्यक् समुन्नयेत् ॥ १७ ॥

षड्वितस्तिसमारभ्य एकैकांगुलवर्धनात् ।
त्रयोदशवितस्त्यन्तमक्षयाममुदाहृतम् ॥ १८ ॥

अक्षस्याधो शिखां कुर्यादायसा वा स्वदारुणा ।
दण्डाग्रे चक्रवास्याधः कीलेनैव तु योजयेत् ॥ १९ ॥

भारस्योपरिदेशे तु शक्तिं कुर्यान्नवांगुलम् ।
मध्यभारो मुखे चोर्ध्वे द्वित्रिहस्तोन्नतं तु वा ॥ २० ॥

उपधानादधस्तात्तु कुलीरांघ्रचक्षवेशनम् ।
षडंगुलसमारभ्य द्वित्र्यंगुलविवर्धनात् ॥ २१ ॥

एकहस्तावसानान्तमधः पट्टेन बन्धयेत् ।
यथेष्टञ्च स्मृतं नालं चक्राग्रे मुकुलान्वितम् ॥ २२ ॥

तन्मूले ग्राहकं भूष्यं मुष्टिबन्धादिबन्धितम् ।
भारोर्ध्वे तु ततः कुर्यात् पालिकां चोपपीठकम् ॥ २३ ॥

तत्तुङ्गं पञ्चमात्रान्तं व्यक्तिकं चाष्टमानकम् ।
पालिकोपरि मध्ये तु चोन्नतिश्चतुरश्रकम् ॥ २४ ॥

वितस्त्यैकं समारभ्य षट् षडंगुलवर्धनात् ।
सार्धद्विहस्तपर्यन्तं दारुवर्गादयं क्रमात् । २५ ॥

उपपीठादिपादाढ्यं सर्वालङ्कारसंयुतम् ।
तदूर्ध्वे रथमानस्य लक्षणं वक्ष्यतेऽधुना ॥ २६ ॥

भारारञ्च समारभ्य सार्धाधिकमेव वा ।
वितस्त्येकं समारभ्य त्रिर्यंगुलवर्धनात् ॥ २७ ॥

त्रिवितस्त्यन्तमुद्दिष्टं नवधा भारविस्तरम् ।
तद्बहिर्भद्रयुक्तं चेत्तन्मानेनैव कारयेत् ॥ २८ ॥

एकद्वित्रितलोपेतं तालाधिष्ठानवेदिवत् ।
वितस्त्येकं समारभ्य द्विर्यंगुलविवर्धनात् ॥ २९ ॥

अष्टाविंशांगुलान्तञ्च नवाधिष्ठानतुङ्गकम् ।
सैकात्क्रमांगुलारभ्य द्विर्यंगुलविवर्धनात् ॥ ३० ॥

नवविंशतिमात्रान्तं प्रत्येकं च यथा भवेत् ।
एवं तलोदयं प्रोक्तं चैकादित्रितलान्तिकम् ॥ ३१ ॥

एकादिनवतालान्तं भारतोर्ध्वं प्रकल्पयेत् ।
एकादिचोर्ध्ववेदीनां पीठमानं प्रवेशयेत् ॥ ३२ ॥



वितस्त्येकं समारभ्य द्विर्यंगुलविवर्धनात् ।
एकहस्तावसानन्तु पञ्चधा तालवेशनम् ॥ ३३ ॥

एकनेत्रं त्रिनेत्रं वा द्विमुखं वा चतुर्मुखम् ।
एवमेवं रथाः सर्वे भद्रदेशे मुखं मतम् ॥ ३४ ॥

भारं भारोपधानञ्च भारोपरि च चांत्रिकम् ।
दारुवर्गसमायुक्तं भद्रहीनं त्रिचक्रयुक् ॥ ३५ ॥

नाम्ना विजयमित्युक्तं विश्वामित्र महामुने ।
चतुश्चक्रसमायुक्तं दारुवर्गसमन्वितम् ॥ ३६ ॥

चतुरश्रमेकतालं रथं कान्तमिति स्मृतम् ।
चक्रं पञ्चसमायुक्तं चैकं तद्विनलन्तु वा ॥ ३७ ॥

श्रीकेशं नामतः प्रोक्तं प्रसारिततलं क्रमात् ।
ततश्चक्रस्य चैकं चेद्विशालमितिकीर्तितम् ॥ ३८ ॥

तदेकपृष्ठभद्रं चेत् श्रीभूतमिति कथ्यते ।
पुरतः पार्श्वयोर्भद्रं नाम्ना तत्त्रिविशालकम् ॥ ३९ ॥

द्वे चतुर्भद्रयुक्तं चेद्भद्रमित्यभिधीयते ।
रसादिदशचक्रान्तं संयुक्तं त्रितलान्वितम् । ४० ॥

चतुर्मुखं रथं प्रोक्तं नाम्ना भद्रविशालकम् ।
प्रासादवलयं कुर्यात् कूटशालादिमण्डितम् ॥ ४१ ॥

यथा तलं यथा शोभं तदा युञ्जीत वर्धनम् ।
अधिकं सोचपट्टैश्च योजनीयं विचक्षण: ॥ ४२ ॥

सुवर्णभारताम्रश्च तद्रव्या द्वादशान्तं यथा बलम् ।
तलेषु भद्रसंयुक्तं वा चोर्ध्वे चतुरश्रकम् ॥ ४३ ॥

वेदिकोपरि सर्वत्र पादादिस्तूपिकान्तरम् ।
एकतोऽनेकतालं वा पादोर्ध्वे द्वितलं भवेत् ॥ ४४ ॥

शालाकूटं विना वाऽपि वैकास्यैकतलन्तुवा ।
नानावर्णैश्च वस्त्रैश्च स्तम्भादूर्ध्वमलङ्करेत् ॥ ४५ ॥

नानाध्वजसमोपेतं नानादामैश्च चामरै: ।
ऊर्ध्ववेद्युपरिष्टात्तु सिंहरूपाम्बिकासनम् ॥ ४६ ॥

नित्ये नैमित्तिके वाऽपि कुर्यादासनमुत्तमम् ।
अथवा वेदिकाधारं देवासनमुदीरितम् ॥ ४७ ॥

आयादिशुभवर्गाढ्यं सर्वालङ्कारसंयुतम् ।
दारुवर्गेषु सर्वत्र कुर्यात्स्कन्दविनोदनम् ॥ ४८ ॥

रथमेवञ्च संपाद्य प्रतिष्ठां संप्रकारयेत् ।
सर्वमासे प्रकर्तव्यं शुक्लपक्षे शुभे दिने ॥ ४९ ॥

तैलाभ्यंगं रथं कृत्वा शुद्धोदैरभिषेचयेत् ।
पञ्चगव्येन संप्रोक्ष्य पुण्याहप्रोक्षणं तथा ॥ ५० ॥



अस्त्रेणार्घ्यजलेनैव प्रोक्ष्य गन्धादिनार्चयेत् ।
कौतुकं बन्धयेत् पद्मं मुखे तु हृदयेन तु ॥ ५१ ॥

वस्त्रैराच्छाद्य तद्देशं तत्त्वतत्त्वेश्वरं न्यसेत् ।
मूर्तिमूर्तीश्वरोपेतं यथाविधि समर्चयेत् ॥ ५२ ॥

दक्षिणेषु च चक्रेषु यजेत्कुर्याद्दिशां पतिम् ।
इन्द्रमक्षेषु भारेषु यजेदाधारशक्तिकाम् ॥ ५३ ॥

उपपीठे गजं न्यस्त्वा तदूर्ध्वेऽनन्तमर्चयेत् ।
गन्धस्तम्भेषु सर्वेषु धर्माधर्मादि विन्यसेत् ॥ ५४ ॥

देवासनेऽधच्छदने मूर्ध्वच्छदनमूर्ध्वत: ।
कर्णिका नवशक्तीश्च सुब्रह्मण्यासनं तथा ॥ ५५ ॥

जयन्ताद्यष्टविद्येशा रथाधिपतय: स्मृता: ।
मयूर: शिखिराशीशा: सेनानी स्तूविनायका: ॥ ५६ ॥

रथाग्रे पार्श्वयोर्वापि मण्डपं कल्पयेत्सुधी: ।
षोडशस्तम्भसंयुक्तं मध्ये वेदिसमन्वितम् ॥ ५७ ॥

सर्वालङ्कारसंयुक्तं गोमयालिप्तभूतलम् ।
कुण्डानि परित: कृत्वा नव पञ्चैकमेव वा ॥ ५८ ॥

प्रधानन्तु षडश्रं स्यात्सर्वलक्षणसंयुतम् ।
वेद्यूर्ध्वे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभि: ॥ ५९ ॥

कूर्चादि सहितं तस्य तत्तत्कुम्भान् न्यसेत्ततः ।
तत्र वध्ये गुहं पूर्वे भानुमिन्दुं तथानले ॥ ६० ॥

दक्षिणे दृढमाधारं शक्तिं निऋतिगोचरे ।
गजं मयूरं वरुणे वायव्येन तमर्चयेत् ॥ ६१ ॥

धर्मादि चोत्तरे शेषमीशाने गोचरे तथा ।
गन्धाद्यैरर्चयित्वाथ होमकर्मसमाचरेत् ॥ ६२ ॥

अग्न्याधानादिकं सर्वमग्निकार्यो क्रमाचरेत् ।
गुहं साम्बं प्रधानान्तमष्टनूर्तिपरेषु च ॥ ६३ ॥

अर्चयेदेककुण्डेषु गुहमूर्तिञ्च तत्र वै ।
पालाशोदुम्बरोश्वत्थ वटाः पूर्वादिदिक्षु च ॥ ६४ ॥

शम्यपामार्गमायूरंवु शयेव विदिक्षु च ।
प्रधाने तु पलाशःस्यात्समिधः संप्रकीर्तितः ॥ ६५ ॥

समिधाज्यान्नलाजैश्च तिलैश्चैव प्रियंगुभिः ।
स्कन्दमूलेन चांगैश्च होमयेत्तु यथाक्रमम् ॥ ६६ ॥

शतमर्धं तदर्धं वा जुहुयाद्देशिकोत्तमः ।
पूर्णां हुत्वा द्वितीयेऽह्नि यागेशानर्च्य देशिकः ॥ ६७ ॥

स्नात्वा शुक्लाम्बरधरः शुचिर्भूत्वा समाहितः ।
मुहूर्ते समनुप्राप्ते मन्त्रन्यासं समाचरेत् ॥ ६८ ॥



तत्तत्कुम्भस्थतोयेन तत्तद्देवान् ततस्थले ।
जयादिरभ्याधानञ्च राष्ट्रभृच्च हुनेत्क्रमात् ॥ ६९ ॥

कुम्भानुद्धृत्य शिरसा पूरयेत्तु यथाक्रमम् ।
अनुक्तमन्यतो ग्राह्यमधिकं नैवदोषभाक् ॥ ७० ॥

देशिकस्य तु यच्चित्तं देवानान्तुष्टिकारकम् ।
मूर्तिधारास्तु दैवज्ञादधिकं तोषयेत्ततः ॥ ७१ ॥

एवं यः कुरुते मर्त्यः स पुण्याङ्गतिमाप्नुयात् ।
इहैव पुत्रधनवान् प्राप्नुयाद्वाञ्छितं फलम् ॥
सोऽन्तेप्सरगणैः सेव्यो विमानं सर्वकामिकम् ॥ ७२ ॥

इति श्रीकुमारतन्त्रे रथप्रतिष्ठाविधिर्नामचतुश्चत्वारिंशत्पटलः

---

## पञ्चचत्वारिंशत्पटलः

### महाभिषेकविधिः

महाभिषेकं वक्ष्येऽहं स्कन्दस्य शृणु कौशिक ।
धर्मार्थकाममोक्षार्थं शान्तिकं पौष्टिकं शुभम् ॥ १ ॥

आयुः श्रीवर्धनं पुण्यं सर्वव्याधिविनाशनम् ।
रिपुक्षयं राज्यलाभं बालानां वृद्धिकारकम् ॥ २ ॥

एकाहञ्च त्र्याहञ्च पञ्चाहं त्वभिषेचयेत् ।
कृत्तिकायां विशाखायां षष्ठ्यां वाङ्गारवारके ॥ ३ ॥

यजमानस्य नक्षत्रे शुभयोगे शुभावहम् ।
रिपुक्षयार्थं पञ्चाहं त्र्यधाहं सर्वकामदम् ॥ ४ ॥

एकाहं रोगनाशार्थं कारयेन्मुनिपुङ्गव ।
पूर्वेद्युरंकुरान् पाद्यं कौतुकं बन्धयत्ततः ॥ ५ ॥

क्षीराभिषेचनं कृत्वा पायसन्तु निवेदयेत् ।
निर्वाणदीपं तद्रात्रौ गोघृतेनैव कारयेत् ॥ ६ ॥

प्रातस्नानादिकं कृत्वा शिष्यैश्चैव गुरुस्ततः ।
गोमयालेपनं कृत्वा पुण्याहं प्रोक्षणं ततः ॥ ७ ॥

जलभाण्डानि कलशान् पाद्याचमनपात्रकम् ।
पटलीसमहाकारं सर्वलक्षणसंयुतम् ॥ ८ ॥

अस्त्रेण क्षाल्यतोयैश्च न्यसेद्दत्वासनोपरि ।
निरीक्ष्य हृदयेनैव प्रोक्षयेत्पुरुषेण च ॥ ९ ॥

ताडनं हुंफडन्तास्त्रैर्दर्शनं सद्यममन्त्रतः ।
नेत्रेणोन्मीलनं कुर्यात्कवचेनावकुण्ठनम् ॥ १० ॥

वस्त्रपूतैश्च तोयैश्च जलभाण्डानि पूरयेत् ।
एलालवङ्गकर्पूरगन्धपुष्पजलान्वितैः ॥ ११ ॥

पञ्चाङ्गभूषणैर्युक्तं शिष्यैः सह गुरुस्ततः ।
अङ्गन्यासकरन्यासमन्तर्यागं समाचरेत् । १२ ॥



प्राणप्रकृतियोगन्तु ज्ञात्वा कर्मसमाचरेत् ।
वर्धनीकुम्भकलशान् सूत्रेणैव तु वेष्टयेत् ॥ १३ ॥

देवाग्रे वाऽपि वर्तव्यं मण्डपे स्नपनादिकम् ।
शालिभिस्तण्डुलन्तत्र कल्पयेन्मुनिसत्तम ॥ १४ ॥

कारयेद्विधिना पञ्चविंशतिस्नपनं कुरु ।
स्कन्दकुम्भं न्यसेन्मध्ये तत्पार्श्वे वर्धनीद्वयम् ॥ १५ ॥

पाद्यमाचमनं चार्घ्यं वस्त्रयुगगन्धतैलकम् ।
तिलकुम्भञ्च नीवारं प्रथमावरणे न्यसेत् ॥ १६ ॥

द्वितीयावरणे विद्वान् पूर्वादिषु प्रकल्पयेत् ।
मधुकेक्षुगुलं पश्चादुशीरं चन्दनन्तथा ॥ १७ ॥

तक्कोलं सर्वगन्धञ्च जातिं चैव मरुं तथा ।
कल्हारञ्च कदम्बञ्च मल्लिकाद्रोणमेव च ॥ १८ ॥

बीजलक्ष्मीप्रदानञ्च कैतकं पुष्पमेव च ।
एतत् षोडशकं द्रव्यमभ्यर्च्य स्वर्णतोयकम् ॥ १९ ॥

स्कन्दं शक्तिद्वयं मध्ये विद्येशान् प्रथमावृतौ ।
दिक्पालान् वसूंश्चापि द्वितीयावरणे न्यसेत् ॥ २० ॥

तत्पश्चिमदिशि स्थाप्य पञ्चगव्यं विधानतः ।
स्थण्डिलं पश्चिमं तस्य कल्प्य पञ्चामृतम्बुधः ॥ २१ ॥

क्षीरन्तु मध्यमे स्थाप्य गोमूत्रं पूर्व एव च ।
आग्नेये गोमयं न्यस्त्वा याम्ये दधि महामुने ॥ २२ ॥

आज्यं निर्ऋतिदेशे तु पश्चिमे मधु विन्यसेत् ।
फलसारन्तु वायव्ये सौम्ये स्यादिक्षुसारकम् ॥ २३ ॥

ऐशान्यां नालिकेरञ्च नवद्रव्यमिहोच्यते ।
प्रस्थमर्धं तदर्धञ्च प्रस्थं कुडुपमेव च ॥ २४ ॥

कुडुपञ्च चतुःप्रस्थं प्रस्थं त्रिःप्रस्थमेव च ।
एवं क्षीरादिसंकल्प्य प्रोक्षयेदस्त्रमन्त्रतः ॥ २५ ॥

अभ्यङ्गञ्च ततः कृत्वा पञ्चगव्याभिषेचनम् ।
आधाराधेयपूजाञ्च कुर्यादावाहनाष्टकम् ॥ २६ ॥

पञ्चामृतादिसंपूज्य स्नपनेन ततः परम् ।
पूजयेत्स्कन्दमूलेन ब्रह्ममूर्त्यङ्गमन्त्रतः ॥ २७ ॥

स्कन्दसूक्तेन मन्त्रज्ञः कुमारायेति मन्त्रतः ।
अयं कुमारमन्त्रेण माते कुमारमन्त्रतः ॥ २८ ॥

मालामन्त्रेण मतिमान् रुद्रसूक्तेन तत्परम् ।
श्रीरुद्रचमकाभ्याञ्च पुरुषसूक्तेन तत्परम् ॥ २९ ॥

षड्वारं मन्त्रितैर्मन्त्रैः स्नापयेत्पञ्चशान्तिकैः ।
वस्त्रोपवीतगन्धञ्च सर्वाण्याभरणानि च ॥ ३० ॥



दत्वाथ मन्त्रवित्कुर्यात्पञ्चावरणपूजनम् ।
विन्यसेन्मातृकान्यासं सैकत्रिंशत्कला मता ॥ ३१ ॥

तत्काले पुष्पदामैश्च सर्वत्रैव प्रकल्पयेत् ।
प्रभूतहविषं दत्वा यथाविभवविस्तरम् ॥ ३२ ॥

सर्वोपदेशसंयुक्तं नानापुष्पसमन्वितम् ।
नानाफलसमोपेतमाज्यपूर्णदधिप्लुतम् ॥ ३३ ॥

पानीयं मुखवासञ्च ताम्बूलञ्च विशेषतः ।
धूपदीपादिकं दत्वा गुहाग्निञ्च नयेत्ततः ॥ ३४ ॥

श्यामवृक्षसमिद्भिश्च वरुणं सर्पिषा हुनेत् ।
षडक्षरेण मन्त्रेण प्रत्येकं द्विसहस्रकम् ॥ ३५ ॥

अङ्गमन्त्रैर्दशांशं तु पूर्णाहुतिसमाचरेत् ।
स्विष्टकृच्च जयादिञ्च सर्वकामार्थसिद्धये ॥ ३६ ॥

स्वर्णपुष्पैश्च दानैश्च वाद्यैर्गीतैश्च नर्तनैः ।
जपैः प्रदक्षिणैः स्तोत्रैर्नमस्कारैश्च भक्तितः ॥ ३७ ॥

प्रीणयित्वा महासेनं प्रार्थयेदर्थमीप्सितम् ।
यान् यान् कामयते कामान् तांस्तान् सत्यमवाप्नुयात् ॥३८॥

आचार्यं पूजयेत्कर्ता गोभूमीधान्यकाञ्चनैः ।
वस्त्रहेमाङ्गुलीयैश्च दासीदासैश्च भक्तितः ॥
कुमारं गण्डरोगस्य नाशार्थमपि कारयेत् ॥ ३९ ॥

इति श्रीकुमारतन्त्रे महाभिषेकविधिर्नाम पञ्चचत्वारिंशत्पटलः

---

## षट्पञ्चाशत्पटलः

### स्कन्दकलान्यासविधिः

ततः स्कन्दकलान्यासं सैकत्रिंशत्कलास्मृतम् ।
स्कन्दसूक्तस्य षणमन्त्रैः सकलाभिर्न्यसेत् सुधीः ॥ १ ॥

सैकत्रिंशत्कलां वक्ष्ये शृणु कौशिक सुव्रत ।
जया बलोन्नता वामा नन्दिनी विजया रमा ॥ २ ॥

सेना माया च शान्ती च सत्या सूक्ष्मा सुमत्यपि ।
वज्रामृता यशश्चैव वरिष्ठा सुप्रतिष्ठिका ॥ ३ ॥

रुचिरा भ्रामिणी भूती मान्या जीवातुरेव च ।
शुद्धा कृपा सत्वरा च जगती वरदा ततः ॥ ४ ॥

कामदा हरिणी श्यामा सैकत्रिंशत्कला स्मृताः ।
स्कन्दसूक्तस्य षणमन्त्रैः प्रथमे षट्कला शिरः ॥ ५ ॥

द्वितीये षट्कला वक्त्रे तृतीये पञ्चमी कला ।
हृदये कण्ठदेशे तु बाह्वोर्नाभौ तु विन्यसेत् ॥ ६ ॥

वेदमन्त्रैः कला पञ्च कुक्षौ पृष्ठे ततः परम् ।
उरः स्थले च गुह्ये च शिश्ने चैव न्यसेद् बुधः ॥ ७ ॥

एते मन्त्रकला वेदा ऊर्वोर्जान्वोश्च विन्यसेत् ।
षष्ठे मन्त्रे कला पञ्च जङ्घयोः पादयोरपि ॥ ८ ॥



व्यापकांजलिना धीमान् न्यसेदेवं विधानतः ।
सैकत्रिंशत्कलान्यासं न ज्ञात्वा न समर्चयेत् ॥ ९ ॥

तस्मात् सर्वप्रयत्नेन न्यासं कृत्वार्पयेद् गुहम् ।
य एतत् कुरुते नित्यं सोऽग्निष्टोमफलं लभेत् ॥ १० ॥

### कलान्यासक्रमः

| | | |
|---|---|---|
| ओं जगद्भुवं जयायै नमः | ईशानमूर्ध्नि | १ |
| ओं बहुतो बलायै नमः | पूर्वमूर्ध्नि | २ |
| ओं हुतम् उन्नतायै नमः | दक्षिणमूर्ध्नि | ३ |
| ओं वचद्भुत्रे वामायै नमः | उत्तरमूर्ध्नि | ४ |
| ओं नमस्तेऽस्तु नन्दिन्यै नमः | पश्चिममूर्ध्नि | ५ |
| ओं विश्वभुवे विजयायै नमः | नैर्ऋतमूर्ध्नि | ६ |
| ओं जगद्भुवोऽधिपतिर्जरायै नमः | ईशानवक्त्रे | ७ |
| ओं सेनानीः सेनायै नमः | पूर्ववक्त्रे | ८ |
| ओं मयूरप्रियायै नमः | दक्षिणवक्त्रे | ९ |
| ओं षडाननः शान्त्यै नमः | उत्तरवक्त्रे | १० |
| ओं सत्त्वायाहं नमस्तेऽस्तु सत्यायै नमः | पश्चिमवक्त्रे | ११ |
| ओं सुखं वहस्व सूक्ष्मायै नमः | नैर्ऋतवक्त्रे | १२ |
| ओं सुब्रह्मण्य सुमत्यै नमः | हृदये | १३ |

| | | |
|---|---|---|
| ओं बृहस्पतेः सुतां प्रज्ञायै नमः | गले | १४ |
| ओं अस्य पद्मयोने अमृतायै नमः | दक्षिणबाहौ | १५ |
| ओं अयस्यात्मयशसे नमः | वामबाहौ | १६ |
| ओं वहने वहन्तु वरिष्ठायै नमः | नाभौ | १७ |
| ओं सुब्रह्मण्य सुप्रतिष्ठायै नमः | कुक्षौ | १८ |
| ओं रुद्रभुवे रुचायै नमः | पृष्ठे | १९ |
| ओं ब्रह्मभुवे भ्रमिण्यै नमः | उरसि | २० |
| ओं भुवद्भुवे भूत्यै नमः | गुह्ये | २१ |
| ओं अभूताय मान्यायै नमः | शिश्ने | २२ |
| ओं जगद्भुवे जीवातवे नमः | दक्षिणोरौ | २३ |
| ओं सुब्रह्मण्य रुद्धायै नमः | वामोरौ | २४ |
| ओं कृत्तिकासुतकृपायै नमः | दक्षिणजानुनि | २५ |
| ओं षष्ठाङ्गसत्त्वरायै नमः | वामजानुनि | २६ |
| ओं जगद्भुवे जगत्यै नमः | दक्षिणजङ्घायाम् | २७ |
| ओं वचद्भुवे वरदाय नमः | वामजङ्घायाम् | २८ |
| ओं स्कन्दविशाखिने कामदायै नमः | दक्षिणपादे | २९ |
| ओं हव्यं यस्माद्धरिभ्यै नमः | वामपादे | ३० |
| ओं षण्मुखाय श्यामायै नमः | व्यापकांजलिः | |

इति श्रीकुमारतन्त्रे स्कन्दकलान्यासविधिर्नाम षट्चत्वारिंशत्पटलः

---

## सप्तचत्वारिंशत्पटलः

### मातृकान्यासविधिः

श्रृणु कौशिक वक्ष्येऽहं सुब्रह्मण्यस्य मातृकाम् ।
भुक्तिमुक्तिप्रदं पुंसां सर्वोपद्रवनाशनम् ॥ १ ॥

केशान्ते मुखवृत्ते च नेत्रयोः श्रोत्रनासयोः ।
कर्णयोरोष्ठयोर्दन्तपंक्तौ मूर्ध्निमुखेस्वरम् ॥ २ ॥

कवर्गं दक्षिणे हस्ते चवर्गं वामहस्तके ।
टवर्गं दक्षपादे च तवर्गं वामपादके ॥ ३ ॥

पफौ पर्वद्वये न्यस्य बकारं पृष्ठदेशके ।
भकारं नाभिदेशे तु मकारं कुक्षिदेशके ॥ ४ ॥

यकारं हृदये न्यस्य रलौ दोर्मूलयोर्न्यसेत् ।
वकारं कण्ठपृष्ठे तु शषौ कक्षद्वये न्यसेत् ॥ ५ ॥

सहौ शिश्ने च गुह्ये च लकारं भुजयोर्न्यसेत् ।
क्षकारं व्यापकं शेषां सुब्रह्मण्यस्य मातृकाम् ॥ ६ ॥

तान्येतानि न चोक्तानि वर्णेश्वराननं श्रृणु ।
अमरेश्वर आराध्यस्तत इन्द्रपुरोगमाः ॥ ७ ॥

ईशपुत्र उमापुत्र ऊर्ध्वरेतो मम प्रिय ।
ऋणोत्रृणलन्यश्च लृहन्तैकनायकः ॥ ८ ॥

ऐश्वर्यप्रद ओजस्वी औपम्यरहितः पुमान् ।
ततोऽम्बुजासनक्षीणं तेषां स्युः स्वरदेवताः ॥ ९ ॥

कमण्डलुधरः खड्गपाणिर्गङ्गासुतस्ततः ।
घण्टाहस्तोऽङप्रियश्च चन्द्रशेखर ईरितः ॥ १० ॥

छन्दोमयश्चैव जगत्पतिश्च झषकेतुजित् ।
ञमूर्तिष्टङ्कहस्तश्च ठस्वरूपोऽथडम्बरः ॥ ११ ॥

ढक्कप्रियोणगम्यश्च तत्त्वरूपस्थपिष्टकः ।
दण्डपाणिर्धनुष्पाणिर्नगरन्ध्रकरस्ततः ॥ १२ ॥

तथैव पद्महस्तश्च फणिहस्तस्तथैव च ।
ततस्तु बहुलापुत्रो भवात्मज इतीरितः ॥ १३ ॥

महासेनो यज्ञमूर्ति रमणीयस्तथैव च ।
लम्बोदरानुजश्चैव वचद्रूः शरसंभवः ॥ १४ ॥

षण्मुखः सर्वलोकेशो हरात्मज इति स्मृतः ।
लक्ष्मीवांश्च क्षमाक्षेत्रः कादिक्षान्ताधिदेवताः ॥ १५ ॥

अकारादिक्षकारान्तं न्यसेद्देहे स्वनामभिः ।
प्रणवादिनमोऽन्तैश्च ब्राह्मणक्षत्रियोऽपि वा ॥ १६ ॥

वैश्यो वाप्यथ शूद्रो वा सुब्रह्मण्याख्यमातृकाम् ।
जपकाले जपेद्यस्तु जयसिद्धिमवाप्नुयात् ॥ १७ ॥



पूजाकाले न्यसेदेतत्प्रतिष्ठाकाल एव च ।
गायत्रीजपकाले तु सुब्रह्मण्यस्य मातृकाम् ॥ १८ ॥

यः करोति मुखं तस्य सहस्रगुणितं फलम् ।
सप्तजन्म भवेद्विप्रः सोऽन्ते कौमारमाप्नुयात् ॥ १९ ॥

इति श्रीकुमारतन्त्रे मातृकान्यासविधिर्नाम सप्तचत्वारिंशत्पटलः

---

## अष्टचत्वारिंशत्पटलः

### सुब्रह्मण्यकवचविधिः

सुब्रह्मण्यस्य कवचं वक्ष्येऽहं शृणु कौशिक ।
सर्वपापप्रशमनं सर्वोपद्रवनाशनम् ॥ १ ॥

ब्रह्मानुष्टुप्छन्दः सुब्रह्मण्यस्य देवता ।
षान्तदीर्घेण कल्पेन षडङ्गन्यासकल्पना ॥ २ ॥

ध्यानम्—

सिन्दूरारुणमिन्दुकान्ति वदनं केयूरहारादिभिः
दिव्यैराभरणैर्विभूषिततनुः स्वर्गस्य सौख्यप्रदम् ।
अम्भोजाभयशक्तिकुक्कुटधरं रक्ताङ्गरागोज्वलं
सुब्रह्मण्यमुपास्महे प्रणमतां भीतिप्रणाशोद्यतम् ॥ ३ ॥

सुब्रह्मण्योऽग्रतः पातु सेनानीः पातु पृष्ठतः ।
गुहो मां दक्षिणे पातु भूपतिः पातु वामतः ॥ ४ ॥

शिरः पातु महासेनः स्कन्दो रक्षेल्ललाटकम् ।
नेत्रयोर्द्वादशाक्षश्च श्रोत्रं रक्षतु विश्वभूः ॥ ५ ॥

मुखं मे षण्मुखः पातु नासिकां मकरात्मजः ।
ओष्ठं वल्लीपतिः पातु जिह्वां पातु षडक्षरः ॥ ६ ॥

देवसेनापतिर्दन्तान् चिबुकं बहुलासुतः ।
कण्ठं तारकजित्पातु बाहुं द्वादशबाहुमान् ॥ ७ ॥

हस्तौ शक्तिधरः पातु वक्षः पातु शरोद्भवः ।
हृदयं ब्रह्मभूः पातु कुक्षिं पात्वम्बिकासुतः ॥ ८ ॥

नाभिं शंभुसुतः पातु कटिं पातु हरात्मजः ।
ऊरुं पातु गजारूढो जानू द्वे जाह्नवीसुतः ॥ ९ ॥

जङ्घे विशाखो मे पातु पादयोः शिखिवाहनः ।
सर्वाण्यङ्गानि भूतेशः सप्तधातूंश्च षण्मुखः ॥ १० ॥

संध्याकाले निशीथिन्यां मध्याह्ने दुस्तरे जले ।
दुर्गमे च महारण्ये राजद्वारे सहायके ॥ ११ ॥

तुमुले रणमध्ये च सर्पदुष्टमृगादिषु ।
चोरादिसाध्वसेऽभेद्ये ज्वरादिव्याधिपीडिते ॥ १२ ॥

दुष्टग्रहादिभीतौ च दुर्निमित्तादिभीषणे ।
अस्त्रशस्त्रनिपातेषु त्रातु मां क्रौञ्चरन्ध्रकृत् ॥ १३ ॥



सुब्रह्मण्यस्यकवचमिष्टसिद्धिफलं भवेत् ।
तस्य तापत्रयं नास्ति सत्यं सत्यं वदाम्यहम् ॥ १४ ॥

धर्मार्थी लभते धर्मानर्थार्थी चार्थमाप्नुयात् ।
कामार्थी लभते कामान् मोक्षार्थी मोक्षमाप्नुयात् ॥ १५ ॥

यत्र यत्र जपेत् तत्र तत्र संनिहितो गुहः ।
पूजाप्रतिष्ठाकाले च जपकाले पठेदिदम् ॥ १६ ॥

तेषामेव फलावाप्त्यै महापातकनाशनम् ।
यः पठेच्छृणुयाद्भक्त्या नित्यं देवस्य संन्निधौ ॥
सर्वान् कामानिह प्राप्य सोऽन्ते स्कन्दपुरं व्रजेत् ॥ १७ ॥

इति श्रीकुमारतन्त्रे सुब्रह्मण्यकवचविधिर्नाम अष्टचत्वारिंशत्पटलः

---

## एकोनपञ्चाशत्पटलः

### प्रदक्षिणनमस्कारविधिः

प्रदक्षिणनमस्कारविधिं शृणु वदाम्यहम् ।
प्रदक्षिणत्रयं कृत्वा नमस्कारन्तु पञ्चकम् ॥ १ ॥

पुनः प्रदक्षिणं कृत्वा पुनर्जन्म न विद्यते ।
यानि कानि च पापानि जन्मान्तरकृतानि च ॥ २ ॥

तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ।
प्रभाते भुक्तिदम्प्रोक्तं मध्याह्ने भुक्तिमुक्तिदम् ॥ ३ ॥

रात्रौ च मोक्षदं प्रोक्तं षण्मुखस्य प्रदक्षिणम् ।
आत्मप्रदक्षिणे विप्रा दक्षिणेनैव कारयेत् ॥ ४ ॥

कुमारगजयोर्मध्ये नैव कार्यन्तु लङ्घनम् ।
परिवारालयं तत्र लङ्घयेन्नैव दोषभाक् ॥ ५ ॥

गजवालाग्रकं स्पृष्ट्वा कुम्भमध्येऽवलोकयेत् ।
सर्वपापविनिर्मुक्तः स्कन्दलोके महीयते ॥ ६ ॥

पद्भ्यां कराभ्यां शिरसा पञ्चाङ्गः स्यात् प्रमाणकम् ।
उरसा शिरसा दृग्भ्यां मनसा वचसा तथा ॥ ७ ॥

पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ।
बामपार्श्वे शिरो न्यस्त्वा सव्यपादे प्रलम्बितौ ॥ ८ ॥

नमस्कारः प्रकर्तव्यः प्रागादिद्वारवेश्मसु ।
नित्यानुष्ठानकर्मान्ते प्रकर्तव्यं प्रदक्षिणम् ॥ ९ ॥

उपोषितः शुचिः स्नात्वा यः करोति प्रदक्षिणम् ।
सहस्रं श्रद्धया धीमान् अश्वमेधफलं लभेत् ॥ १० ॥

पुनः प्रदक्षिणं कुर्यात्सुमित्रेशं प्रदर्शयेत् ।
प्रदक्षिणान् स्वेन कृतान् वित्तादर्धफलं लभेत् ॥ ११ ॥

अङ्गप्रदक्षिणत्वेन तुल्यं कोटिप्रदक्षिणम् ।
गुहाग्रे देवमभ्यर्च्य करसंस्फोटनादिभिः ॥ १२ ॥



उड्डीयन्ते शरीरस्थाः महापातककोटयः ।
पातकानि च सर्वाणि मोक्तुं कामयते च यः ॥
कुमारगजयोर्मध्ये दण्डवत्प्रणमेन्नरः ॥ १३ ॥

इति श्रीकुमारतन्त्रे प्रदक्षिणनमस्कारविधिर्नाम एकोनपञ्चाशत्पटलः

---

## पञ्चाशत्पटलः

### आचार्यलक्षणविधिः

आचार्यलक्षणं वक्ष्ये शृणु कौशिक सुव्रत ।
आर्यावर्तभृतो गोत्रः सूत्रं चैव समन्वितम् ॥ १ ॥

आदिशैवकुलोद्भूतः शिवद्विज उदीरितः ।
परार्थपूजनं तेन कर्तव्यं मुनिपुङ्गव ॥ २ ॥

शिवागमपुराणज्ञो गुहपूजाविधानवित् ।
वेदवेदाङ्गतत्त्वज्ञो जपहोमविधानवित् ॥ ३ ॥

देवाग्निगुरुभक्तिश्च मेधावी कुशलः शुचिः ।
सर्वावयवसंपूर्णः समयाचारसंयुतः ॥ ४ ॥

कुलीनः सर्वशास्त्रज्ञः सत्यवादी जितेन्द्रियः ।
शिवशास्त्ररतश्चैव परशास्त्रपराङ्मुखः ॥ ५ ॥

शिखया बद्धकेशी वा भस्मोद्धूलितविग्रहः ।
दम्भासूयादिरहितः समयाचारपालकः ॥ ६ ॥

प्रत्युत्पन्नमनः शान्तस्तपस्वी प्रियदर्शनः ।
उपवीतञ्च रुद्राक्षमुष्णीषं चोत्तरीयकम् ॥ ७ ॥

भस्मशैवादिशैवानां पञ्चमुद्रा प्रकीर्तिताः ।
एवमादिगुणोपेतः कारयेत्स्वामिपूजनम् ॥ ८ ॥

नास्तिकोऽप्यशुभः क्रुद्धो देवाग्निगुरुनिन्दकः ।
कुष्ठाङ्गी कुमुखी चैव परदाररतोऽशुचिः ॥ ९ ॥

कुसुमाक्षश्च विकटो मात्सर्यो मददम्भयुक् ।
मधुमांसरतः पापी चोरो रोगसमावृतः ॥ १० ॥

विकलाङ्गोऽतिरिक्ताङ्गश्श्यावदन्तः सुकुब्जकः ।
कुण्डको गोलकश्चैव समयाचारवर्जितः ॥ ११ ॥

एवमादिगुणोपेतं वर्जयेत्स्वामिपूजने ।
कारयेद्यदिमोहेन कर्ता भर्ता विनश्यति ॥ १२ ॥

स्वयंभुलिङ्गे विच्छिन्ने गौरीहीनेऽपि पूजयेत् ।
आचार्यः पत्निहीनश्चेत् न दोषो मन्त्रविग्रहः ॥ १३ ॥

उत्सवस्य तु मध्ये वा प्रतिष्ठादिनमध्यमे ।
सूतके प्रेतकार्ये च आचार्यस्य न विद्यते ॥ १४ ॥

न लिप्यते मलैः सोऽपि पद्मपत्रमिवाम्भसा ।
शावकं कर्म कृत्वा तु स्नात्वा देवालयं विशेत् ॥ १५ ॥



महोत्सवे समाप्तौ च शेषकर्म समाचरेत् ।
शिवः क्रुद्धो गुरुस्त्राता गुरुः क्रुद्धो गुहेन च ॥ १६ ॥

गुरुस्तुष्टो गुहस्तुष्टस्तस्मात् संप्रीणयेद्गुरुम् ।
यावत्तोषणमाचार्यस्तावद्देवस्तु तोषणम् ॥ १७ ॥

इति श्रीकुमारतन्त्रे आचार्यलक्षणविधिर्नाम पञ्चाशत्पटलः

## एकपञ्चाशत्पटलः

### सायरक्षाविधिः

सायरक्षाविधिं वक्ष्ये शृणु कौशिक सुव्रत ।
सर्वलोकहितार्थाय सर्वप्राणिसुखावहम् ॥ १ ॥

विशेषाद्बालरक्षार्थं सायरक्षां महामुने ।
जनानां नयनोच्छिष्टनिवृत्त्यर्थं प्रदोषके ॥ २ ॥

धूपदीपावसाने तु सायरक्षां समाचरेत् ।
सौवर्णं राजतं ताम्रं कांस्यमेवास्य पात्रकम् ॥ ३ ॥

विंशत्यङ्गुलविस्तारमोष्ठमेकांगुलं भवेत् ।
एकांगुलं समारभ्य रव्यंगुलसमावधि ॥ ४ ॥

दीपाधारन्तु तन्मध्ये वृत्ताकारं प्रकल्पयेत् ।
नवदीपयुतं श्रेष्ठं पञ्चदीपन्तु मध्यमम् ॥ ५ ॥

कन्यसं त्वेकदीपन्तु युक्त्या युञ्जीत बुद्धिमान् ।
दीपाधारेषु सर्वेषु वर्ति गोघृतसंयुतम् ॥ ६ ॥

हस्तांगुलसमुत्सेधं कर्पूरावर्तिरन्तकम् ।
सुब्रह्मण्यश्च लोकेशो नवदीपाधिदेवताः ॥ ७ ॥

महादिग्देवता स्कन्दः पञ्चदीपाधिदेवताः ।
एकदीपे गुहं प्रोक्तं चतुष्पात्राभितो न्यसेत् ॥ ८ ॥

निम्बपत्रं सर्षपश्च ततः कार्पासबीजकम् ।
लवणञ्च क्रमान्न्यस्य द्रव्यं प्रसृतिमात्रकम् ॥ ९ ॥

एवं सर्वं समासाद्य मण्डपाभ्यन्तरे बुधः ।
स्कन्दायतनयोषिद्भिरथवा परिचारकैः ॥ १० ॥

तानि पात्राणि सर्वाणि वाहयित्वा विचारतः ।
समानीय गुहस्याग्रे न्यस्त्वा वर्तीन् प्रदीपयेत् ॥ ११ ॥

सायं रक्षा प्रकर्तव्या धूपदीपावसानके ।
गुहस्याचमनं दत्वाभ्यर्च्य तन्मूलमन्त्रतः ॥ १२ ॥

अर्चयित्वा विधानेन वह्निबीजमनुस्मरन् ।
अस्त्रेणैव तु मन्त्रेण दिग्विरेचनमाचरेत् ॥ १३ ॥

मुकुलीं पद्ममुद्राञ्च दर्शयेद्देशिकेन तु ।
धूपदीपौ समौ दत्वा नृत्तं वाद्यं समाचरेत् ॥ १४ ॥



धूपं धूरसिमन्त्रेण दीपमुद्दीप्यमन्त्रतः ।
सायं रक्षां प्रदीप्याथ धूपदीपं ततो न्यसेत् ॥ १५ ॥

जगद्भुवादिमन्त्रेण सायं रक्षा प्रदापयेत् ।
त्रिवारं परया भक्त्या भ्रामयेत्स्कन्दमूर्धनि ॥ १६ ॥

नृत्तवाद्यं समायुक्तं शङ्खध्वनिसमन्वितम् ।
भेरीमृदङ्गवाद्यैश्च स्तोत्रशब्दैः समन्वितम् ॥ १७ ॥

द्रव्याण्यथ क्रमाद्विद्वानावर्त्यावर्त्य मूर्धनि ।
सायं रक्षां प्रदत्वैव दद्याच्छिष्यकरे ततः ॥ १८ ॥

पात्रापात्रविधानेषु करं प्रक्षाल्य देशिकः ।
पश्चादाचमनं दत्वा प्रणवेन तु मन्त्रतः ॥ १९ ॥

ततोऽस्य स्तबकं गृह्य कर्पूरादिसुगन्धियुक् ।
गृहीत्वा मुद्रया शक्त्या भ्राम्य स्कन्दोपरि त्रिधा ॥ २० ॥

प्रक्षिपेद्दीपपात्रेषु कर्तव्यं स्कन्धमूर्धनि ।
अस्त्रेण विन्यसेदीषत् दक्षिणे धारयेत्ततः ॥ २१ ॥

पार्श्वयोर्हृदयेनैव विन्यसेद्भस्म मन्त्रवित् ।
बृन्दञ्च चामरं छत्रं दर्पणञ्च निदर्शयेत् ॥ २२ ॥

तानि पात्राणि गणिका मूर्ध्नादिभिर्धृतानि हि ।
सर्वातोद्यसमायुक्तं पूर्वे वा चोत्तरेऽपि च ॥ २३ ॥

वर्तिद्रव्यं तत्र त्यक्त्वा पुनः पात्राणि संगृहेत् ।
सायरक्षां च देवाय दिनं प्रति दिनं प्रति ॥ २४ ॥
एवं यः कुरुते मर्त्यो राजा विजयमाप्नुयात् ।

इति श्रीकुमारतन्त्रे सायरक्षाविधिरेकपञ्चाशत्पटलः

श्लोकसंख्या ॥ ३५२३ ॥

॥ इति श्रीमल्ललितागमभेदे कुमारतन्त्रं संपूर्णम् ॥

शयनविधिपटलः कोशेषुत्यक्तः ।

॥ शुभम् ॥



## दक्षिणभारत-अर्चक सङ्घः

कौमारसंहिता ॥

कामिकागमः ॥

(पूर्व-उत्तरम्)

बोधायनपूर्वप्रयोगादर्शः ॥

(एते मुद्रणे वर्तन्ते)

---

Elango Achukoodam, Madras-600004.